जीवति सति पौत्रप्रभृत्यपत्यं युवसंज्ञं भवति। पौत्रप्रभृतीति च न सामानाधिकरण्येनापत्यं विशेषयति, किं तर्हि ? षष्ठ्या विपरिणम्यते – पौत्रप्रभृतेर्यदपत्यमिति। तेन चतुर्थादारभ्य युवसंज्ञा विधीयते। गार्ग्यायणः। वात्स्यायनः।

तुशब्दोऽवधारणार्थः – युवैव भवति, न गोत्रमिति ॥

पदमञ्जरी

नानन्तरान्न मूलप्रकृतेः। तस्माद्वाक्येनैवाभिधानं प्राप्नोति—गर्गस्यापत्यं गार्गेरपत्यमिति। एतेनोपगोस्तृतीयो जीवद्वंश्यो व्याख्यातः, तस्माद्वैयधिकरण्येन विशेषणमित्याह—*पौत्रप्रभृतीति*। *षष्ठी विपरिणम्यत इति*। अत्र च व्याख्यानमेव शरणम्।

*तुशब्दोऽवधारणार्थ इति*। अनेकार्थत्वान्निपातानां भिन्नक्रमो युवशब्दानन्तरं द्रष्टव्य इत्याह—*युवैव भवति, न गोत्रमिति*। असत्यवधारणे एकसंज्ञाधिकारादन्यत्र संज्ञायां समावेशाभ्युपगमात्कृत्यप्रत्ययसंज्ञानामिव गोत्रयुवसंज्ञयोः समावेशः स्यात्। अस्तु, को दोषः ? यस्कस्यापत्यं गोत्रम् 'शिवादिभ्योऽण्' तदन्ताद्यूनि 'अणो द्व्यचः' इति फिञ्, वृद्धौ, यस्येति लोपे कृते यास्कायनिरिति। बहुषु 'यस्कादिभ्यो गोत्रे' इति फिञो लुक् प्रसज्येत; एकदेशविकृतस्यानन्य-

न्यासः

प्रबन्धः = सन्तानः, तत्र भवो वंश्य इति दिगादित्वाद्यत्। पौत्रप्रभृत्यपत्यमिति। षष्ठीसमासः। पौत्रप्रभृतीति चेत्यादि। यदि पौत्रप्रभृतीत्येतत् सामानाधिकरण्येनापत्यं विशेषयेत् पौत्रप्रभृति यदपत्यमिति तदारभ्य युवसंज्ञा स्यात्, तस्मान्नैतत् सामानाधिकरण्येनापत्यस्य विशेषणम्, किं तर्हि ? अर्थाद् विभक्तिविपरिणामे कृते षष्ठ्यन्ततामापन्नं वैयधिकरण्येन पौत्रप्रभृतेर्यदपत्यमिति, तथा सति यदिष्टं सम्पद्यते तद् दर्शयितुमाह—तेनेत्यादि। यत एवं विभक्तिविपरिणामे कृते पौत्रप्रभृतीत्यनेन षष्ठ्यन्तेनापत्यं विशेष्यते तेन चतुर्थादारभ्य युवसंज्ञा विधीयते, तस्य च विभक्तिपरिणामस्यापत्यं हेतुः। अपत्यशब्दो हि सम्बन्धिशब्दत्वाद्धेत्वाद्यपेक्षते, तत्र षष्ठ्या हेतुर्भवति। सन्निहितत्वाच्च। पौत्रप्रभृति तस्येत्येतदेवापेक्षते, ततस्तत्रैव षष्ठीं प्रकल्पयति। यदि तर्ह्यपत्यग्रहणसामर्थ्यात् पौत्रप्रभृतेः षष्ठीविपरिणामो भवति, पूर्वसूत्रेऽपि कस्मान्न भवति ? तत्र प्रथमाया अनवकाशत्वात्। पूर्वसूत्रे ह्यकृतार्था प्रथमा, ततो न शक्यते तस्याः षष्ठीं विपरिणमयितुम्। इह तु कृतार्था शक्यते षष्ठीभावेन विपरिणमयितुम्। गार्ग्यायण इति। इह युवसंज्ञायां सत्याम् 'गोत्राद् यून्यस्त्रियाम्' इति गोत्रप्रत्ययान्ताद् यूनि प्रत्ययो भवति। तुशब्दोऽवधारणार्थ इति। कः पुनः संज्ञासमावेशे दोषः कथ्यते ? शालङ्केरपत्यं

पदमञ्जरी

त्वात् । यस्कादिभ्योऽनन्तरस्य गोत्रप्रत्ययस्य लुगुच्यते, न चात्रानन्तरः फिञ् । शिवाद्यणो यस्येति लोपः, तस्य पूर्वस्मादपि विधौ स्थानिवद्भावाद्यस्कादिभ्योऽनन्तरस्य विहितस्येति वा विज्ञास्यते । इह च कण्वस्यापत्यं काण्व्यः, तस्यापत्यं युवा काण्व्यायनः, तस्यच्छात्राः काण्वायनीया इति, 'कण्वादिभ्यो गोत्रे' इत्यण् न भवति, कण्वादिभ्यः परो योऽनन्तरो यो वा तेभ्यो गोत्रे विहितस्तदन्तादित्याश्रयणात् । इह च औपगवस्यापत्यमौपगविरिति 'गोत्राद्यूनि' इति प्रतिपदविधानात् 'एको गोत्रे' इति नियमो बाधिष्यते । यदि बाध्यते, औपगवेर्यूनोऽपत्यमिति चतुर्थस्य यूनो गोत्रत्वात्पञ्चमे यूनि फक् प्राप्नोति ? नैष दोषः; पञ्चमे यूनि विवक्षिते उत्पन्नस्येञः यूनि 'लुक्' इति लुकि कृते औपगवशब्दादणन्तात्पुनरपीञेव भविष्यति । इह तर्हि दाक्षेरपत्यं दाक्षायणस्यापत्यमित्यर्थविवक्षायाम् 'फक्फिञोरन्यतरस्याम्' इति फको लुगभावपक्षे तदन्तादिञ् प्राप्नोति ? किञ्च औपगवेरपत्यमित्यत्रापि लुप्तेऽपीञि प्रत्ययलक्षणेन फक्प्राप्नोति ? एवं तर्हि 'गोत्राद्यूनि' इत्यत्र एकग्रहणमनुवर्तिष्यते, तेनानेकः प्रत्ययो न भविष्यति । यस्तर्हि 'गोत्रेऽलुगचि' इत्यलुक् सोऽस्त्रीणां यूनां छात्र इत्यादौ प्राप्नोति, यूनोऽपि गोत्रत्वात् ? प्राप्नोतु, तं बाधित्वा परत्वाद्यूनि लुग्भविष्यति ? नैवं शक्यम्, फक्फिञोर्हि दोषः स्यात्—शालङ्केरपत्यं शालङ्किः, पैलादिषु पाठादिञ् शलङ्क्वादेशश्च, ततः शालङ्केरपत्यं युवा 'यञिञोश्च' इति फक्, 'पैलादिभ्यश्च' इति लुक्, ततः शालङ्केर्यूनश्छात्रा इति प्राग्दीव्यतीयार्थविवक्षायाम् 'गोत्रेऽलुगचि' इति पैलादिषु लुकः प्रतिषेधे सति 'यूनि लुक्' इति लुकि नित्ये प्राप्ते 'फक्फिञोरन्यतरस्याम्' इति पक्षे फकः श्रवणप्रसङ्गः । असत्यां तु यूनो गोत्रसंज्ञायाम् 'गोत्रेऽलुगचि' इत्यस्याप्रवृत्तौ पैला[illegible] 'फक्फिञोरन्यतरस्याम्' इत्ययं तु विकल्पो यूनि 'लुक्' इत्यस्यानन्तरस्य, न तु पैलादिषु लुको व्यवहितस्यान्तरङ्गस्य, तत 'इञश्च' इत्यण्—शालङ्का इति भवति । तथा पीलाया अपत्यम्, 'पीलाया वा' इत्याण्, पैलः, तस्यापत्यं युवा, 'अणो द्व्यचः' इति फिञ्, तस्य 'पैलादिभ्यश्च' इति लुक्, ततः पैलस्य यूनश्छात्राः पैलीया इति ॥

न्यासः

युवा 'यञिञोश्च' इति फक्, पैलस्यापत्यं युवा 'अणो द्व्यचः' इति फिञ्; तयोः 'पैलादिभ्यश्च' इति लुगुच्यते—शालङ्किर्युवा, पैलो युवेति । यदि च गोत्रयुवसंज्ञयोः समावेशः स्यात् तदा शालङ्केर्यूनश्छात्रा इत्यर्थविवक्षायां प्राग्दीव्यतीयेऽजादौ प्रत्यये विषयभूते गोत्राश्रयः 'गोत्रेऽलुगचि' इत्यलुक् स्यात् । ततस्तस्माद् यूनो गोत्रसंज्ञा मा भूदित्यवधारणार्थस्तुशब्दः क्रियते ॥

## भ्रातरि च ज्यायसि ॥ १६४ ॥

भ्रातरि ज्यायसि जीवति कनीयान् भ्राता युवसंज्ञो भवति पौत्रप्रभृतेरपत्यम्। गार्ग्यस्य द्वौ पुत्रौ, तयोः कनीयान् मृते पित्रादौ वंश्ये भ्रातरि ज्यायसि जीवति युवसंज्ञो भवति। अवंश्यार्थोऽयमारम्भः। पूर्वजाः पित्रादयः 'वंश्याः' इत्युच्यन्ते। भ्राता तु न वंश्यः; अकारणत्वात्। गार्ग्ये जीवति गार्ग्यायणोऽस्य कनीयान्भ्राता। वात्स्यायनः। दाक्षायणः। प्लाक्षायणः ॥

## वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ १६५ ॥

सप्तमपुरुषावधयः सपिण्डाः स्मर्यन्ते। येषाम्—

### पदमञ्जरी

*भ्रातरि च ज्यायसि* ॥ *कनीयान् भ्रातेति*। भ्रातृज्यायः—शब्दयोः सम्बन्धिशब्दत्वादयमर्थो लभ्यते। *अकारणत्वादिति*। यः साक्षात्परम्परया वा कारणं भवति, स लोके 'वंश्य' इत्युच्यते। *गार्ग्ये जीवतीति*। ज्यायसि भ्रातरि जीवतीत्यर्थः। एवं *वात्स्यायना*दावपि द्रष्टव्यम् ॥

*वान्यस्मिन् सपिण्डे स्थविरतरे जीवति* ॥ *सप्तमपुरुषावधय इति*। आत्मनः प्रभृति पित्रादिषु पुत्रादिषु वा गण्यमानेषु सप्तमपुरुषोऽवधिर्येषां ते तथोक्ताः। प्रायेण तु पूरणप्रत्ययो न पठ्यते, *सप्तपुरुषावधय* इत्येव पठ्यते, न तत्र समीचीन-

### न्यासः

भ्रातरि च ज्यायसि ॥ भ्रातृशब्दस्य सम्बन्धिशब्दत्वा[illegible] तमेव भ्रातरं संज्ञित्वेनोपक्षिपति। ज्यायानिति प्रशस्यतरो वृद्धतरश्चाभिधीयते। तस्य च ज्यायस्त्वं गुणैर्वयसा वा। युवानं प्रतियोगिनमपेक्ष्य भवतीति स एव ज्यायसीत्यनेन प्रतियोगी प्रत्युपस्थाप्यते। तेन भ्रातुरेव कनीयसः संज्ञा विज्ञास्यत इति मत्वाह—कनीयान् भ्राता युवसंज्ञो भवतीति। पूर्वजा इत्यादिना अवंश्यार्थतामारम्भस्य समर्थयते। अकारणत्वादित्यनेनापि भ्रातुरवंश्यत्वम्। यो हि साक्षात् पारम्पर्येण वा कारणं स वंश्यः, न च भ्राता कारणम्, तस्मादसौ वंश्यो न भवतीति। गार्ग्ये जीवति भ्रातरि जीवतीत्यर्थः। एवं वात्स्ये जीवति वात्स्यायनोऽस्य कनीयान् भ्राता, दाक्षौ जीवति दाक्षायणोऽस्य कनीयान् भ्राता वेदितव्यः ॥

वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ सप्तमपुरुषावधय इति। सप्तमः पुरुषोऽवधिर्येषां सपिण्डानां ते तथोक्ताः समानपिण्डाः, निपातनात् सभावः, 'समानस्य' इति योगविभागाद्वा। तस्य च योगविभागस्यैतन्निपातनं लिङ्गम्, तेन सपिण्डाः

'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते' ।

इत्येवमादिकायां क्रियायामनधिकारः। भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा भवति। प्रकृतं जीवतिग्रहणं सपिण्डस्य विशेषणम्, इदं तु संज्ञिनः। तरब्निर्देश उभयोरुत्कर्षार्थः। स्थानेन वयसा चोत्कृष्टे सपिण्डे यथा स्यात्। पितृव्ये पितामहे भ्रातरि च वयसाधिके जीवति। गर्गस्यापत्यं गार्ग्यायणः, गार्ग्यो वा। वात्स्यायनः, वात्स्यो वा। दाक्षायणः, दाक्षिर्वा।

पदमञ्जरी

मर्थं पश्यामः। समानः पिण्डो येषामिति सपिण्डाः, निपातनात्सभावः। *स्मर्यन्त इति*। तद्यथा—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' इति। सप्तमेऽतीते विनिवर्तेत इत्यर्थः। *उभयत्रेति*। जनने मरणे चेत्यर्थः।

*एवमादिकायां क्रियायामिति*। आदिशब्देन 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते' इत्यादिका क्रिया गृह्यते। *जीवदेवेति*। वस्तुव्याख्यानमेतत्। सूत्रे तु जीवतीत्याख्यातपदम्, तच्चेदपत्यं जीवतीति, प्रथमार्थे वा शत्रन्तात्सप्तमी व्याख्येया। *तरब्निर्देश इत्यादि*। असति तस्मिन्स्थविरशब्दाद्वयःप्रकर्षमात्रं गम्येत, तरपा तु स्थानप्रकर्षो द्योत्यते, ततस्तदुपादानसामर्थ्यात्, यथा गोतरः, अश्वतर इत्यादावप्रवृत्तिनिमित्तभूतस्यापि वाहदोहादेः प्रकृत्यर्थसम्बन्धिनः प्रकर्षे तरब् भवति, तथात्रापि। स्थानम् = पदम्, पितृत्वादिकम्।

न्यासः

याज्ञेष्वा[illegible]परेण ये ते सपिण्डा नोच्यन्ते। येषामित्यस्याधिकार इति परेण सम्बन्धः।

उभयत्रेति। जन्मनि मरणे च। इत्येवमादिकायामिति। आदिशब्देन निवृत्त्यादिकाः क्रियाश्च गृह्यन्ते। तथा चोक्तम्—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते॥ इति।

जीवतीति। सप्तम्येकवचनमेतत्। प्रथमायाश्च स्थाने सुब्व्यत्ययेन सप्तमी विहिता, अत एवाह—जीवदेवेति। तरब्निर्देश इत्यादि। असति हि तरब्निर्देशे स्थविरशब्दाद् वयःप्रकर्षमात्रं गम्यते, तरपा तु स्थानप्रकर्षोऽपि गम्यते। तस्मादुभयोरुत्कर्षार्थस्तरब्निर्देशः कृतः। पितृव्ये पितामहे भ्रातरि चेति। द्वावप्येतौ स्थानत उत्कृष्टौ। स्थानशब्देन चेह सम्बन्धविशेष उच्यते; अनेकार्थत्वाद्धातूनाम्।

स्थविरेति किम् ? स्थानवयोन्यूने गार्ग्यं एव भवति । जीवतीति किम् ? मृते मृतो वा गार्ग्यं एव भवति ॥

वृद्धस्य च पूजायाम् ॥ १६६ ॥

अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे परिभाषणाद् गोत्रं वृद्धमित्युच्यते । वृद्धस्य युवसंज्ञा वा भवति पूजायां गम्यमानायाम् । संज्ञासामर्थ्याद् गोत्रं युवप्रत्ययेन पुनरुच्यते । 'वृद्धस्य' इति षष्ठीनिर्देशः, विचित्रा

पदमञ्जरी

*स्थानवयोन्यूने इति* । स्थानेन वयसा च न्यूने इत्यर्थः । ननु च ज्यायसीत्यनुवृत्तेरेवोभयोः प्रकर्षो लभ्यते, 'प्रशस्यस्य श्रः', 'ज्य च', 'वृद्धस्य च' इत्युभयोर्ज्यादेशविधानात् ? तन्न; न हि सकृत्प्रयुक्तः शब्दोऽनेकार्थमभिधातुं समर्थः । एवमपि तन्निर्देशो न कर्तव्यः, ज्यायसीत्यनुवृत्तेरेव स्थानप्रकर्षलाभात् ? एतदपि नास्ति; स्थविर इति विशेषणान्तरोपादाने सति ज्यायसीत्यस्यानुवृत्तेरेव दुर्ज्ञानत्वात् । *जीवतीति किमिति* । श्रुतं प्रकृतं चोभयमधिकृत्य प्रश्नः । अत एवोभयोः प्रयोजनं दर्शयति—*मृते मृतो वेति* । तत्र मृत इति स्वपितरि, मृतो वेति पौत्रप्रभृतेरपत्यभूतोऽर्थः ॥

*वृद्धस्य च पूजायाम्* ॥ *अपत्यमन्तर्हितमित्यादि* । एतच्चापत्यग्रहणेन वृद्धस्य विशेषणाद् इह परिभाषितस्य च शब्दात्मकस्यापत्यत्वासम्भवात् विज्ञायते । *पूजायां गम्यमानायामिति* । का पुनरत्र पूजा ? यद्युवत्वमेव । यद्यपि युवशब्दोऽनपेक्षितप्रवृत्तिनिमित्तमेव संज्ञा, तथापि प्रायेणाल्पवयसो जीवद्वंश्यत्वं सम्भवतीति तदध्यारोपे सति तत्सहचरितं वयोऽपि प्रत्यायितं भवतीति पूजा भवति । *संज्ञासामर्थ्यादिति* । गोत्रस्य सतो युवसंज्ञा विधीयते, गोत्रस[illegible]तमप[illegible] 'एको

न्यासः

गार्ग्य एव भवतीति । न गार्ग्यायणः । युवसंज्ञायामसत्यां युवप्रत्ययस्य फकोऽनुत्पत्तेः । मृते इति । स्थविरतरे सपिण्डे । मृतो वेति । पौत्रप्रभृतिरप्यत्र मृतोऽर्थः ॥

वृद्धस्य च पूजायाम् ॥ अपत्यमन्तर्हितमित्यादिना शास्त्रान्तरेण परिभाषितं यद् वृद्धं तत् परिगृह्यते, न तु यदिह शास्त्रे परिभाषितं तदिति दर्शयति । कुतः पुनरेतदवगतम्—शास्त्रान्तरपरिभाषितमिह वृद्धं गृह्यत इति ? अपत्याधिकारात् । शब्दात्मकस्य वृद्धस्यापत्यत्वासम्भवाद् विज्ञायते । पूजायां गम्यमानायामिति । का पुनरिह पूजा विवक्षिता ? युवत्वमेव । तद्धि लोके सर्वप्राणिनामभिमतम् । ननु च नेह युवशब्दो वयःपदार्थको गृह्यते, किं तर्हि ? संज्ञापदार्थकः, तत् कथं ह्यनेन पूजा ? नैष दोषः; पूजाग्रहणसामर्थ्याद्धि वयःपदार्थक एवायं युवशब्दो गोत्रे वर्त्तिष्यते । संज्ञासामर्थ्यादित्यादिना ।

सूत्रस्य कृतिरिति । तत्र भवान् गार्ग्यायणः, गार्ग्यो वा । तत्र भवान् वात्स्यायनः, वात्स्यो वा । तत्र भवान् दाक्षायणः, दाक्षिर्वा ।

पूजायामिति किम् ? गार्ग्यः । वात्स्यः ॥

## यूनश्च कुत्सायाम् ॥ १६७ ॥

कुत्सायां गम्यमानायां यूनो वा युवसंज्ञा भवति । निवृत्तिप्रधानो विकल्पः, युवसंज्ञायां प्रतिषिद्धायां पक्षे गोत्रसंज्ञैव भवति; प्रतिपक्षा-

पदमञ्जरी

गोत्रे' इति नियमः प्राप्नोति, ततश्च परमप्रकृतेरेवोत्पन्नेन प्रत्ययेनाभिहितत्वादप्राप्तोऽपि प्रत्ययोऽस्माद्वचनाद्भवतीत्यर्थः । इह पूर्वत्र सामानाधिकरण्येन संज्ञाविधानात्प्रक्रमाभेदाय तथैव संज्ञा विधातुं युक्ता,कोऽयं वृद्धस्येति षष्ठीनिर्देशः इत्यत्राह—*वृद्धस्येति । षष्ठीनिर्देश इति ।* इतिकरणो हेतौ, *वार्त्तिककारीयं* चेदं सूत्रम् । *वृत्तिकारेण* तु सूत्रेषु प्रक्षिप्तम् । एतेनोत्तरसूत्रं व्याख्यातम् ॥

*यूनश्च कुत्सायाम्* ॥ *निवृत्तिप्रधानो विकल्प इति ।* न पुनः प्रवृत्तिप्रधान इति; पूर्वमेव प्रवृत्तत्वात् । यदाह—*यूनश्चेति ।* न ह्यप्रवृत्तायां तस्यामेष निर्देश उपपद्यते । ननु च निवृत्तिरप्यनिर्वृत्ता या न शक्यते कर्तुम्, यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात् । तस्माद् 'यूनश्च' इति निर्देशो युवसंज्ञाविषयो लक्षणार्थः । जीवद्वंश्यस्य चतुर्थादेरिति, न तु युवसंज्ञाशिष्टस्य निर्देश इति वक्तव्यम् । एवं च प्रवृत्तिविकल्पोऽप्युपपद्यते, सा तु प्रवृत्तिरसत्यपि सूत्रे

न्यासः

संज्ञाप्रणयनस्य प्रयोजनमेव । गोत्रप्रत्ययेनाभिहितमपि गोत्रम् । संज्ञासामर्थ्यात् पुनर्युवप्रत्ययो विधीयते – गार्ग्यायण इति । अथ किमर्थं वृद्धस्येति षष्ठ्या निर्देशः क्रियते, न वृद्धमिति प्रथमान्तं निर्दिश्यते, एवं हि लघु सूत्रं भवति ? इत्याह—वृद्धस्येत्यादि । इतिकरणो हेतौ । यस्माद् विचित्रा सूत्रस्य कृतिः; तस्माद् वृद्धस्येति षष्ठ्या निर्देशः । एवं हि सूत्रे कृते वैचित्र्यं सम्भवतीत्यभिप्रायः । तत्रभवान् गार्ग्यायण इति । तत्रभवच्छब्दस्य पूजावचनस्य प्रयोगेण पूजां गमयतीति ॥

यूनश्च कुत्सायाम् ॥ ननु च युवसंज्ञा पूर्वमेवाभिनिर्वृत्ता, यदाह— यूनश्चेति । न ह्यसत्यां तस्यामयं निर्देश उपपद्यते, तदभिनिर्वृत्तायास्तस्याः पुनर्विकल्पेन विधानमनुपपन्नमित्यत आह—निवृत्तिप्रधानो विकल्प इति । नायं विधिप्रधानो विकल्पः, किं तर्हि ? प्रतिषेधप्रतिपादनपर इत्यर्थः । सिद्धायां संज्ञायां विधानं नोपपद्यत इति सामर्थ्यादनेन पक्षे निवृत्तिः क्रियत इति विज्ञायते । यद्येवम् , पक्षे युवसंज्ञायां प्रतिषिद्धायां गोत्रसंज्ञा वक्तव्या; अन्यथा यूनो गोत्रप्रत्ययेनाभिधानं न स्यात् ? इत्यत आह—युवसंज्ञाया-

भावात् । गार्ग्यो जाल्मः, गार्ग्यायणो वा । वात्स्यो जाल्मः, वात्स्यायनो वा । दाक्षिर्जाल्मः, दाक्षायणो वा ।

कुत्सायामिति किम् ? गार्ग्यायणः ॥

जनपदशब्दात्क्षत्त्रियादञ् ॥ १६८ ॥

जनपदशब्दो यः क्षत्त्रियवाची तस्मादपत्येऽञ् प्रत्ययो भवति । पाञ्चालः । ऐक्ष्वाकः । वैदेहः ।

पदमञ्जरी

लभ्यत इति मत्वा निवृत्तिप्रधान इत्युक्तम् । *युवसंज्ञायां प्रतिषिद्धायामिति* । तस्या अभावपक्ष इत्यर्थः । *गार्ग्यो जाल्म इति* । का पुनरत्र कुत्सा ? गोत्रत्वारोपिणामेव, अजीवद्वंश्या हि गोत्रसंज्ञकाः, ते प्रायेण चरमवयसो भवन्तीति तदारोपे भवति कुत्सा ॥

*जनपदशब्दात्क्षत्त्रियादञ् ॥ जनपदशब्दो यः क्षत्त्रियवाचीति* । नन्वेते पञ्चालादयः शब्दाः क्षत्त्रियशब्दा एव, तत्सम्बन्धात्तु 'तस्य निवासः' इति तद्धिते कृते 'जनपदे लुप्' इति च लुपि जनपदे वर्तन्ते, तत्कथमवरकालया जनपदशब्दतया नित्यक्षत्त्रियशब्दता लक्ष्यते ? कः पुनराह—क्षत्त्रियसम्बन्धादेव ते जनपदे वर्तन्त इति, सूत्रकारस्तावत् 'लुब्योगाप्रख्यानात्' इति वदन् क्षत्त्रियेष्विव जनपदेऽपि स्वाभाविका पञ्चालादिशब्दस्य प्रवृत्तिरित्याह-*पाञ्चाल इति* । यदपि पञ्चालादयः शब्दा जनपदे बहुवचनान्ताः, क्षत्त्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्य विशेषणं जनपदत्वम्, न सुबन्तस्येत्येकवचनान्तादपि प्रत्ययो भवत्येव । *ऐक्ष्वाक इति* । इक्ष्वाकुशब्दस्य दाण्डिनायनादिसूत्रे [illegible] निपातितः ।

न्यासः

मित्यादि । गोत्रसंज्ञाया युवसंज्ञा प्रतिपक्षः प्रत्यनीकः । सा चेन्निवृत्ता गोत्रसंज्ञैव प्रवर्तते; प्रतिपक्षाभावात्, अतो न वक्तव्येति भावः । गार्ग्यो जाल्म इति । जाल्मशब्दस्य कुत्सावचनस्य प्रयोगेण कुत्सां गमयति । कुत्सा पुनरिह यूनो वृद्धतयाभिधानस्यैवानभिमतत्वात् । अत एवाकुत्सिते युवेति वाक्यार्थं पदमन्वाख्यायते । सा च कुत्सा याऽन्या वा ततो वेति विशेषो नाश्रीयते, यथा —कदन्नादिविषये देवदत्तादीनाम् ।

जनपदशब्दात् क्षत्त्रियादञ् ॥ जनपदवृत्तिशब्दः पञ्चालादिर्जनपद इत्युक्तः; क्षत्त्रियवृत्तिः क्षत्त्रिय इत्यभिधानेऽभिधेयोपचारात्, साहचर्याद्वा । ननु पञ्चालादयः शब्दाः क्षत्त्रियशब्दाः, ते 'तस्य निवासः' इति तद्धिते कृते तस्य 'जनपदे लुप्' इति लुपि च जनपदे वर्तन्ते, तत् कथमवरकालया जनपदशब्दतया नित्याः क्षत्त्रियशब्दा विशेष्यन्ते ? कथं पुनः क्षत्त्रियसम्बन्धादेते जनपदे वर्तन्त इत्येतदभिधातुमर्हति विद्वान् । सूत्रकारेण

जनपदशब्दादिति किम् ? द्रुह्योरपत्यं द्रौह्यवः । पौरवः । क्षत्त्रियादिति किम् ? ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिः । वैदेहिः ।

* क्षत्त्रियसमानशब्दाज्जनपदशब्दात् तस्य राजन्यपत्यवत् * । पञ्चालानां राजा पाञ्चालः । वैदेहः । मागधः ॥

## साल्वेयगान्धारिभ्यां च ॥ १६९ ॥

साल्वेयगान्धारिशब्दाभ्यामपत्येऽञ् प्रत्ययो भवति । जनपदशब्दावेतौ क्षत्त्रियाभिधायिनौ ताभ्यामञपवादे 'वृद्धात्' इति ञ्यङि प्राप्ते पुनरञ्विधीयते । साल्वेयः । गान्धारः । तस्य राजनीत्येव – साल्वेयो राजा । गान्धारो राजा ॥

### पदमञ्जरी

*द्रौह्यव इति* । क्षत्त्रियवचन एवायं न जनपदशब्दः । *ब्राह्मणस्य पञ्चालस्येति* । बाह्वादिप्रभृतिषु येषां दर्शनमित्युक्तत्वात्कथमत्र प्रसङ्ग इति चिन्त्यम् ।

*क्षत्त्रियसमानशब्दादिति* । समानः शब्दो यस्य समानशब्दः, क्षत्त्रियेण यस्य समानशब्दस्तस्माज्जनपदशब्दात् तस्येति षष्ठीसमर्थाद्राजन्यभिधेयेऽपत्यवत्प्रत्ययो

### न्यासः

हि 'तदशिष्यं संज्ञाप्रमाणत्वाल्लुब्योगाप्रख्यानात्' इति युक्तवद्भावं लुपश्च प्रत्यादिशता जनपदे क्षत्त्रियेष्विव स्वत एव पञ्चालादिशब्दस्य वृत्तिरुक्ता । यथा शब्दा नित्यास्तथा पञ्चालादि[illegible] जनपदवचनान्तताया अवरकालता ! पाञ्चाल इत्यादि । पञ्चालादयः शब्दा देशे सन्तः क्षत्त्रियवाचिनोऽपि भवन्ति स्वभावत एव, तेभ्योऽपत्यार्थेऽञ् । ऐक्ष्वाक इति । इक्ष्वाकुशब्दस्य 'दाण्डिनायनहास्तिनायन' इत्यादौ सूत्रे उकारलोपो निपातितः ।

द्रौह्यव इति । द्रुह्युशब्दः क्षत्त्रियवचन एव, न जनपदशब्दः, तेनाणेव भवति । पाञ्चालिर्वैदेहिरिति । इह पञ्चालविदेहशब्दौ भवतो जनपदशब्दौ, न तु क्षत्त्रियवचनौ । अपि तु ब्राह्मणवचनौ, तेनेञेव भवति ।

क्षत्त्रियसमानशब्दादित्यादि । क्षत्त्रियवचन एव शब्द उपचारेण क्षत्त्रिय इत्युक्तः, जनपदशब्दो जनपद इति । क्षत्त्रियेण समानः शब्दो यस्य स तथोक्तः । तस्मात् क्षत्त्रियसमानशब्दादस्येति षष्ठीसमर्थाद् राजन्यभिधेयेऽपत्यवत् प्रत्ययोत्पत्तिरिति वक्तव्यम् । 'अवृद्धादपि बहुवचनविषयात्' प्राप्तस्य वुञोऽपवादः । यथा पञ्चालस्यापत्यमित्यत्र

## द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ १७० ॥

जनपदशब्दात्क्षत्त्रियाभिधायिनो द्व्यचः, मगध, कलिङ्ग, सूरमस – इत्येतेभ्यश्चापत्येऽण् प्रत्ययो भवति। अञोऽपवादः। आङ्गः। वाङ्गः। पौण्ड्रः। सौह्मः। मागधः। कालिङ्गः। सौरमसः। तस्य राजनीत्येव – आङ्गो राजा ॥

## वृद्धेत्कोशलाजादाञ्ञ्यङ् ॥ १७१ ॥

'जनपदशब्दात्क्षत्त्रियात्' इत्येव। वृद्धाच्च प्रातिपदिकादिकारान्ताच्च कोशल-अजादशब्दाभ्यां चापत्ये ञ्यङ् प्रत्ययो भवति। अञोऽपवादः। वृद्धात्तावत् – आम्बष्ठ्यः। सौवीर्यः। इकारान्तात् – आवन्त्यः। कौन्त्यः। कोशलाजादयोरवृद्धार्थं वचनम्। कौशल्यः। आजाद्यः।

तपरकरणं किम्? कुमारी नाम जनपदसमानशब्दः क्षत्त्रियः, तस्यापत्यं कौमारः।

* पाण्डोर्जनपदशब्दात् क्षत्त्रियाड्ड्यण् वक्तव्यः *। पाण्ड्यः। अन्य-

पदमञ्जरी

भवति। अवृद्धादपीति प्राप्तस्य वुञोऽपवादः। क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते। *मागध इति*। 'द्व्यञ्मगध' इत्यण् ॥

*वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ ड्यण्वक्तव्य इति*। डकारष्टिलोपार्थः णकारो

न्यासः

भवति पाञ्चालः, तथा पञ्चालानां राजा पाञ्चाल इत्यत्रापि भवति। मागध इति। यथा मगधशब्दादपत्ये 'द्व्यञ्मगध' इत्यादिनाण् भवति, तथा तस्य राजेत्यत्रापि ॥

साल्वेयगान्धारिभ्याञ्च ॥ द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ वृद्धेत्कोशलाजादाञ्ञ्यङ् ॥ वृद्धग्रहणेनेह 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति गृह्यते, तस्यैव हि जनपदशब्दता क्षत्त्रियवाचित्वं च सम्भवति, न शास्त्रान्तरपरिभाषितस्य। आम्बष्ठ्यः, सौवीर्य इति। आम्बष्ठसौवीरशब्दाभ्यां ञ्यङ्। आवन्त्यः, कौन्त्य इति। अवन्ति-कुन्तिशब्दाभ्यां ञ्यङ्। कौमार इत्यत्राञ् भवति। ड्यण् वक्तव्य इति। क्षत्त्रिय-ञ्यङोऽपवाद इति, डकारष्टिलोपार्थं इति। स च 'वान्यस्मिन् सपिण्डे' इत्यतो मण्डूक-प्लुतिन्यायेन वेत्यनुवृत्तेर्लभ्यते। तथैवमतिप्रसङ्गो भवति? व्यवस्थितविभाषात्वात् स

स्मात्पाण्डव एव । तस्य राजनीत्येव — आम्बष्ठ्यो राजा । आवन्त्यः । कौन्त्यः । कौशल्यः । आजाद्यः ॥

कुरुनादिभ्यो ण्यः ॥ १७२ ॥

जनपदशब्दात्क्षत्त्रियादित्येव । कुरुशब्दान्नादिभ्यश्च प्रातिपदिकेभ्यो ण्यः प्रत्ययो भवति । अणञोरपवादः । कौरव्यः । नकारादिभ्यः — नैषध्यः । नैपथ्यः । तस्य राजनीत्येव — कौरव्यो राजा ॥

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ १७३ ॥

जनपदशब्दात् क्षत्त्रियादित्येव । सल्वा नाम क्षत्त्रिया तन्नामिका, तस्या अपत्यम्, 'द्व्यचः' इति ढक्, साल्वेयः । अणपीष्यते —

पदमञ्जरी

वृद्धिनिमित्तस्येति पुंवद्भाव प्रतिषेधार्थः । *अन्यस्मादिति* । गुणवचनाद्युधिष्ठिरपितृवचनाच्च । *पुरोरणवक्तव्यः पौरव इति* क्वचित्पठ्यते, तत्र पुरुशब्दस्याजनपदशब्दत्वात्प्राग्दीव्यतीयेऽणि सिद्धे तद्राजसंज्ञार्थं वचनम् । जनपदवाचित्वे 'द्व्यञ्मगध' इत्येव सिद्धम् ॥

*कुरुनादिभ्यो ण्यः* ॥ आदिशब्दो नकारेणैव सम्बध्यते, न कुरुशब्देन; तदादेर्जनपदस्याभावात्, तदाह—*कुरुशब्दान्नकारादिभ्यश्चेति* । *अणञोरपवाद इति* । कुरुशब्दाद् 'द्व्यञ्मगध' इत्यणोऽपवादः, नादिभ्यस्त्वञः । *नैषध्य इति* । कथं 'नैषधोऽर्हति चेदघम्' इति ? स्वच्छन्दवाच ऋषयः । कथं 'स नैषधस्यार्थपतेः सुतायाम्' इति ? निरङ्कुशाः कवयः । शेषविवक्षायां वोभयत्राण्समर्थनीयः ॥

*साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्* ॥ *सल्वा क्षत्त्रियेति* पाठः, तन्नामिकेति वचनात्, इद हि तन्नामिकाणः प्राप्त्यर्थमुक्तम् । न च साल्वाशब्दात्तस्य प्राप्तिः, वृद्धत्वात्, सलेर्वप्रत्ययः । *अणपीष्यत इति* । साल्वावयवे अपदातौ साल्वादिति

न्यासः

न भविष्यति । अन्यस्मात् पाण्डव इति । यः पाण्डुशब्दः क्षत्त्रिये वर्तते, तस्मादौत्सर्गिकेऽणि कृते पाण्डव इति भवति ॥

कुरुनादिभ्यो ण्यः ॥ अञणोरपवादः । कुरुशब्दस्य तु द्व्यञ्लक्षणस्याणः । कुरुशब्दात् 'कुर्वादिभ्यो ण्यः' इति पूर्वमपत्ये उक्तः । तस्य यो जनपदशब्दः क्षत्त्रियो न भवति सोऽवकाशः, यस्तु जनपदशब्दः क्षत्त्रियस्तस्मात् परत्वादञि प्राप्ते तदपवादो द्व्यञ्लक्षणोऽण् स्यात् । अतस्तं बाधितुं पुनर्ण्यो विधीयते ॥

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ अणपीष्यत इति । तन्नामिकालक्षणः । कुतो विज्ञायते ? साल्व इति निपातनात् । तदवयवा जनपदानां वाचकाः

साल्वः। 'तस्य निवासः' साल्वो जनपदः। तदवयवा उदुम्बरादयः, तेभ्यः क्षत्रियवृत्तिभ्य इदं प्रत्ययविधानम्। साल्वावयवेभ्यः प्रत्यग्रथ-कलकूटाश्मकशब्देभ्यश्चापत्ये इञ् प्रत्ययो भवति। अञोऽपवादः। औदुम्बरिः। तैलखलिः। माद्रकारिः। यौगन्धरिः। भौलिङ्गिः। शारदण्डिः। प्रात्यग्रथिः। कालकूटिः। आश्मकिः। तस्य राजनी-त्येव – औदुम्बरी राजा।

उदुम्बरास्तिलखला मद्रकारा युगन्धराः।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः॥

ते तद्राजाः ॥ १७४ ॥

'जनपदशब्दात् क्षत्रियादञ्' इत्येवमादयः प्रत्ययाः सर्वनाम्ना प्रत्यवमृश्यन्ते, न तु पूर्वे; गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वात्। तेऽञादय-स्तद्राजसंज्ञा भवन्ति। तथा चैवोदाहृतम्।

तद्राजप्रदेशाः – 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्येवमादयः॥

कम्बोजाल्लुक् ॥ १७५ ॥

पदमञ्जरी

निर्देशात्, न च निपातितोऽण् ढकोऽपवादः, 'साल्वेयगान्धारिभ्यां च' इति निर्देशात्। *तेभ्यः क्षत्रियवृत्तिभ्य इति*। 'जनपदशब्दात्क्षत्रियात्' इत्यनुवृत्तेरेत-ल्लभ्यते।

*'उदुम्बरास्तिलखलाः' इति श्लोकः* प्रदर्शनार्थः। तेन बुस, अजमीढ, आज-कन्द–इत्येतेभ्योऽपि भवति, तथा च भाष्य उदाहृतम्–बौसिः, आजमीढिः, आज-कन्दिरिति। *साल्वावयवसंज्ञिता इति*। साल्वावयव—इत्येवं शब्दिता इत्यर्थः॥

*ते तद्राजाः॥ तथा चैवोदाहृतमिति*। तत्र 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' मित्यत्र कार्याश्रयमुदाहृतम्, इह तु प्रकरणे रूपाश्रयम्॥

न्यासः

क्षत्रियाणां समाना भवन्ति। अतस्तेऽप्यौपचारिकं साल्वापदेशमासादयन्ति॥

ते तद्राजाः॥ गोत्रयुवसंज्ञाकाण्डेन व्यवहितत्वादिति। गोत्रयुवसंज्ञाप्रकरणं हि यदन्तरा व्यवधायकं कृतं तस्यैतदेव प्रयोजनम्। तेन ये व्यवहिताः पूर्वेऽणादयस्तेषां 'ते तद्राजाः' इत्यत्र सर्वनाम्ना प्रत्यवमर्शो मा भूदिति। तथा चैवोदाहृतम्। 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यत्र कार्याश्रयमुदाहृतम्। इह तु प्रकरणे रूपाश्रयम्॥

'जनपदशब्दात् क्षत्त्रियात्' इत्यनेन विहितस्याञो लुगुच्यते। कम्बोजात्प्रत्ययस्य लुग् भवति। कम्बोजः।

* कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् *। कम्बोजः। चोलः। केरलः। शकः। यवनः। तस्य राजनीत्येव – कम्बोजो राजा॥

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ १७६ ॥

अवन्ति-कुन्ति-कुरुशब्देभ्य उत्पन्नस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति। अवन्तिकुन्तिभ्यां ञ्यङः, कुरोर्ण्यस्य। अवन्ती। कुन्ती। कुरूः।

स्त्रियामिति किम्? आवन्त्यः। कौन्त्यः। कौरव्यः॥

अतश्च[1] ॥ १७७ ॥

'स्त्रियाम्' इत्येव। अकारप्रत्ययस्य तद्राजस्य स्त्रियामभिधेयायां लुग्भवति। तकारो विस्पष्टार्थः। शूरसेनी। मद्री। दरत्।

पदमञ्जरी

*कम्बोजाल्लुक्*॥ *चोलः, शक इति*। 'द्व्यञ्मगध' इत्यस्याणः। केरल इत्यत्राञः॥

*स्त्रियामवन्तिकुन्तिकुरुभ्यश्च*॥ *अवन्ती, कुन्तीति*। लुकि कृते 'इतो मनुष्य-जातेः' इति ङीष्। *कुरूरिति*। 'ऊङुतः'॥

*अतश्च*॥ *तकारो विस्पष्टार्थ इति*। असति हि तस्मिन् 'अस्य' इति निर्देशः

न्यासः

कम्बोजाल्लुक् ॥ चोलः, शक इति। द्व्यञ्मगधलक्षणस्याणो लुक्। केरल इत्यञः॥

स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ अवन्ती। कुन्तीति। तद्धितलुकि कृते 'इतो मनुष्यजातेः' इति ङीष्। कुरूरिति। 'ऊङ्' इत्यूङ्॥

अतश्च ॥ तकारो विस्पष्टार्थ इति। तकारे ह्यसति 'अस्य' इति निर्देशेन भवितव्यम्, ततश्च समानत्वाद् निर्देशस्य सन्देहः स्यात्–किमयमवर्णस्य निर्देशः? आहोस्वित् इदमः? इति। तकारे तु सत्येष दोषो न भवति; तपरस्य वर्णेष्वेव प्रसिद्धत्वात्। दीर्घनिवृत्त्यर्थस्तु तकारो न भवति, दीर्घस्यासम्भवात्। सूरसेनी। मद्रीति। सूरसेन-

---

१. अतिप्राचीनपुस्तकद्वये चशब्दरहितं सूत्रं दृश्यते।

अवन्त्यादिभ्यो लुग्वचनात् तदन्तविधिरत्र नास्ति, तेनेह न भवति – आम्बष्ठ्या । सौवीर्या ॥

## न प्राच्यभर्गादियौधेयादिभ्यः ॥ १७८ ॥

प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चोत्पन्नस्य लुग्न भवति । 'अतश्च' इत्यनेन स्त्रियां लुक् प्राप्तः प्रतिषिद्धयते । प्राच्येभ्यः क्षत्त्रियेभ्यस्तावत् – पाञ्चाली । वैदेही । आङ्गी । वाङ्गी । मागधी । भर्गा-

पदमञ्जरी

स्यात्, ततश्च सन्देहः स्यात्–किमयं वर्णनिर्देशः ? आहोस्विदिदम इति ? इदमश्च निर्देशेऽनन्तरस्येञो लुक् प्रसज्येत, तकारे सत्येष दोषो न भवति, तपरनिर्देशस्य भूयसा वर्णेष्वेव प्रसिद्धत्वात् 'तपरस्तत्कालस्य' इति संज्ञाकरणाच्च । कथं 'माद्रीसुतौ पुष्पफले समृद्धे' इति ? स्वच्छन्दवाच ऋषयः, मद्रीसुतावित्येव वा पाठ्यम् ।

*अवन्त्यादिभ्यो लुग्वचनादिति* । यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्याद्; अनेनैव सिद्धत्वात् । तदन्तविधौ त्वसति अकारमात्रस्य ग्रहणेन सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद् भवति ॥

*न प्राच्यभर्गादियौधेयादिभ्यः* ॥ *पाञ्चालीत्यादि* । पञ्चालादयः शरावत्याः प्राञ्चो जनपदाः । भर्गादिग्रहणमप्रागर्थम् । भृञो गः, भर्गः । कृञ उः, करुः, तमोषति = द्वेष्टि, मूलविभुजादित्वात्कः, करूषाः । चिनोतेः कयः आदेश्च कः, बहुलवचनादित्संज्ञाभावः, केकयः । कशेर्मिरः, कश्मीरः । साल्वशब्दो निरुक्तः । शोभनानि स्थलान्यस्य सुस्थलः । उरसा शेते उरशः । 'कुरुनादिभ्यो ण्यः'

न्यासः

शब्दाद् योऽञ्, मद्रशब्दाद् यो द्व्यज्लक्षणोऽण्—तयोर्लुकि कृते 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । दरदिति । दरच्छब्दाद् द्व्यञ्मगधलक्षणस्याणो लुक् ।

यदि 'अतः' इति वर्णस्येदं ग्रहणम्, एवं सति वर्णग्रहणं तदन्तविधिं प्रयोजयतीतीहापि प्राप्नोति—आम्बष्ठ्या, सौवीर्या इति ? अत आह–अवन्त्यादिभ्यो लुगित्यादि । यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यात्; अनेनैव सिद्धत्वात् । तदन्तविधावसत्यकारग्रहणमात्रेण न सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद् भवति ।

न प्राच्यभर्गादियौधेयादिभ्यः ॥ पाञ्चाली वैदेहीति । जनपदशब्दादित्यादिनाञ् । 'शार्ङ्गरवाद्यञो ङीन्' । आङ्गी, मागधीति । 'द्व्यञ्मगध' इत्यादिनाण् । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । भर्गशाल्वशब्दाभ्यां द्व्यञ्मगधलक्षणोऽण् । शेषेभ्य-

दिभ्यः — भार्गी । कारूषी । कैकेयी । यौधेयादिभ्यः — यौधेयी । शौभ्रेयी । शौक्रेयी ।

कस्य पुनरकारस्य प्रत्ययस्य यौधेयादिभ्यो लुक् प्राप्तः प्रतिषिद्धयते ? पाश्वमिकस्यात्रः 'पर्श्वादियौधेयादिभ्यामणञौ' इत्येतस्य । कथं पुनस्तस्य भिन्नप्रकरणस्थस्यानेन लुक् प्राप्नोति ? एतदेव विज्ञापयति — पाश्वमिकस्यापि तद्राजस्य 'अतश्च' इत्यनेन लुग्भवतीति। किमेतस्य ज्ञापनेन प्रयोजनम् ? पर्श्वाद्यणः स्त्रियां लुक् सिद्धो भवति । पर्शूः । रक्षाः । असुरी । तथा चोक्तम् — 'यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वाद्यणो लुक्' इति ।

भर्ग । करूष । केकय । कश्मीर । साल्व । सुस्थाल । उरश[1] । कौरव्य । भर्गादिः ।

पदमञ्जरी

कौरव्यः । *यौधेयीत्यादि* । युधाया अपत्यम्, शुभ्राया अपत्यम्, 'द्व्यचः' इति ढक् । शुभ्राशब्दात् 'शुभ्रादिभ्यश्च' इति, ततः स्वार्थे 'पर्श्वादियौधेयादिभ्यः' इत्यञ् । यद्यञो लुक् स्याङ्गलक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात्, लुकि तु प्रतिषिद्धे 'शार्ङ्गरवाद्यञः' इति ङीनि सत्याद्युदात्तं भवति ।

*कस्य पुनरिति* । अस्य वक्ष्यमाणोऽभिप्रायः, तमेव प्रकाशयति—*कथं पुनरिति* । परिहरति—*एतदेवेति पर्शूरिति* । पर्शुः क्षत्रियो जनपदेन समानशब्दः, तस्यापत्यं सङ्घः, स्त्रीत्वविशिष्टः, 'द्व्यञ्मगध' इत्यण्, तस्य 'अतश्च' इति लुक्, पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण्, तस्यापि लुक् । एवं *रक्षा इति* । रक्षसः क्षत्रियस्यापत्यम्, स्त्रीत्वविशिष्टः सङ्घः, पूर्ववदण्, द्वयस्यापि लुक्, 'अत्वसन्तस्य' इति दीर्घः । *असुरीति* । जनपदलक्षणस्याञो लुकि पर्श्वादिलक्षणस्याणो लुक्,

न्यासः

स्त्वञ् । भार्गीत्यादौ पूर्ववत् ङीष् । यौधेयी, शौक्रेयी, शौभ्रेयीति । यौधेय-शौक्रेय-शौभ्रेयशब्देभ्यः स्वार्थे 'पर्श्वादियौधेयादिभ्योऽणञौ' इत्यण् । भार्गीत्यादौ पूर्ववद् ङीष् ।

कस्य पुनरित्यादि । येनाभिप्रायेण पृष्टवान् तं कथमित्यादिना आविष्करोति । पर्श्वादीत्यादि । पर्शूः = क्षत्रियः, जनपदेन समानशब्दः, तस्यापत्यं स्त्रीत्वविशिष्टम् ।

१. 'उरस' इति पाठा० ।

यौधेय। शौभ्रेय। शौक्रेय। ज्याबाणेय। घार्त्तेय। धार्त्तेय। त्रिगर्त्त। भरत। उशीनर। यौधेयादिः॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य प्रथमः पादः

पदमञ्जरी

जातिलक्षणो ङीष्। ज्ञापकत्वमेव द्रढयति—*तथा चोक्तमिति*। वार्त्तिककारेणै-दुक्तम्। यौधेयादिषु त्रयो निरुक्ताः; ज्यया सहितो बाणो यस्याः सा ज्याबाणा, तस्या अपत्यं ज्याबाणेयः। *ज्यावानेय* इत्यन्ये पठन्ति, तत्र ज्यावानो यस्या ज्यावाना। 'घृ क्षरणे' 'धृ धारणे' आभ्यां क्तिजन्ताभ्याम् 'इतश्चानिञः' इति ढक्, घार्त्तेयः, धार्त्तेयः। त्रयो गर्त्ता येषां ते त्रिगर्त्ताः। 'भृञोऽतच्', भरतः। वशेः कर्मणि किः, उशिः, उशयः, उष्टा नरा यस्य स उशीनरः, 'अन्येषामपि दृश्यते' इति दीर्घः॥

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां*
*चतुर्थाध्यायस्य प्रथमः पादः*

न्यासः

'द्व्यञ्मगध' इत्यादिनाण्, तस्य 'अतश्च' इति लुक्। 'पर्श्वादियौधेयादिभ्योऽणञौ' इत्यनेनापि यः स्वार्थिकोऽण्, तस्यापि लुक्। एवं रक्षाः। असुरशब्दाज्जनपदशब्दादित्या-दिनाञ्, तदन्तात् पूर्ववत् स्वार्थिकोऽण्, तयोर्लुक्। तथा चेत्यादिना ज्ञापकमेव भाष्यकारमतेन द्रढयति।

बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थाध्याये
प्रथमः पादः समाप्तः

# अथ चतुर्थाध्याये द्वितीयः पादः

## तेन रक्तं रागात् ॥ १ ॥

शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः। रज्यतेऽनेनेति रागः। तेनेति तृतीयासमर्थाद्रागविशेषवाचिनः शब्दात् 'रक्तम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्। कौसुम्भम्।

रागादिति किम्? देवदत्तेन रक्तं वस्त्रम्।

पदमञ्जरी

*तेन रक्तं रागात्* ॥ रञ्जिरयमस्त्येवाभिष्वङ्गे—भोजने रक्त इति; अस्ति वर्णविशेषे—रक्ता गौः, लोहितेत्यर्थः; अस्ति शुक्लस्य वर्णान्तरापादने—रक्तः पट इति। तत्राद्ययोरर्थयोर्ग्रहणे, रूपेण कान्तायां रक्तः, कोपेन रक्तं मुखमित्यत्रापि प्राप्नोतीति मन्यमानस्तृतीयमर्थमाश्रित्याह—*शुक्लस्येत्यादि*। एतच्चाभिधान-स्वाभाव्याल्लभ्यते। *रज्यतेऽनेन राग इति*। 'घञि च भावकरणयोः' इति नलोपः। भावसाधनस्तु रागशब्दो न भवति, न हि रञ्जनक्रियैव रञ्जनक्रियायाः करणं भवति। *रागविशेषवाचिन इति*। स्वरूपग्रहणं तु न भवति; उत्तरत्र लाक्षादीनां रागग्रहणेन विशेषणात्।

*रागादिति किमिति*। अनभिधानादेव कर्तृवाचिनो न भविष्यति, 'दैवदत्तं वस्त्रम्' इति ह्युक्ते स्वस्वामिभावस्यैव सम्प्रत्ययादिति प्रश्नः। लक्षणैकशरणो नैतत्प्रतिपत्तुमर्हतीत्युक्तम्।

न्यासः

तेन रक्तं रागात् ॥ रञ्जिरयमस्त्येवानुरागे—देवे रक्तः, स्त्रियां रक्त इति; अस्ति च वर्णविशेषे—रक्तो गौरिति, लोहित इत्यर्थः; अस्ति शुक्लस्य वर्णान्तरापादने—रक्तः पट इति, शुक्लमपनीय रक्तादिकं वर्णान्तरमापादित इत्यर्थः। इह तृतीयेऽर्थे वर्तमानो गृह्यते, यदाह—शुक्लस्येत्यादि। रागशब्दोऽयमस्त्येव भावसाधनः, अस्ति च करण-साधनः; तत्रेह द्वितीयो गृह्यते, यदाह—रज्यतेऽनेनेति राग इति। रागग्रहणेन चार्थस्य ग्रहणम्, न स्वरूपस्य। तेन रागविशेषवाचिनः प्रातिपदिकात् प्रत्ययो विज्ञायते, न तु रागशब्दादेवेत्यत आह—रागविशेषवाचिनः प्रातिपदिकादिति। अथ स्वरूपग्रहणं कस्मान्न भवति? अर्थपरत्वान्निर्देशस्य। यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यते, न यत्रार्थपरो निर्देश इति प्राक् प्रतिपादितमेव। अर्थपरत्वञ्च निर्देशस्याविच्छिन्नाचार्यपार-

कथं काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति ? उपमानाद्भविष्यति – काषायाविव काषायौ, हारिद्राविव हारिद्रौ । 'द्वैपवैयाघ्रादञ्' इति यावत्तृतीयासमर्थविभक्तिरनुवर्तते ॥

लाक्षारोचनाशकलकर्दमाट्ठक्[1] ॥ २ ॥

लाक्षादिभ्यो रागवचनेभ्यस्तृतीयासमर्थेभ्यः 'रक्तम्' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अणोऽपवादः । लाक्षया रक्तं वस्त्रं लाक्षिकम् । रौचनिकम् । शाकलिकम् । कार्दमिकम् ।

❀ शकलकर्दमाभ्यामणपीष्यते ❀ । शाकलम् । कार्दमम् ।

❀ नील्या अन् वक्तव्यः ❀ । नील्या रक्तं नीलं वस्त्रम् ।

❀ पीतात् कन् वक्तव्यः ❀ । पीतेन रक्तं पीतकम् ।

❀ हरिद्रामहारजनाभ्यामञ्वक्तव्यः ❀ । हारिद्रम् । माहारजनम् ॥

पदमञ्जरी

*कथमिति* । न ह्यत्र वर्णान्तरमाहितमिति प्रश्नः । *उपमानादिति* । रूपसादृश्यनिमित्तात् ॥

*लाक्षारोचनाट्ठक्* ॥ शकलकर्दमयोर्वार्त्तिके दर्शनात्सूत्रे प्रक्षेपः ।

*नील्या इति* । ओषधिविशेषो नीली, अण्बाधनार्थवचनम् । नीलशब्दस्तु गुणशब्दत्वादेव नीलीरक्ते वस्त्रे सिध्यति ।

*पीतादिति* । रागविशेषवाची पीतशब्दः । इदमपि वचनमण्बाधनार्थमेव । स्वार्थिककन्प्रत्ययान्तस्तु पीतकशब्द गुणवचनो वस्त्रे लभ्यते ॥

न्यासः

म्पर्योपदेशाद् गम्यते । यदि तर्हि शुक्लस्य वर्णान्तरापादनं रञ्जेरिहार्थः, काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति न सिध्येत् , न ह्यत्र शुक्लस्य वर्णान्तरापादनमित्यभिप्रायेणाह —कथमिति । उपमानादित्यादि परिहारः । यथा 'गौर्वाहीकः' इत्युपमानाद् गोशब्दोऽर्थान्तरे वाहीके वर्त्तते, तथेहापि काषायादिशब्दो गर्दभकर्णादाविति भावः ॥

लाक्षारोचनाशकलकर्दमाट्ठक् ॥ शकलकर्दमाभ्यामणपीष्यत इति । स च 'वान्यस्मिन् सपिण्डे' इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणानुवृत्तेर्लभ्यते । न चैवं सत्यतिप्रसङ्गो भवति; व्यवस्थितविभाषाविज्ञानात् ॥

---

१. 'लाक्षारोचनाट्ठक्' इति पदमञ्जरीसम्मतः सूत्रपाठः ।

## नक्षत्रेण युक्तः कालः ॥ ३ ॥

तृतीया समर्थविभक्तिरनुवर्तते । तेनेति तृतीयासमर्थाद् नक्षत्रविशेषवाचिनः शब्दाद् 'युक्तः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । योऽसौ युक्तः, कालश्चेत्स भवति ।

पदमञ्जरी

*नक्षत्रेण युक्तः कालः* ॥ इह पारमर्षाः कालं क्रियात्मानमिच्छन्ति, यथोक्तम्—

आदित्य-ग्रह-नक्षत्र-परिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥ इति ।

वैशेषिकास्तु द्रव्यमाकाशकल्पम्, उक्तं च—

व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ॥ इति ।

द्वयोरपि दर्शनयोर्नक्षत्रेण कालस्य योगो न सम्भवति, किं कारणम्? अप्राप्तिपूर्विका प्राप्तिः – योगः, कालविशेषावधारणार्थो हि लोके पौषादिशब्दप्रयोगः, एवंविध एव च योगः कालविशेषावधारणहेतुर्भवति । द्रव्यपक्षे तावद् द्वयोरपि नक्षत्रकालयोर्नित्यत्वात्कालस्य च सर्वगतत्वान्न कदाचिदयोगः । क्रियापक्षेऽपि नक्षत्रगतायाः क्रियायाः कालाख्यायाः समवायलक्षणो योगोऽव्यभिचाराद्विशेषणम् । सूर्यादिगतायास्त्वसम्भवादविशेषणम् । यदि तु यथाकथञ्चिद्योगः, तदा व्यभिचाराभावः । न हि सोऽस्त्यहोरात्रो यः पुष्येण न युक्तः । तस्मात् 'नक्षत्रेण युक्तः कालः' इत्यनुपपन्नो निर्देशः ।

न्यासः

नक्षत्रेण युक्तः कालः ॥ इह कालं क्रियात्मानं केचिदिच्छन्ति, अपरे द्रव्यात्मानमाकाशादिकल्पम् । दर्शनद्वयमपि चैतदिहाश्रयितुमयुक्तम् । पूर्वस्मिन् दर्शने समाश्रीयमाणे सूर्यादिद्रव्यान्तरस्थाया वा क्रियाया नक्षत्रेण योगः स्यात्? आत्मस्थाया वा? पूर्वस्यास्तावन्न सम्भवति, अर्थान्तरासमवायात्; अन्यथा ह्याकाशादयोऽपि क्रियावन्तः स्युः । न ह्यर्थान्तरसमवायिन्या अपि क्रियाया द्रव्यान्तरेण योगः स्यात् । आत्मस्थायास्तु क्रियाया विद्यते नक्षत्रेण योगः, किन्तु युक्तग्रहणं विशेषणं नोपपद्यते; व्यवच्छेद्याभावात् । न हि पुष्यादिस्थायाः कालस्य पुष्यादिभिः कदाचिद् योगो युज्यते यद्व्यवच्छेदार्थं युक्तग्रहणं क्रियते । एवं तावत् 'क्रिया कालः' इत्येतद् दर्शनमत्राश्रयितुमयुक्तम् । द्वितीयमप्ययुक्तमेव; यस्मात् कालविशेषावधारणहेतुरिह योगोऽभिप्रेतः । तथा हि कालविशेषावधारणार्थमेव पौषीत्यादि लोके प्रयुज्यते । स चैवंविधो योगस्तयोरेव भवतीति ययोः सन्निकर्षविप्रकर्षौ स्तः, यथा –पुष्यचन्द्रमसोः । तयोर्हि कदाचित् सन्निकर्षो भवति,

कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते ? पुष्यादिसमीपस्थे चन्द्रमसि वर्तमानाः पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति। पुष्येण युक्तः कालः। पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः। पौषी रात्रिः। पौषमहः। माघी रात्रिः। माघमहः।

नक्षत्रेणेति किम् ? चन्द्रमसा युक्ता रात्रिः। काल इति किम् ? पुष्येण युक्तश्चन्द्रमाः ॥

पदमञ्जरी

कथं तर्हि निर्देशः कर्त्तव्यः, नक्षत्रादेर्युक्तान्ताद्युक्ते काले प्रत्ययविधानं युक्तलोपश्च, पुष्येण युक्तश्चन्द्रमाः पुष्ययुक्तः, पुष्ययुक्तेन युक्तः काल इति पुष्ययुक्तशब्दाच्चन्द्रमसि वर्त्तमानात्प्रत्ययः, युक्तशब्दस्य च लोपः, पौषी रात्रिः, पौषमहः, एवं सर्वत्र। तत्र युक्तवद्भावे दोषः, मघायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य लुपि मघा इति स्त्रीत्वबहुत्वे न सिद्ध्यतः, युक्तस्यैव तु चन्द्रमसो लिङ्गवचनप्रसङ्गः, अतो नक्षत्रवाचिन एव प्रत्यययोर्योगः सम्भवतीति मत्वा पृच्छति—*कथं पुनरिति*। न चन्द्रमसैव योगे पुष्यादीनां नक्षत्रता; ज्योतिर्मात्रवचनत्वान्नक्षत्रशब्दस्य। ये तु पुष्यादीनामावस्थिकी नक्षत्रता चन्द्रमसा योगे भवतीत्याहुः, तेषामयं प्रश्नोऽनुपपन्नः। *पुष्यादिसमीपस्थ इति*। मुख्यार्थासम्भवे गौणस्याश्रयणमिति भावः। तत्र मघादयः शब्दा अपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्त्तन्ते, यथा—मञ्चादयः, मञ्चान् स्त्रियः पश्येति। तेन युक्तवद्भावविषयेऽपि दोषाभावः। *पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थ इति*। यद्यपि चन्द्रमसा कालस्य योगो नित्यः, चन्द्रमसो नित्यत्वात्; पुष्यसमीपेन तु कादाचित्कः, पुष्यसमीपतायाः कादाचित्कत्वात्। *पौषीति*। 'सूर्यतिष्य' इत्यादिना यलोपः ॥

न्यासः

कदाचिद्विप्रकर्षः। न च नक्षत्रकालयोः कदाचित् सन्निकर्षविप्रकर्षौ स्तः, तयोर्नित्यत्वादित्येतच्चेतसि कृत्वाह—कथं पुनरित्यादि। न कथञ्चिदित्यभिप्रायः। नक्षत्रनिकटवर्त्तिनि चन्द्रमसि वर्त्तमानः सूत्रे नक्षत्रशब्द उपात्त इत्येतत् सूचयन्नाह—पुष्यादिसमीपस्थ इत्यादि। यथैव हि सामीप्याद् 'गङ्गायां घोषः' इति गङ्गासमीपस्थे देशे गङ्गाशब्दो वर्त्तते, तथेहापि पुष्यादयो नक्षत्रविशेषवाचिनः शब्दाः पुष्यादिसमीपस्थे चन्द्रमसि वर्त्तन्ते। तेन तत्रैव ते वर्त्तमानाः प्रत्ययमुत्पादयन्ति। तेन पुष्यादिसमीपस्थचन्द्रमसा कालस्य विशेषावधारणहेतुर्योग उपपद्यते। तदवस्थस्य चन्द्रमसः कादाचित्कत्वात्। पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः; तदवस्थे चन्द्रमसि पुष्यशब्दस्य वृत्तेः। पौषीति। 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इत्यत्र 'तिष्यपुष्ययोर्नक्षत्राणि यलोपः' इति वचनाद् यलोपः ॥

## लुबविशेषे ॥ ४ ॥

पूर्वेण विहितस्य प्रत्ययस्य लुब् भवति अविशेषे। न चेन्नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषोऽभिधीयते। यावान् कालो नक्षत्रेण युज्यतेऽहोरात्रस्तस्याविशेषे लुब् भवति। अद्य पुष्यः। अद्य कृत्तिकाः।

अविशेष इति किम्? पौषी रात्रिः। पौषमहः॥

पदमञ्जरी

लुबविशेषे॥ यद्यविशेषे लुब् भवति, इहापि प्राप्नोति—पौषी रात्रिः, पौषमहरिति, अत्राप्यद्य ह्यो वेति विशेषो न गम्यते। *अथ रात्रिरहरिति*। विशेषावसायात्तदाश्रयः प्रतिषेधो भवति, इहापि तर्हि न स्याद्—अद्य पुष्यो ह्यः कृत्तिका इति, अद्यत्वादिविशेषावसायात्; 'पुष्ये पायसमश्नीयात्' इत्यादावेव तु स्याद् यत्र मनागपि विशेषावसायः? अत आह—*न चेदित्यादि*। रात्र्यादिरित्यादिशब्देन मुहूर्त्तादेः परिग्रहः। *विशेषोऽभिधीयते इति*। प्रत्ययान्तेन। एतदेव स्पष्टयति—*यावानिति*। कियाँश्च कालो नक्षत्रेण युज्यते? इत्याह—*अहोरात्र इति*। षष्टिनाडिकात्मक इत्यर्थः। तावन्तं हि कालमेकस्य नक्षत्रस्य समीपे चन्द्रमा वर्त्तते। तदेतदेवं यावान्कालो नक्षत्रेण युज्यते तस्य सर्वस्य प्रत्ययान्तेनाभिधानमविशेषः, तदेकदेशस्याभिधानं विशेषः। एतच्च प्रत्ययान्तेऽनुप्रवेशादन्तरङ्गत्वाच्च लभ्यते। प्रसज्यप्रतिषेधश्चायम्, तेन पौषोऽहोरात्र इत्यत्र समुदाये-

न्यासः

लुबविशेषे॥ यद्यविशेषे लुब् भवति, इहापि प्राप्नोति—पौषी रात्रिः, पौषमहरिति, अत्राप्यविशेषो गम्यत एव। तथा हि पौषी रात्रिरित्युक्ते, अद्य श्वो वेति विशेषो न गम्यत इत्यत आह—न चेत् नक्षत्रयुक्तस्येत्यादि। एवं मन्यते—'नक्षत्रेण युक्तः कालः' इत्यनुवर्तते, तेन तद्विशेष एव न भवतीति। रात्र्यादिविशेष इति। आदिशब्देनाहः, मुहूर्तः, लवः—इत्येते विशेषा गृह्यन्ते। यावानित्यादि। अनन्तरोक्तमेवार्थं विस्पष्टीकरोति। कियाँश्च कालो नक्षत्रेण युज्यते? अहोरात्रः। तदेवं यावान् कालो नक्षत्रेण युज्यते तस्याविशेषे गम्यमाने लुपा भवितव्यम्। तेन च पौषी रात्रिः, पौषमहरित्यत्र यावान् कालो नक्षत्रेण युक्तस्तस्याविशेषो न गम्यते, अपि तु तदेकदेशस्य रात्रेः, अह्नो वेति नायं लुपो विषयः। यद्येवम्, प्रत्ययस्यापि कथमेकदेशो विषयः? समुदायद्वारेण तदन्तःपातिनो गृह्यन्ते। एकदेशानामपि योगात् पूर्वेण प्रत्ययोत्पत्तिः सिद्धा भवति। पुनरिहावयवस्यैकदेशो लुपो विषय इति। इह तर्हि प्राप्नोति—पौषोऽहोरात्र इति, अत्र यावान् कालो

## संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥

अविशेषे लुब्विहितः पूर्वेण, विशेषार्थोऽयमारम्भः। श्रवणशब्दादश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुब् भवति संज्ञायां विषये। श्रवणा रात्रिः। अश्वत्थो मुहूर्त्तः।

लुपि युक्तवद्भावः कस्मान्न भवति? निपातनाद् 'विभाषा फाल्गुनीश्रवणाकार्त्तिकी' इति।

संज्ञायामिति किम्? श्रावणी, आश्वत्थी रात्रिः ॥

## द्वन्द्वाच्छः ॥ ६ ॥

### पदमञ्जरी

नापि प्रतीयमानोऽवयवद्वयात्मकः प्रतीयत इति तदाश्रयः प्रतिषेधो भवति, इह पुष्येण युक्ता पौर्णमासी पौषी, मघाभियुक्ता माघीत्यादौ लुप् प्राप्नोति? ज्ञापकात्सिद्धम्, यदयम् 'विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः' इति निर्दिशति, तज्ज्ञापयति—पौर्णमास्यां लुब्न भवतीति। श्रवणाशब्दात्तु भवति—'श्रवणाकार्त्तिकी' इति निर्देशादेव। कथं तर्हि श्रावण्यां पौर्णमास्यामिति? अबाधकान्यपि निपातनानि भवन्ति ॥

*संज्ञायां श्रवणाश्वत्थाभ्याम्* ॥ *विशेषार्थोऽयमारम्भ इति*। न तु संज्ञायां नियमार्थः; विधिसम्भवे नियमायोगात्, 'श्रवणाकार्त्तिकी' इत्यसंज्ञायामपि लुपो दर्शनाच्च।

*लुपि युक्तवद्भावः कस्मान्न भवतीति*। श्रवणा रात्रिरित्यत्र। *निपातनादिति*। ङीप्त्वत्र प्रत्ययलक्षणेन न भवति; 'अण् योऽकारः' इति विज्ञानात् ॥

*द्वन्द्वाच्छः* ॥ नक्षत्रग्रहणमनुवृत्तं षष्ठ्यन्ततया विपरिणम्यते, तच्च द्वन्द्वस्य

### न्यासः

नक्षत्रेण युक्तः, तस्याविशेषो गम्यते, तथा ह्यहोरात्र इत्युक्ते न ज्ञायते—किमतीतः, अथानागतः, अथ वर्तमान इति? नैष दोषः; अविशेष इति प्रसज्यप्रतिषेधोऽयम्। तेन नक्षत्रयुक्तस्य कालस्य यत्र विशेषो रात्र्यादिस्तत्र न लुब् भवतीति ज्ञायते, न तु यत्राविशेषः तत्र तु लुब् भवतीति ॥

संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ लुपि युक्तवद्भावः कस्मान्न भवतीति। यदि स्यात्, श्रवणशब्दस्य पुंल्लिङ्गता स्यात्। निपातनादित्यादिना परिहारः। गतार्थः ॥

द्वन्द्वाच्छः ॥ नक्षत्रग्रहणं यत्प्रकृतं तदिहार्थात् षष्ठ्यन्तं विपरिणम्यते। तेन

नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छः प्रत्ययो भवति, विशेषे चाविशेषे च। राधानुराधीया रात्रिः। तिष्यपुनर्वसवीयमहः। अविशेषे – अद्य राधानुराधीयम्। अद्य तिष्यपुनर्वसवीयम्। लुपं परत्वाद् बाधते ॥

दृष्टं साम ॥ ७ ॥

तेनेति तृतीयासमर्थाद् 'दृष्टं साम' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। यद् दृष्टं साम चेत्तद्भवति। क्रुञ्चेन दृष्टं क्रौञ्चं साम। वासिष्ठम्। वैश्वामित्रम् ॥

कलेर्ढक् ॥ ८ ॥

कलिशब्दात्तृतीयासमर्थाद् 'दृष्टं साम' इत्येतस्मिन्नर्थे ढक् प्रत्ययो भवति। अणोऽपवादः। कलिना दृष्टं साम कालेयम्।

* सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः * ॥ अग्निना दृष्टमाग्नेयम्।

पदमञ्जरी

विशेषणमित्याह—*नक्षत्रद्वन्द्वादिति*। *राधानुराधीया रात्रिरिति*। एकदेशद्वारेण रात्र्यादेर्नक्षत्रद्वययोगः। *अद्य राधानुराधीयमिति*। अद्येत्यस्यालिङ्गत्वेऽपि तद्विशेषणस्य नपुंसकत्वम्, लोकाश्रयत्वाल्लिङ्गस्य, लुपं परत्वाद्बाधते। *छ इति*। ननु युगपत्प्राप्तयोर्विप्रतिषेधः, न च लुप्छयोर्युगपत्प्रसङ्गः, प्रत्ययादर्शनस्य हि लुप्संज्ञा, तस्य कथं प्रत्ययेन सह प्रसङ्गः? तस्मादयमत्रार्थः—'मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्' इति, एवमयं लुबण एव भवति, नास्य छस्य। तेनायं छो लुपो विषये श्रूयते, एतदेव लुपं परत्वाद्बाधते च्छ इति बाधकत्वम्। *परत्वादिति*। यतोऽयं परस्तेन लुबस्य न भवति, तेन तद्विषयेऽप्यसौ श्रूयत इति ॥

दृष्टं *साम* ॥ यस्य साम्नो विशिष्टकार्यविषये विनियोगो येन ज्ञातस्तेन दृष्टमित्युच्यते ॥

*कलेर्ढक्* ॥ *सर्वत्रेति*। न केवलमग्नेः 'सास्य देवता' इत्यस्मिन्नेवार्थे ढक्,

न्यासः

नक्षत्राणां यो द्वन्द्वस्तस्मात् प्रत्ययो विज्ञायत इत्याह—नक्षत्रद्वन्द्वादिति। विशेषे चाविशेषे चेति। अविशेषग्रहणस्य निवृत्तत्वात्। अद्य राधानुराधीयमिति। ननु चाविशेषे लुपा भवितव्यम्, तत् कथं प्रत्ययस्य श्रवणमित्याह— लुपं परत्वाद् बाधत इति ॥

दृष्टं साम ॥ कलेर्ढक् ॥ तीयादिति। 'द्वेस्तीयः' इति तीयः। 'त्रेः संप्रसारणञ्च' इति तीयं वक्ष्यति, तदन्तात् स्वार्थे ईकग्वक्तव्यः।

एवमग्नौ भवम्, अग्नेरागतम्, अग्नेः स्वम् – इति सर्वत्र ढगेव भवति। आग्नेयम्, तथा कालेयमपि प्रतिपत्तव्यम्।

❀ दृष्टे सामनि अण्वा डिद्भवतीति वक्तव्यम् ❀। उशनसा दृष्टं साम औशनसम्, औशनम्।

❀ जाते चार्थे योऽन्येन बाधितः पुनरण्विधीयते स वा डिद्भवतीति वक्तव्यम् ❀ । 'प्राग्दीव्यतोऽण्' प्राप्तः कालठञा बाधितः 'सन्धिवेलाद्यृतुनक्षत्रेभ्यः' इति पुनर्विधीयते, स वा डिद्भवतीति वक्तव्यम्। शतभिषजि जातः शतभिषः, शातभिषजः।

❀ तीयादीकक् स्वार्थे वा वक्तव्यः ❀। द्वैतीयीकम्, तार्तीयीकम्। द्वितीयकम्, तृतीयकम्।

❀ न विद्यायाः ❀ । द्वितीया, तृतीया विद्या।

❀ गोत्रादङ्कवदिष्यते ❀। दृष्टं सामेत्यस्मिन्नर्थे। औपगवेन दृष्टं साम औपगवकम्। कापटवकम्। 'गोत्रचरणाद् वुञ्' भवति।

दृष्टे सामनि जाते च द्विरण्डिद्वा विधीयते।
तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते॥

पदमञ्जरी

नापि केवलं दृष्टं सामेत्यत्रैवार्थे कलेर्ढग्; अपि तु सर्वेष्वेव प्राग्दीव्यतीयेष्वित्यर्थः।

संग्रहश्लोके *जाते च द्विरण् डिद्वा विधीयते* इति पाठः। जातेऽर्थे योऽण् विधीयते स वा डिद्भवतीत्यर्थः।

*न विद्याया इति*। विद्यावाचिन ईकग् न भवतीत्यर्थः।

*गोत्रादङ्कवदिति*। अङ्के यो दृष्टः प्रत्ययः स सर्वोऽतिदिश्यते, न त्वङ्क एवाहृत्य विहितः, तेन 'सङ्घाङ्कलक्षणेषु' इत्यस्याणः 'गोत्रचरणाद् वुञ्' इत्यस्य च वुञोऽतिदेशः॥

न्यासः

न विद्याया इति। विद्याया अभिधाने तीयादीकग्न भवति।

गोत्रादङ्कवदिति। यथा तस्याङ्क इत्यत्रार्थे विवक्षिते गोत्रात् प्रत्ययो भवति, 'तेन दृष्टं साम' इत्यत्रार्थे विवक्षिते तथैवेष्यते। औपगवेन दृष्टं सामेति। औपगवशब्दः 'तस्यापत्यम्' इति गोत्रप्रत्ययान्तः। गोत्रचरणाद् वुञ् भवतीति। यथौपगवस्यायमङ्क

## वामदेवाड्ड्यड्ड्यौ ॥ ९ ॥

वामदेवशब्दात्तृतीयासमर्थाद् 'दृष्टं साम' इत्येतस्मिन्नर्थे ड्यत्, ड्य – इत्येतौ प्रत्ययौ भवतः। अणोऽपवादः। वामदेवेन दृष्टं साम वामदेव्यं साम। तित्करणं स्वरार्थम्।

डित्करणं किमर्थम्? 'ययतोश्चातदर्थे' इति नञ उत्तरस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूत्। अननुबन्धकग्रहणपरिभाषया एकानुबन्धकग्रहणपरिभाषया चानयोर्निवृत्तिः क्रियते। अवामदेव्यम्।

पदमञ्जरी

*वामदेवाद् ड्यड्ड्यौ* ॥ *डित्करणं किमर्थमिति*। यस्येति लोपेनैव सिद्धिं मत्वा प्रश्नः। *अनयोर्ग्रहणं मा भूदिति*। अथ क्रियमाणेऽपि डित्करणे कस्मादेवानयोर्ग्रहणं न भवति? तत्राह—*अननुबन्धकेति*। 'अननुबन्धकस्य ग्रहणे न सानुबन्धकस्य' इति यग्रहणे ड्यड्यतोर्ग्रहणं न भवति, एकानुबन्धकपरिभाषया तु यद्ग्रहणे ड्यतो ग्रहणाभावः। *अवामदेव्यमिति*। अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति।

न्यासः

औपगवक इत्यौपगवशब्दाद् गोत्रप्रत्ययान्तादङ्के वुञ्भवति, तथा 'तेन दृष्टं साम' इत्यत्रापि। ननु च 'गोत्रचरणाद्वुञ्' इत्यत्र नाङ्कार्थ उपात्तः, तत् कथमनेनाङ्कवदित्युच्यमाने वुञ् भवति? नैष दोषः; तत्राङ्कवदित्यनेन विहितस्येदमर्थो विवक्ष्यते। तेन गोत्रप्रत्ययान्ताद् यथा 'तस्येदम्' इत्यत्रार्थे प्रत्यय इष्यते, तथा तेन दृष्टं सामेत्यत्रापीत्यर्थः।

दृष्टे सामनीति संग्रहः। गतार्थः॥

वामदेवाड्ड्यड्ड्यौ ॥ वामदेव्यम्, वामदेव्यमिति। एकस्तित्स्वरेणान्तस्वरितः, द्वितीयः प्रत्ययस्वरेणान्तोदात्तः।

डित्करणं किमर्थमिति। 'यस्येति च' इत्येवं लोपस्य सिद्धत्वाड् डित्करणस्यानर्थक्यं मन्यते—ड्यड्ड्यावित्यादि। न वामदेव्यमवामदेव्यमिति—अत्र नञो गुणप्रतिषेधे 'सम्पाद्यर्हहितालमर्थास्तद्धिताः' इत्यतो नञ इत्यनुवर्तमाने 'ययतोश्चातदर्थे' इत्युत्तरपदस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूदित्येवमर्थं डित्करणम्। असति च तत्रानयोर्ग्रहणे नञ एव स्वरो भवति, स पुनरुदात्तः; 'निपाता आद्युदात्ता भवन्ति' इति वचनात्। अथ क्रियमाणे डित्करणे कस्मादनयोर्ग्रहणं न भवति? इत्याह–'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया ड्यड्ड्ययोरपि निवृत्तिः क्रियते। यद्ग्रहणेऽपि 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया यतः। अनयोश्च परिभाषयोरस्तित्व एतदेव डित्करणं लिङ्गम्।

सिद्धे यस्येतिलोपेन किमर्थं ययतौ डितौ ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥

## परिवृतो रथः ॥ १० ॥

तेनेति तृतीयासमर्थात् 'परिवृतः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतो रथश्चेत्स भवति । वस्त्रेण परिवृतो रथः वास्त्रो रथः । काम्बलः । चार्मणः ।

रथ इति किम् ? वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । यस्य न कश्चिदवयवो वस्त्रादिभिर्वेष्टितः तत्र न भवति । तेनेह न – छात्त्रैः परिवृतो रथः ॥

### पदमञ्जरी

संग्रहश्लोके *अतदर्थे* इत्यनेन 'ययतोश्चातदर्थे' इत्येतत्सूत्रं लक्ष्यते । नञ्स्वर *इति* । नञाश्रयः स्वरो नञ्स्वरः, उत्तरपदान्तोदात्तत्वं तस्मिन्विधीयमाने इत्यर्थः ॥

*परिवृतो रथः ॥ चार्मण इति* । 'अन्' इति प्रकृतिभावः । *परिवृतो रथ इति* । तदेकान्तग्रहणम्; येन परिवृतो रथस्तदेकान्तश्चेद्भवतीति वक्तव्यम् । तेन चर्मवस्त्रादावेव भवति, इतरथा छात्त्रादावपि प्रसङ्ग इत्याह—*समन्ताद्वेष्टित इत्यादि* । वृणोतिर्वेष्टने परिः सर्वतो भावे । *यस्य न कश्चिदवयव इति* । बाहुल्याभिप्रायमेतत्; न हि चक्रनेमिप्रभृतयश्चर्मणा पिधीयन्ते नाप्यन्तरावयवाः । ननु तत्कारी चायं यदाह—*छात्त्रैः परिवृत इति* । तद्द्वेषी च, यदाह—*समन्ताद् वेष्टित इत्यादि* । नायं तत्कारी, औपचारिकोऽयं प्रयोगः, परिवृतः इव परिवृतः ॥

### न्यासः

संग्रहश्लोके अतदर्थ इत्यनेन 'ययतोश्चातदर्थे' इत्येतत् सूत्रं लभ्यते । एतस्मिन् सूत्रे इत्यर्थः । नञ्स्वर इति । नञो यः स्वरः स नञ्स्वरः । शेषो गतार्थः ॥

परिवृतो रथः ॥ चार्मण इति । 'अन्' इति प्रकृतिभावे टिलोपो न भवति । 'न संयोगाद् वमन्तात्' इत्यल्लोपो न भवति ।

अथेह कस्मान्न भवति – छात्त्रैः परिवृतो रथ इति ? अत्राह – समन्ताद् वेष्टित इत्यादि । वृणोतिरयं वेष्टने वर्त्तते, तस्य परिणा सर्वतो भावो द्योत्यते । तस्माद् यः सर्वतो वेष्ट्यते तत्रैव प्रत्ययेन भवितव्यम्, न तु छात्त्रै रथः सर्वतो वेष्टितः, ततो न तत्र प्रत्ययस्य प्रसङ्गः । यस्तु छात्त्रैः परिवृतो रथ इति प्रयोगः, स परिवृतस्याध्यारोपेणौपचारिकः । न च मुख्ये सति परिवृतत्वे गौणस्याध्यारोपितस्य ग्रहणं युक्तम् ॥

## पाण्डुकम्बलादिनिः ॥ ११ ॥

पाण्डुकम्बलशब्दात्तृतीयासमर्थात् 'परिवृतो रथः' इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति। अणोऽपवादः। पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः। पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः।

मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम्।

## द्वैपवैयाघ्रादञ् ॥ १२ ॥

द्वीपिव्याघ्रयोर्विकारभूते चर्मणी द्वैपवैयाघ्रे, ताभ्यां तृतीयासमर्थाभ्याम् 'परिवृतो रथः' इत्येतस्मिन्नर्थेऽञ् प्रत्ययो भवति। अणोऽपवादः। स्वरे विशेषः। द्वैपेन परिवृतो रथो द्वैपः। वैयाघ्रः॥

### पदमञ्जरी

*पाण्डुकम्बलादिनिः*॥ *मत्वर्थीयेनैव सिद्ध इति*। यो हि येन परिवृतः स तस्यास्ति। *अणो निवृत्त्यर्थमिति*। यद्येतन्नारभ्येत, परिवृतो रथ इति विवक्षायां पूर्वेणाण् प्रसज्येत॥

*द्वैपवैयाघ्रादञ्*॥ *द्वीपिव्याघ्रयोरिति*। 'विरूपाणामपि समानार्थानाम्' एकशेषः प्राप्नोति, तत्रावान्तरजातिभेदेन भिन्नार्थत्वान्न भविष्यतीति समाधातव्यम्। चर्मणैव रथस्य परिवरणं सम्भवति, न विकारमात्रेणेति 'चर्मणी' इत्युक्तम्। द्वीपिव्याघ्रशब्दाभ्याम् 'प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययः, द्वीपिनष्टिलोपः॥

### न्यासः

पाण्डुकम्बलादिनिः॥ पाण्डुकम्बलीति। 'सौ च' इति दीर्घः।

मत्वर्थीयेनैव सिद्ध इति। यद्धि येन समन्ताद् वेष्टितं तत् तस्यास्ति। तस्माद् 'अत इनिठनौ' इति मत्वर्थीयेनेनिना सिद्धे यत् तद्वचनं तदणो निवृत्त्यर्थम्। यदि लभ्येत, तन्नारभ्येत। यदि ह्येतद्वचनं न स्यात्, तदा 'परिवृतो रथः' इत्यण्प्रसज्येत, ततश्च पाण्डुकम्बल इति स्यात्, पाण्डुकम्बलीति चेष्यते। तस्मादण्निवृत्त्यर्थमुच्यते॥

द्वैपवैयाघ्रादञ्॥ द्वीपिव्याघ्रयोर्विकार इत्यादि। द्वीपिनो विकारश्चर्म, व्याघ्रस्य विकारश्चर्म—इत्यर्थविवक्षायाम् 'प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययान्तत्वात् द्वैपवैयाघ्रशब्दयोः, ताभ्यामिह द्वीपिव्याघ्रविकारत्वाच्च चर्मणी अभिधीयेते। चर्मणैव द्वीपिव्याघ्रविकारेण रथस्य परिवृतत्वं सम्भवति, न विकारमात्रेणेति चर्मणी इह द्वैपवैयाघ्रशब्दाभ्यां विवक्षिते इति गम्यते॥

## कौमारापूर्ववचने ॥ १३ ॥

'कौमार' इत्येतदण्प्रत्ययान्तं निपात्यतेऽपूर्ववचने । पाणिग्रहणस्यापूर्ववचनम् । उभयतः स्त्रियाम् अपूर्वत्वे निपातनमेतत् । अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः । कुमारीशब्दाद् द्वितीयासमर्थादुपयन्तरि प्रत्ययः । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या । प्रथमान्तादेव स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये ।

कौमारापूर्ववचने कुमार्या अण्विधीयते ।

पदमञ्जरी

कौमारापूर्ववचने ॥ *अपूर्ववचन इति* । अपूर्वशब्दो भावप्रधानः । अपूर्वत्वस्य वचनमपूर्ववचनम्, तस्मिन्नपूर्ववचने । कस्य पुनरपूर्वत्वोक्तावित्याह—*पाणिग्रहणस्येति* । एतच्च निपातनसामर्थ्याल्लभ्यते । *उभयतः* । आद्यादित्वात्तसिः । स्त्रीपुंसयोरुभयोरप्येतन्निपातनमिष्यते, उभयोश्च पक्षयोरपूर्वत्वं स्त्रिया एव, न पुंस इत्यर्थः । तत्र कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशादवसीयते—उभयोरपि निपातनमिति । स्त्रिया एवापूर्वत्वमित्येतत्तु निपातनबलाल्लभ्यते । *अपूर्वपतिमिति* । यस्याः पाणिर्न केनचिद् गृहीतपूर्वः साऽपूर्वपतिः, न विद्यते पूर्वः पतिरिति कृत्वा, तामुपपन्नः = प्राप्तः, भार्यात्वेन स्वीकृतवानित्यर्थः । स तु पूर्वकृतोद्वाहो भवतु मा वा भूत् । *अपूर्वपतिरिति* । अयमपि बहुव्रीहिः, अत्रापि पुरुषः पूर्ववत् ।

*कौमारेत्यादि* । कौमारेति निपात्यतेऽपूर्ववचने । किमत्र निपात्यते ? कुमार्या

न्यासः

कौमारापूर्ववचने ॥ अपूर्ववचन इति । अपूर्वस्य वचन इति, अपूर्वाभिधान इत्यर्थः । कस्यापूर्ववचनमित्याह—पाणिग्रहणस्येत्यादि । एतच्च सामान्योक्तावपि निपातनसामर्थ्याल्लभ्यते । यथैव हि निपातनसामर्थ्यादन्यदपि किञ्चिदलाक्षणिकं कार्यं लभ्यते, तथेदमपि । उभयतः स्त्रियामित्यादि । यदि कौमार इति पुमानभिधीयते, एवमप्यस्यापूर्वत्वं यदा स्त्रिया एव विशेषणं भवति । अथापि कौमारीति स्त्र्यभिधीयते, एवमप्यपूर्वत्वं यदा स्त्रिया एव विशेषणं भवति, न पुंसः, एवमेतन्निपात्यते; नान्यथेत्यर्थः । अपूर्वपतिमिति । नास्याः पूर्वः पतिरिति बहुव्रीहिः । पत्या सह यस्याः पाणिग्रहणं निवृत्तं साऽपूर्वपतिः । तां पतिरुपपन्नः प्राप्तवानित्यर्थः । अपूर्वपतिरिति । अयमपि बहुव्रीहिः ।

कौमारापूर्ववचन इत्यादि । कौमार इत्येतन्निपात्यते, अपूर्ववचने । किं पुनरिह

अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥
कुमार्यां भवः कौमारः पतिः, तस्य स्त्री कौमारी भार्येति सिद्धम् ॥

**तत्रोद्धृतममत्रेभ्यः ॥ १४ ॥**

तत्रेति सप्तमीसमर्थादमत्रवाचिनः शब्दात् 'उद्धृतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । भुक्तोच्छिष्टमुद्धृतमुच्यते, यस्योद्धरणमिति प्रसिद्धिः । अमत्रम्=भाजनं पात्रमुच्यते । शरावेषूद्धृतः शाराव ओदनः । माल्लिकः । कार्परः ।

पदमञ्जरी

अण् विधीयते । कदा ? अपूर्वत्वं यदा तस्याः । यदा कुमार्या अपूर्वत्वं न पुंसस्तदेत्यर्थः । *कुमार्यां भवतीति वेति* । अनेन योगः प्रत्याख्यायते; यः कुमारीमुपपन्नस्तस्यामसौ भवति, तदायत्तत्वाद्धर्माचरणादेः, ततश्च 'तत्र भवः' इत्येवाण सिद्धः । यद्यपि वाण्याद्यपि कुमार्यां भवति तथापि सत्यभिधाने 'तत्र भवः' इति भवत्येव । सूत्रारम्भेऽपि हि नासौ दण्डवारितः, एवं तावत्कौमार इति सिद्धम् । स्त्रियामपि सिद्धम्, कथम् ? कौमारस्य स्त्री कौमारी, प्रत्यासत्त्या च यस्यामसौ भवन् कौमारव्यपदेशं लभते सैवाभिधीयते न स्त्र्यन्तरम्, एतच्च सूत्रारम्भेऽप्यङ्गीकर्तव्यम् ॥

*तत्रोद्धृतममत्रेभ्यः* ॥ अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्तते, तेन सप्तमीसमर्थाद् विभक्तिर्नोपपद्यते । *भुक्तोच्छिष्टमिति* । शिष्टमेवोच्छिष्टम्, यथा उच्छिनष्टि न सर्वं जुहोतीति भुक्तशिष्टमित्यर्थः । *यस्योद्धरणमिति प्रसिद्धिरिति* । 'कृत्यल्युटो बहुलम्' इति भूते कर्मणि ल्युट् । *शरावेषूद्धृत इति* । उद्धृत्य निहित इत्यर्थः ॥

न्यासः

निपात्यत इत्याह—कुमार्या अण् विधीयत इति । कुमारीशब्दादण् निपात्यत इत्यर्थः । कदेत्याह - अपूर्वत्वं यदा तस्या इति । इह हि निपातनेन पुमानभिधीयते, स्त्री वा, तत्र द्वयोरपि पक्षयोरपूर्वत्वम् । यदा तस्याः स्त्रिया विशेषणं भवति, न पुंसः, तदेवन्निपातनम्, नान्यथेत्यर्थः । कुमार्यां भवतीति वेति । अनेन योगः प्रत्याख्यायते । यो हि कुमारीं प्राप्तवानसौ तत्र भवति । ततश्च 'तत्र भवः' इति शैषिके भवार्थेऽणन्तं कौमारशब्दं व्युत्पद्येत, ततः पुंयोगलक्षणे ङीषि सति हि कुमारीत्येतत् सिद्धम् । स्वरकृतो विशेषो नास्त्येव । तथा हि अणन्तान् ङीष्यपि कृते 'यस्येति च' इति लोपे च 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तेन ङीपा भवितव्यम् । ङीष् प्रत्ययस्वरेणाद्युदात्त एव । ननु चैवं सति कौमारस्य याऽन्यापि स्त्री कौमारव्यपदेशस्य कारणं सापि

अमत्रेभ्य इति किम् ? पाणावुद्धृत ओदनः । 'तत्र' इति सप्तमी समर्थविभक्तिः 'क्षीराड्ढञ्' इति यावदनुवर्त्तते ॥

स्थण्डिलाच्छयितरि व्रते ॥ १५ ॥

स्थण्डिलशब्दात्सप्तमीसमर्थात् शयितर्यभिधेये यथाविहितं प्रत्ययो भवति, समुदायेन चेद् व्रतं गम्यते । व्रतमिति शास्त्रितो नियम उच्यते । स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः । स्थाण्डिलो ब्रह्मचारी ।

व्रत इति किम् ? स्थण्डिले शेते ब्रह्मदत्तः ॥

संस्कृतं भक्षाः ॥ १६ ॥

तत्रेति सप्तमीसमर्थात् 'संस्कृतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्संस्कृतं भक्षाश्चेत्ते भवन्ति । खरविशदमभ्यवहारार्थं

पदमञ्जरी

*स्थण्डिलाच्छयितरि व्रते* । *शास्त्रित इति* । संजातशास्त्र इत्यर्थः । यद्वा—तृतीयासमर्थाद्विधानेऽर्थे 'प्रातिपदिकाद्धात्वर्थे' इति णिच्, कर्मणि क्तः, शास्त्रेण विहित इत्यर्थः । *स्थण्डिले शयितुं व्रतमस्येति* । तुमुनत्र वक्तव्यः; व्रतस्याक्रियारूपत्वात् ॥

*संस्कृतम्भक्षाः* ॥ *संस्कृतमित्येतत्* कर्मसामान्ये व्युत्पाद्यते, तेन नपुंसकलिङ्गमेकवचनं च, *भक्षा* इत्येतत्तु अपूपाद्यभ्यवहार्यविशेषे व्युत्पाद्यते, तेन पुल्लिङ्गं बहुवचनं च । तत्र वाक्यार्थगम्यस्यार्थस्य पदसंस्कारेऽनुपयोगात्संस्कृतमित्येतद्भवति, अत एव विरम्य सम्बन्धं दर्शयति—*यत्तत्संस्कृतम्भक्षास्ते चेद् भवन्तीति*,

न्यासः

कौमारीति प्रसज्यते ? नैष दोषः; प्रत्यासत्तेर्हि या तस्य प्रत्यासन्ना सैव तस्य कौमारीति भविष्यति । का पुनस्तस्य प्रत्यासन्ना ? या कौमारे व्यपदेशस्य हेतुः । यस्यामसौ भवन् कौमार इत्युच्यते सैव, नान्या । यद्यपि व्यासादयोऽपि कुमार्यां भवन्ति तथापि तेष्वण् न भविष्यति; अनभिधानात् । एतच्चावश्यमनभिधानमाश्रयणीयमिति; इतरथा हि क्रियमाणेऽपि निपातने 'तत्र भवः' इत्यनेनाण् स्यादेव ॥

तत्रोद्धृतममत्रेभ्यः ॥ स्थण्डिलाच्छयितरि व्रते ॥ समुदायेन चेत्यादिना प्रकृतिप्रत्ययोपाधित्वं व्रतस्य दर्शयति । शास्त्रितः-शब्दः 'वाचि यमो व्रते' (३.२.४०) इत्यत्र व्युत्पादितः ॥

संस्कृतं भक्षाः ॥ संस्कृतमिति । अत्र सामान्यशब्दत्वात् संस्कृतशब्दस्य नपुंसक-

'भक्षम्' इत्युच्यते । सत उत्कर्षाधानम्=संस्कारः । भ्राष्ट्रे संस्कृता भक्षा भ्राष्ट्रा अपूपाः । कालशाः । कौम्भाः ।

भक्षा इति किम् ? पुष्पपुटे संस्कृतो मालागुणः ॥

शूलोखाद्यत् ॥ १७ ॥

शूलशब्दादुखाशब्दाच्च सप्तमीसमर्थात् 'संस्कृतं भक्षाः' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । उख्यम् ॥

दध्नष्ठक् ॥ १८ ॥

दधिशब्दात्सप्तमीसमर्थात् 'संस्कृतं भक्षाः' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दधनि संस्कृतं दाधिकम् ।

ननु च संस्कृतार्थे प्राग्वहतेष्ठकं वक्ष्यति, तेनैव सिद्धम् ? न सिद्ध्यति; दध्ना हि तत्संस्कृतं यस्य दधिकृतमेवोत्कर्षाधानम्, इह तु दधि केवलमाधारभूतं द्रव्यान्तरेण लवणादिना संस्कारः क्रियते ॥

पदमञ्जरी

अणौ यत्कर्म णौ चेत् स कर्तेतिवत्, तच्छब्दस्य प्रतिनिर्दिश्यमानलिङ्गता । *खरविशदमिति* । खरम्=कठिनम्, विशदम्=विभक्तम् । *भक्षशब्देनोच्यत इति* । यद्यप्यब्भक्षो वायुभक्ष इति भक्षयतेरन्यत्रापि प्रयोगः, भक्षशब्दस्तु तत्रैव प्रसिद्ध इति भावः ॥

*शूलोखाद्यत्* ॥ *शूलोखादिति* । समाहारद्वन्द्वः, उखा=पात्रविशेषः । यस्तु स्वाङ्गवाच्युखाशब्दस्तस्येह ग्रहणं न भवति; स्वाङ्गे संस्कर्तव्यस्याभावात् । *कथमुख्योऽग्निरिति* । न ह्यसौ भक्षः, भवार्थे दिगादित्वाद् द्रष्टव्यः ॥

*दध्नष्ठक्* ॥ *इह तु दधि केवलमाधारभूतमिति* । यथा शूले संस्क्रियमाणस्य

न्यासः

लिङ्गत्वम् । एकवचनत्वञ्च । भक्षा इति । विशेषशब्दत्वाद् भक्षशब्दस्य पुंलिङ्गत्वम् । बहुवचनत्वञ्च । भक्षशब्दोऽयं घञन्त उपात्तः । स च खरविशदाभ्यवहार्य एव रूढ इत्याह—खरविशद इत्यादि । सुबोधम् ॥

शूलोखाद् यत् ॥ दध्नष्ठक् ॥ ठकं वक्ष्यति 'संस्कृतम्' इत्यनेन । तेनेव सिद्धमिति । यद् दध्नि संस्कृतं तद् दध्ना हि संस्कृतं भवतीत्यभिप्रायः । इह दध्यधिकरणमाधारभूतमिति । यथा शूले संस्क्रियमाणस्य मांसस्य शूलम् । न हि शूलेन मांसस्य

## उदश्वितोऽन्यतरस्याम् ॥ १९ ॥

उदश्विच्छब्दात्सप्तमीसमर्थात् 'संस्कृतं भक्षाः' इत्येतस्मिन्नर्थेऽन्यतरस्यां ठक् प्रत्ययो भवति । पक्षे यथाप्राप्तमण् भवति । औदश्वितम् । औदश्वित्कम् ।

## क्षीराड्ढञ् ॥ २० ॥

क्षीरशब्दात्सप्तमीसमर्थात् 'संस्कृतं भक्षा' इत्येतस्मिन्नर्थे ढञ् प्रत्ययो भवति । अणोऽपवादः । क्षीरे संस्कृता क्षैरेयी यवागूः ॥

## सास्मिन्पौर्णमासीति संज्ञायाम् ॥ २१ ॥

सेति प्रथमासमर्थाद् 'अस्मिन्' इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं पौर्णमासी चेद्भवति । इतिकरणस्ततश्चेद्विवक्षा भवति । 'संज्ञायाम्' इति समुदायोपाधिः – प्रत्ययान्तेन चेत्संज्ञा गम्यत

पदमञ्जरी

मांसस्य शूलम् । यद्यप्यत्र दध्यपि संस्कारकम् तथापि न तद्विवक्षितम्, किन्तु तदाधारस्य द्रव्यान्तरेण यः संस्कारः स एव विवक्षित इति भावः ॥

*उदश्वितोऽन्यतरस्याम्* ॥ *औदश्वित्क इति* । 'इसुसुक्तान्तात्कः' ॥

*क्षीराड्ढञ्* ॥ अत्र संस्कृतमित्येव सम्बध्यते, न भक्षा इति; तेन यवाग्वामपि भवति । *क्षैरेयीति* । 'टिड्ढाणञ्' इत्यादिना ङीप् ॥

*सास्मिन्पौर्णमासीति संज्ञायाम्* ॥ *ततश्चेद्विवक्षेति* । ततः प्रत्ययान्ताल्लोकस्य विवक्षा भवति चेद् एवं प्रत्ययो भवति, नान्यथेत्यर्थः । *संज्ञायामिति समुदायोपाधिरिति* । एतदेव स्पष्टयति—*प्रत्ययान्तेन चेदिति* । *पौषी पौर्णमासीति* । 'लुब-

न्यासः

कश्चित् संस्कारः क्रियते, अपि तु लवणादिना । आधारभावमात्रं तु मांसस्य शूलं प्रतिपद्यते । यदि तर्हि दधि केवलमाधारभूतम्, केन तत्र तर्हि संस्कारः क्रियते ? इत्याह—द्रव्यान्तरेणेत्यादि ॥

उदश्वितोऽन्यतरस्याम् ॥ औदश्वित्कमिति । 'इसुसुक्तान्तात् कः' ॥

क्षीराड् ढञ् ॥ क्षैरेयीति । 'टिड्ढाणञ्' इति ङीप् ॥

सास्मिन् पौर्णमासीति संज्ञायाम् ॥ ततश्चेद् विवक्षा भवतीति । तत इति प्रत्ययान्तो निर्दिश्यते । एतदुक्तं भवति—यदि प्रत्ययान्ताल्लोकेऽस्य विवक्षा भवत्येवं प्रत्ययो भवति; नान्यथेत्यर्थः । प्रत्ययान्तेन चेत्यादिना संज्ञायाः समुदायोपाधित्वं

इति । मासार्धमाससंवत्सराणामेषा संज्ञा । पौषी पौर्णमासी अस्मिन्पौषो मासः । पौषोऽर्धमासः । पौषः संवत्सरः ।

इह न भवति—पौषी पौर्णमासी अस्मिन्दशरात्र इति । भृतकमासे च न भवति ।

इतिकरणस्य संज्ञाशब्दस्य च तुल्यमेव फलं प्रयोगानुसरणम्, तत्र किमर्थं द्वयमुपादीयते ? संज्ञाशब्देन तुल्यतामिति करणस्य ज्ञापयितुम्, न ह्ययं लोके तथा प्रसिद्धः । संज्ञार्थत्वे तु संप्रति ज्ञापिते यत्तत्र तत्रोच्यते इतिकरणस्ततश्चेद्विवक्षेति तदुपपन्नं भवति ।

पदमञ्जरी

विशेषे' इति पौर्णमास्यां लुब्न भवतीति पूर्वमेवोक्तम् । *भृतकमासे चेति* । भृता एव भृतकाः, कर्मकरास्तेषां यो मासः कर्मकरणादारभ्य त्रिंशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान् भवति । वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः ।

*तुल्यमेव फलमिति* । किं पुनस्तदित्याह—*प्रयोगानुसारणमिति* । ण्यर्थाल्ल्युट् । *संज्ञाशब्देन तुल्यतामिति* । तुल्यफलतामित्यर्थः । *इतिकरणस्य ज्ञापयितुमिति* । किं पुनरिदं ज्ञापकसाध्यम् ? तत्राह—*न ह्ययमिति* । ज्ञापनस्य प्रयोजनं दर्शयति—*संज्ञार्थत्वे त्विति* । संज्ञाब्देन तुल्यफलत्वे इत्यर्थः । *प्रवृत्तिभेदेन चायमर्थो ज्ञाप्यत इति* । संज्ञायामिति द्वितीयाप्रवृत्तिः, इह शास्त्रे 'संज्ञायाम्' इत्यस्यार्थे इतिशब्दो वेदितव्य इति परिभाषा सम्पद्यते ।

न्यासः

स्पष्टीकरोति । एषा संज्ञेति । या प्रत्ययान्तेन गम्यते । पौषीति । 'नक्षत्रेण युक्तः कालः' इत्यण्, तदन्तान् ङीप् ।

इह न भवतीति । संज्ञाया अनवगम्यमानत्वात् । न हि दशरात्रस्य प्रत्ययान्तः संज्ञा, नापि भृतकमासस्य । किं तत् तुल्यं फलमित्याह—प्रयोगानुसरणमिति । प्रयोगानुसरणं प्रयोगोपलक्षणमित्यर्थः । संज्ञाग्रहणे ह्येतत् क्रियते—प्रयोगमुपलक्ष्य यत्र प्रयोगो दृश्यते मासार्धमाससंवत्सरेषु तत्र प्रत्यय उत्पादयितव्यः, न तु भृतकमासादौ । इतिकरणेनाप्येतदेव क्रियते । तथा हि—प्रत्ययान्ताद् यदि लोकस्यार्थविवक्षा भवति, एवं हि प्रत्यय उत्पादयितव्यः, नान्यथेति । एवमर्थमितिकरण उपादीयते, ततश्च लोकविवक्षा मासार्द्धमाससंवत्सरविषया भवति, एवं हि न भृतकमासादिविषया । तस्मात् प्रयोगानुसरणम्, उभयोरपि फलं तुल्यमेव । संज्ञेत्यादि । ननु च यथा संज्ञाशब्दः प्रयोगानुसरण-

अथ पौर्णमासीति कोऽयं शब्दः ? पूर्णमासादण्, पौर्णमासी । अथ वा – पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी । मा इति चन्द्र उच्यते ॥

आग्रहायण्यश्वत्थाट्ठक् ॥ २२ ॥

'सास्मिन्पौर्णमासी' इति सर्वमनुवर्तते । आग्रहायणीशब्दादश्वत्थशब्दाच्च प्रथमासमर्थात्पौर्णमास्युपाधिकाद् अस्मिन्निति सप्तम्यर्थे ठक् प्रत्ययो भवति । अणोऽपवादः । आग्रहायणिको मासः । अर्द्धमासः संवत्सरः । एवम् – आश्वत्थिकः ॥

विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ॥ २३ ॥

पदमञ्जरी

*पूर्णमासादणिति* । पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादेराकृतिगणत्वादस्मादेव वा निपातनादण् । *मा इति चन्द्रमा उच्यत इति* । चन्द्रमश्शब्दैकदेशप्रयोगः, सत्याभामा भामेतिवत् ॥

*आग्रहायण्यश्वत्थाट्ठक्* ॥ अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, 'पूर्वपदात्संज्ञायाम्' इति णत्वम् । *अश्वत्थेन युक्ता पौर्णमासी अश्वत्थ इति* । निपातनात्पौर्णमास्यामपि लुप् ॥

न्यासः

फलतया लोके प्रसिद्धः, तथेतिकरणोऽपि, तत् किमर्थमिह तस्य तेन तुल्यत्वमेव ज्ञायते ? इत्याह—न ह्ययमित्यादि । तथा हि—लोकेऽयं संज्ञाशब्दः प्रयोगानुसरणफलत्वेन यथा प्रसिद्धः, न तथेतिकरणः । तस्मादस्य तेन तुल्यता ज्ञापितेति भावः । संज्ञार्थत्वे इत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति । संज्ञया तुल्योऽर्थो यस्य स संज्ञार्थः । समासेन गम्यमानत्वात् तुल्यशब्दो न प्रयुज्यते, यथा 'रुच्यर्थानाम्' इत्यत्र रुचिना समानशब्द इति भावः । संज्ञार्थस्य भावः = संज्ञार्थत्वम् । अर्थशब्दश्चायं प्रयोजनवचनः । तदुपपन्नं भवतीति । यत एव संज्ञाशब्देनेतिकरणस्य तुल्यार्थता ज्ञापिता तेन यत्र यत्र प्रयोगानुसरणार्थं इतिकरणः, ततस्ततश्च विवक्षा भवतीत्युच्यते—तदुपपन्नं भवतीति; इतिकरणस्य संज्ञाप्रयोजनत्वात् ।

पूर्णमासादणिति ॥ पूर्णो मासो यस्यां तिथाविति तत्रार्थे बहुव्रीहिः । अस्मादेव निपातनादण् । पूर्णमासस्येयं पौर्णमासी । 'तस्येदम्' इत्यण् । तिथिविशेषस्येयं संज्ञा । व्युत्पत्तिस्तु यथाकथञ्चित् कर्त्तव्या ॥

आग्रहायण्यश्वत्थाट्ठक् ॥ विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ॥

फाल्गुन्यादयः पौर्णमासीशब्दास्तेभ्यो विभाषा ठक् प्रत्ययो भवति, 'सास्मिन्पौर्णमासीति संज्ञायाम्' इत्येतस्मिन्विषये । नित्यमणि प्राप्ते पक्षे ठग्विधीयते । फाल्गुनो मासः, फाल्गुनिकः । श्रावणः, श्रावणिकः । कार्त्तिकः, कार्तिकिकः । चैत्रः, चैत्रिकः ॥

सास्य देवता ॥ २४ ॥

सेति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं देवता चेत्सा भवति । यागसम्प्रदानं देवता देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्नभिधेये प्रत्ययः । इन्द्रो देवताऽस्य ऐन्द्रं हविः । आदित्यम् । बार्हस्पत्यम् । प्राजापत्यम् ।

देवतेति किम् ? कन्या देवताऽस्य ।

कथमैन्द्रो मन्त्रः ? मन्त्रस्तुत्यमपि देवतेत्युपचरन्ति ।

पदमञ्जरी

*सास्य देवता* ॥ *यागसम्प्रदानं देवतेति* । यद्यपि देवशब्दो मनुष्यादिवज्जातिवचनः, स्वार्थिकश्च तल्; तथापि समुदायशक्त्या देवताशब्दो यागे दर्शपूर्णमासादौ यद्यत्सम्प्रदानत्वेन चोदितं तत्र सर्वत्र वर्तते, न स जातिविशेष इत्यर्थः । *देयस्य पुरोडाशादेः स्वामिनीति* । दिवेरैश्वर्यकर्मणो देवताशब्दव्युत्पत्तिं दर्शयति, एवं च कृत्वा 'वाय्वृतुपित्रुषसो यत्', 'कालेभ्यो भववत्' इति वचनमुपपद्यते, न ह्यृतुषु पितृषु उषसि वा जातिरस्ति । तथा पितृदेवत्यम्, देवदेवत्यमिति प्रयोगोऽप्येवमेवोपपद्यते ।

*कथमिति* । पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्तीति प्रश्नः । *मन्त्रस्तुत्यामपीत्यादि* । नानेनौपचारिकत्वं प्रयोगस्योच्यते, अपि तु

न्यासः

सास्य देवता ॥ तस्मिन्नभिधेय इति । यागसम्प्रदानभूतदेवतास्वामिनीके पुरोडाशादौ । एवं चाभिधेयविशेषः । सामान्योक्तावपीतीत्यस्येहानुवृत्तेर्लभ्यते । आदित्यम्, बार्हस्पत्यमिति । 'दित्यदित्यादित्यपत्युत्तरपदात्' इत्यादिना ण्यः । यागस्य देवतेहाभिप्रेता ।

ऐन्द्रो मन्त्र इति च प्रयोगे कस्यचित् पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्ति । अतो नासौ देवतेति प्रत्ययेनात्र न भवितव्यमिति मन्यते । मन्त्रस्तुत्यमिति । यथा देवता पूजार्हा तथा मन्त्रस्तुत्यमपि वस्तु, ततो देवतासाधर्म्यात् तदपि देवतेत्युपचरन्ति विद्वांसः । इन्द्रश्च मन्त्रस्तुत्यो भवति, तस्मादसम्प्रदानभूतमपि तं देवतेत्युपचरन्ति । दैवतोपचारं तत्र कुर्वन्तीत्यर्थः । नन्वेवमपि नैवात्र प्रत्ययेन

कथम् – आग्नेयो वै ब्राह्मणो देवतेति ? उपमानाद्भविष्यति । 'महाराजप्रोष्ठपदाट्ठञ्' इति यावत् 'सास्य देवता' इत्यधिकारः । सेति प्रकृते पुनः समर्थविभक्तिनिर्देशः संज्ञानिवृत्त्यर्थः ॥

कस्येत् ॥ २५ ॥

कशब्दो देवतायां प्रजापतेर्वाचकः, ततः पूर्वेणैवाण्प्रत्ययः सिद्ध इकारादेशार्थं वचनम् । कस्य इकारादेशो भवति प्रत्ययसन्नियोगेन । कायं हविः । कायमेककपालं निर्वपेत् ॥

पदमञ्जरी

मुख्य एव प्रयोगः, यागसम्प्रदाने सार्वलौकिकः प्रयोगः, अयं तु नैरुक्तानामित्येतावान्विशेषः । *उपचरन्तीति* ब्रुवते, प्रयुञ्जत इत्यर्थः ।

*कथमित्यादि* । पूर्वोक्तं प्रकारद्वयमत्र नास्तीति प्रश्नः । *उपमानादिति* । काषायौ गर्दभस्य कर्णावितिवद् गौणोऽयं प्रयोग इत्यर्थः । *सेति प्रकृत इति* । प्रकृतं हि साग्रहणं संज्ञया सम्बद्धमिति तदनुवृत्तौ संज्ञाया अप्यनुवृत्तिः स्यात् ॥

कस्येत् ॥ किमो विभक्तौ कादेशं कृत्वा कस्येति निर्दिष्टमित्याशङ्कामपनयति—*कशब्द इति* । एवं च कृत्वा कायानुब्रूहीति सम्प्रैषः । कस्मै अनुब्रूहीति, 'न कस्मै देवाय हविषा विधेम' इति तु छान्दसः स्मैभावः, यदिन्द्राग्नी अवमस्यामित्यादिवत् । *कायमिति* । इत्वे कृते यस्येति लोपः प्राप्तः परत्वादादिवृद्ध्या

न्यासः

भवितव्यम्; मुख्ये सति गौणस्याश्रयणस्यायुक्तत्वात् ? नैष दोषः; यथैव हि कश्चिदेकेनैव यत्नेन श्वेतो धावतीति तन्त्रेण वाक्यद्वयमुच्चारयति, तथेहाप्याचार्येण द्वे वाक्ये तन्त्रेणोच्चारिते । तत्रैकं मुख्यार्थम्, अपरं गौणार्थं भविष्यति ।

कथमित्यादि । अग्नेर्हि न मुख्यं देवतात्वम्, नापि गौणम् । तत्र मुख्यं तावन्नास्ति; देयाभावेनासम्प्रदानभूतत्वात् । गौणमपि नास्ति; मन्त्रशब्दाभावेन मन्त्रस्तुत्यतयानुपात्तत्वात् । तस्मादत्र प्रत्ययेन न भवितव्यमिति भावः । उपमानाद्भविष्यतीति । देवतास्वामिनीक एवात्र प्रत्यय उपपद्यते । यस्त्वर्थान्तरे प्रत्ययान्तप्रयोगः स आग्नेय इवाग्नेय इत्युपमानाद् भविष्यति, यथा—काषायौ गर्दभस्य कर्णाविति । ननु च सास्मिन् पौर्णमासीति सेति प्रकृतमेव । तत् किमर्थं पुनरिह समर्थविभक्तिर्निर्दिश्यत इत्यत आह—सेति प्रकृत इत्यादि । यदिदं सेति प्रकृतं तत्संज्ञासम्बद्धमिति, तदनुवृत्तौ संज्ञाग्रहणस्याप्यनुवृत्तिः स्यात् । तस्मात् तन्निवृत्त्यर्थं पुनरिह समर्थविभक्तिर्निर्दिश्यत इति ॥

कस्येत् ॥ तकारो मुखसुखार्थः, न दीर्घनिवृत्त्यर्थः । भाव्यमानेनाणा सवर्णानाम-

## शुक्राद् घन् ॥ २६ ॥

शुक्रशब्दात् 'सास्य देवता' इत्यस्मिन्नर्थे घन् प्रत्ययो भवति। अणोऽपवादः। शुक्रियं हविः। शुक्रियोऽध्यायः॥

## अपोनप्त्रपान्नप्तृभ्यां घः ॥ २७ ॥

अपोनप्तृ, अपान्नप्तृ—इत्येताभ्यां घः प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये। अणोऽपवादः। अपोनप्त्रियं हविः, अपांनप्त्रियम्।

अपोनपाद्, अपांनपादिति देवताया नामधेये एते, तयोस्तु प्रत्ययसन्नियोगेन रूपमिदं निपात्यते॥

## छ च ॥ २८ ॥

अपोनप्तृ, अपान्नप्तृ—इत्येताभ्यां छकारः प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये। अणोऽपवादः। अपोनप्त्रीयं हविः। अपान्नप्त्रीयम्। योगविभागः संख्यातानुदेशपरिहारार्थः।

पदमञ्जरी

बाध्यते, श्रीर्देवतास्य श्रायमितिवत्। 'सोमाट्ट्यण्' इत्यत्र कग्रहणे च क्रियमाणे यद्यपि यस्येति लोपात्परत्वाद् वृद्धिर्भवति, कृतायामपि वृद्धौ यस्येति लोपः स्यादेव॥

*अपोनप्त्रपान्नप्तृभ्यां घः*॥ *अपोनपात् अपांनपादिति देवतानामधेये इति*। पृषोदरादित्वादनयोः साधुत्वम्। *तयोस्तु प्रत्ययसन्नियोगेनेति*। एवं च अपोनपाते अनुब्रूहि, अपांनपातेऽनुब्रूहि, अपोनपात्तं यज, अपां नपातं यजेति सम्प्रैषः। वेदे तु अपोनप्त्रे स्वाहेति छान्दसः प्रयोगः॥

छ च॥ *योगविभाग इत्यादि*। पूर्वसूत्र एव छग्रहणे सति घच्छौ द्वौ प्रत्ययौ,

न्यासः

ग्रहणात्। सत्यपि सवर्णग्रहण आन्तरतम्याद् ह्रस्वस्य ह्रस्व एव भविष्यति, न दीर्घः। प्रजापतेर्वाचक इति। अनेनासर्वनामत्वमस्य दर्शयति। इकारस्य 'यस्येति च' इति लोपो न भवति, विधानसामर्थ्यात्। कायमिति। वृद्ध्यायादेशौ॥

शुक्राद् घन्॥ अपोनप्त्रपान्नप्तृभ्यां घः॥ अपोनपात्, अपान्नपादिति यद्येते देवतानामधेये तत् कथमेतद्विलक्षणं प्रकृतिरूपं सूत्रे श्रूयते? इत्याह—तयोस्तु प्रत्ययसन्नियोगेनेत्यादि॥

छ च॥ अथ किमर्थं योगविभागः क्रियते, न 'अपोनप्तृ-अपान्नप्तृभ्यां घच्छौ'

* छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् * ॥ पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम् ॥

* शतरुद्राच्छश्च घश्च * । शतरुद्रीयम् ॥

## महेन्द्राद् घाणौ च ॥ २९ ॥

महेन्द्रशब्दाद् घाणौ प्रत्ययौ भवतः, चकाराच्छश्च, 'सास्य देवता' इत्यस्मिन्विषये । महेन्द्रो देवतास्य महेन्द्रियं हविः । माहेन्द्रम् । महेन्द्रीयम् ॥

## सोमाट् ट्यण् ॥ ३० ॥

सोमशब्दात् टयण्प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये । अणोऽपवादः । णकारो वृद्ध्यर्थः । टकारो ङीबर्थः । सोमो देवतास्य सौम्यं हविः । सौम्यं सूक्तम् । सौमी ऋक् ॥

### पदमञ्जरी

प्रकृती अपि द्वे इति स्यात्सङ्ख्यातानुदेशः । *शतरुद्रीयमिति* । शतशब्दोऽनन्तवचनः, शतं रुद्रा देवताऽस्येति घच्छौ, तयोर्विधानसामर्थ्याद् 'द्विगोर्लुगनपत्ये' लुग्न भवति ॥

*महेन्द्राद्घाणौ च* ॥ 'महेन्द्रादण्च' इत्युच्यमानेऽनन्तरश्छ एव समुच्चीयेत, न व्यवहितो घ इति पुनर्ग्रहणम् ॥

*सोमाट् ट्यण्* ॥ *सौमीति* । टित्त्वान्ङीप्, 'हलस्तद्धितस्य' इति यलोपः ॥

### न्यासः

इत्येकयोग एव क्रियते ? इत्याह—योगविभाग इत्यादि । एकयोगे हि द्वे प्रकृती, प्रत्ययावपि द्वावेव, समसंख्यत्वात् संख्यातानुदेशः स्यात्; अतस्तन्निवृत्तये योगविभागः क्रियते ।

छप्रकरण इत्यादि । पैङ्गाक्षीपुत्रादिभ्यश्छप्रकरणे छस्योपसंख्यानम् = प्रतिपादनं कर्त्तव्यम् । तत्रेदं प्रतिपादनम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन पैङ्गाक्षीपुत्रादिभ्यश्छो भवतीति ॥

महेन्द्राद् घाणौ च ॥ 'अथ महेन्द्रादण् च' इत्येव कस्मान्नोक्तम् ? चकाराद् घच्छौ भविष्यतः, एवमुच्यमाने द्वेष्यमपि विज्ञायते—अनन्तरं छ एव चकारेणात्र कृष्यत इति । तस्मात् तथा मा विज्ञायीति घग्रहणम् ॥

सोमाट् ट्यण् ॥ सौमीति । 'हलस्तद्धितस्य' इति यलोपः ॥

**वाय्वृतुपित्रुषसो यत् ॥ ३१ ॥**

वाय्वादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति 'सास्य देवता' इत्येतस्मिन्विषये । अणोऽपवादः । वायुर्देवतास्य वायव्यम् । ऋतव्यम् । पित्र्यम् । उषस्यम् ॥

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ३२ ॥**

द्यावापृथिव्यादिभ्यश्छः प्रत्ययो भवति चकाराद्यत् 'सास्य देवता' इत्यस्मिन्विषये। अणो ण्यस्य चापवादः। द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयम्, द्यावापृथिव्यम्। शुनश्च सीरश्च तौ देवते अस्येति शुनासीरीयम्, शुनासीर्यम्। शुनः=वायुः। सीरः=आदित्यः। मरुत्वान्देवतास्य मरुत्वतीयम्, मरुत्वत्यम्। अग्नीषोमीयम्, अग्नीषोम्यम्।

पदमञ्जरी

*वाय्वृतुपित्रुषसो यत् ॥ वायव्यमिति* । 'ओर्गुणः', 'वान्तो यि प्रत्यये' । *पित्र्यमिति* । 'रीङृतः' इति रीङ्, यस्येति लोपः ॥

*द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च* ॥ *अणो ण्यस्य चापवाद इति* । वास्तोष्पतिशब्दात्पत्युत्तरपदस्य ण्यस्यापवादः, शेषेभ्योऽणः । *द्यावापृथिव्याविति* । 'दिवो द्यावा', 'दिवसश्च पृथिव्याम्' इति द्यावादेशः । *शुनासीराविति* । 'देवता द्वन्द्वे च' इत्यानङादेशः । *शुनो वायुः, सीर आदित्य इति* । अन्ये तु एकमेव शुनसीरमिन्द्रस्य गुणममन्यन्त, यथाहाश्वलायनः— 'इन्द्रो वा शुनासीरः' इति । मन्त्रलिङ्गञ्च भवति—इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति । मरुतोऽस्य सन्ति मरुत्वानिन्द्रः । *अग्नीषोमीयमिति* । 'ईदग्नेः

न्यासः

वाय्वृतुपित्रुषसो यत् ॥ वायव्यम् । ऋतव्यमिति । 'ओर्गुणः', 'वान्तो यि प्रत्यये' इत्यवादेशः । पित्र्यमिति । 'रीङृतः' इति रीङ्, यस्येति लोपः ॥

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ अणो ण्यस्य चापवाद इति । वास्तोष्पतिशब्दाद् 'दित्यदित्यादित्य' इत्यादिना प्राप्तस्य ण्यस्यायमपवादः । शेषेभ्यस्त्वौत्सर्गिकस्याणः । वास्तुनः पतिर्वास्तोष्पतिः । वास्तुशब्दस्य नपुंसकस्य पुंल्लिङ्गता, षष्ठ्यर्थेऽलुक् च निपातनात् । षष्ठ्याः 'पतिपुत्रपृष्ठ' इत्यादिना षत्वम् । द्यावापृथिव्याविति । 'दिवो द्यावा' इति द्यावादेशः । शुनासीरीयमिति । 'देवताद्वन्द्वे च' इत्यानङ् । अग्नीषोमीयमिति । 'ईदग्नेः सोमवरुणयोः' इतीत्त्वम्, 'अग्नेः स्तुत्स्तोमसमाः' इति षत्वम् ॥

वास्तोष्पतीयम् , वास्तोष्पत्यम् । गृहमेधीयम् , गृहमेध्यम् ॥

अग्नेर्ढक् ॥ ३३ ॥

अग्निशब्दाद् ढक् प्रत्ययो भवति 'सास्य देवता' इत्येतस्मिन्विषये । अणोऽपवादः । अग्निर्देवतास्य आग्नेयोऽष्टाकपालः ।

* प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः * ॥

कालेभ्यो भववत् ॥ ३४ ॥

कालविशेषवाचिभ्यः शब्देभ्यो भववत्प्रत्यया भवन्ति 'सास्य देवता' इत्यस्मिन्विषये । 'कालाट्ठञ्' इति प्रकरणे भवे प्रत्यया विधास्यन्ते, ते 'सास्य देवता' इत्यस्मिन्नर्थे तथैवेष्यन्ते, तदर्थमिदमुच्यते । वत्करणं सर्वसादृश्यपरिग्रहार्थम् । मासे भवं मासिकम् । आर्द्धमासि-

पदमञ्जरी

सोमवरुणयोः' वास्तोः पतिर्वास्तोष्पतिः, अस्मादेव निर्देशात्साधुः । गृहमेधशब्दमकारान्तं बह्वृचा मन्यन्ते । 'मरुद्भ्यो गृहमेधेभ्य उत्तरा' इत्याश्वलायनः । 'गृहमेधास आगता' इति च *मन्त्रलिङ्गम्* । 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति तु *तैत्तिरीयकम्* । तत्र चेकारान्तो नकारान्तो वेति विप्रतिपन्नाः ॥

*अग्नेर्ढक्* ॥ कलेर्ढगित्यत्रोक्तमेवार्थं स्मारयति—*प्राग्दीव्यतीयेष्विति* ॥

*कालेभ्यो भववत्* ॥ *कालविशेषवाचिभ्य इति* । स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात् । *वत्करणमित्यादि* । असति वत्करणे 'कालेभ्यो भवः' इत्युच्यमाने यदि तावदेवं सम्बन्धः, कालेभ्यो भवे ये प्रत्यया विधास्यन्ते ते 'सास्य देवता' इत्यत्रार्थे भवन्तीति देवताप्रकृतिरविशेषिता स्यात् , ततश्च 'कालाट्ठञ्' इति ठञिन्द्रादेरपि प्राप्नोति । अथ पुनरेवं सम्बन्धः—भवे ये प्रत्यया विधास्यन्ते ते भवन्ति कालेभ्यो देवताभ्य इति ? एवमपि भवप्रत्यया न विशेषिताः स्युः, ततश्च 'दिगादिभ्यो यत्' इति यत् प्रत्ययोऽपि भवे विहितः कालवाचिभ्यो-

न्यासः

अग्नेर्ढक् ॥ कालेभ्यो भववत् ॥ बहुवचनग्रहणेन स्वरूपग्रहणे निरस्ते, कालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह—कालविशेषवाचिभ्य इत्यादि । वत्करणमित्यादि । सर्वस्य सादृश्यस्य परिग्रहो यथा स्यादित्येवमर्थं वत्करणम् । 'कालेभ्यो भवः' इत्युच्यमाने यदि तावत् कालग्रहणं भवप्रत्ययैः सम्बध्यते ? भवेऽर्थे कालेभ्यो विधास्यन्ते ये प्रत्ययास्ते 'सास्य देवता' इत्येतस्मिन्नर्थे भवन्ति, तदा च देवताप्रकृतिरविशेषिता स्यात् ।

कम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् । तथा—मासो देवतास्य मासिकम् । आर्धमासिकम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् ।

## महाराजप्रोष्ठपदाट्ठञ् ॥ ३५ ॥

महाराजशब्दात्प्रोष्ठपदशब्दाच्च ठञ् प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये । महाराजो देवतास्य माहाराजिकम् । प्रौष्ठपदिकम् ।

* ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् * । नवयज्ञोऽस्मिन्वर्तते नावयज्ञिकः कालः । पाकयज्ञिकः ॥

* पूर्णमासादण् * । पूर्णमासोऽस्यां वर्तते पौर्णमासी तिथिः ॥

पदमञ्जरी

ऽस्मिन्नर्थे प्राप्नोति । अथाप्येवं सम्बन्धः—कालेभ्यो भवे ये प्रत्ययास्ते भवन्ति, कालेभ्य एव देवतार्थे इति तत्र सकृत् श्रुतस्य तस्य कालशब्दस्यैवमुभयसम्बन्ध एव तावद् दुर्लभः । अथापि लभ्येत, एवमपि यः कश्चित्कालाद्भवे प्रत्ययो यतः कुतश्चिद्देवतायाः स्याद् ऋतुभ्योऽण् मुहूर्त्तादेरपि प्राप्नोति । वतिनिर्देशे तु सति सादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन भवेऽर्थे विधास्यन्ते ये प्रत्ययाः, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न किञ्चिदनिष्टम् ॥

*महाराजप्रोष्ठपदाट्ठञ्* ॥ महाराजो वैश्रवणः, प्रोष्ठपदशब्दात्पूर्वेण नक्षत्राणि प्राप्ते वचनम्, नवयज्ञ आग्रयणम् । *पूर्णमासादणिति* । अस्मिन्वर्तत इत्येव ।

न्यासः

एवञ्च दैवतामात्रवाचिनः प्रातिपदिकादविशेषेण प्रत्ययाः प्रसज्येरन् । अथ देवता-प्रकृतिभिः कालग्रहणं सम्बध्यते ? भवे ये विधास्यन्ते ते प्रत्ययाः कालेभ्यो देवताभ्यः प्रसज्येरन् । अथाप्युभयेषां सन्निधानाद् विशेष्यभेदेन वाक्यभेदाच्च प्रत्ययैः प्रकृतिभिश्च सम्बध्यते – कालेभ्यो भवेऽर्थे विधास्यन्ते ये प्रत्ययास्ते कालेभ्यो देवताभ्यो भवन्तीति ? एवमपि यः कश्चित् कालप्रकृतिः प्रत्ययो यतः कुतश्चित् कालाद्देवतायाः स्यात्, ऋतुभ्योऽण् मुहूर्तादिभ्योऽपि[1] स्यात् । वतौ तु सति तस्य सादृश्यविधानात् सर्वसादृश्यपरिग्रहो भवति । तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया भवार्थे विधास्यन्ते, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न भवत्यनिष्टप्रसङ्गः । वासन्त इति । सन्धिवेलादिसूत्रेणाण् । प्रावृषेण्य इति । 'प्रावृष एण्यः' ।

---

१. 'देवताभ्योऽपि' इति महीशूरसंस्करणे पाठः ।

## पितृव्यमातुलमातामहपितामहाः ॥ ३६ ॥

पितृव्यादयो निपात्यन्ते । समर्थविभक्तिः, प्रत्ययः, प्रत्ययार्थोऽनुबन्ध इति सर्वं निपातनाद्विज्ञेयम् । * पितृमातृभ्यां भ्रातर्यभिधेये व्यत्, डुलच् – इत्येतौ प्रत्ययौ निपात्येते * । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । * ताभ्यां पितरि डामहच् * । * मातरि षिच्च * । ताभ्यामेव पितरि डामहच् प्रत्ययो भवति – पितुः पिताः पितामहः, मातुः पिता मातामहः । मातरि षिच्च – पितामही, मातामही ।

* अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः * । अवेर्दुग्धम् अविसोढम् । अविदूसम् । अविमरीसम् ॥

* तिलान्निष्फलात्पिञ्जपेजौ प्रत्ययौ वक्तव्यौ * । निष्फलस्तिलः तिलपिञ्जः । तिलपेजः ।

* पिञ्जश्छन्दसि डिच्च * । तिल्पिञ्जः ॥

पदमञ्जरी

*पौर्णमासीति* । पूर्णो मासोऽस्यां तिथौ वर्तत इति विग्रहः, एवं च व्युत्पत्तिः 'सास्मिन्पौर्णमासी' इत्यत्रापि दर्शिता ॥

*पितृव्यमातुलमातामहपितामहाः* ॥ *पितृमातृभ्यामिति* । स्वरूपपदार्थकत्वेनाभ्यर्हितत्वे विशेषाभावाल्लघ्वक्षरस्य पूर्वनिपातः, अयोनिसम्बन्धवाचित्वादनङोऽभावश्च । *डामहजिति* । कथं तर्ह्याकारेऽवग्रहः—माता + महः, पिता + मह इति ? तस्मान्महप्रत्ययः पितृमातृभ्यां निपातितस्तयोश्चानङादेश इति केचित् । *वृत्तिकारस्तु* संहितापाठस्यैव नित्यत्वात् 'न लक्षणेन पदकारा अनुवर्त्याः' इति न्यायेनावग्रहो मा कारीति मन्यते । *मातरि षिच्चेति* । षित्त्वमुपसङ्ख्येयमित्यर्थः । न पुनः षकारोऽनुबन्धः कर्तव्य इति देशाभावात्—मातामहा इत्यपि मन्त्रे दृश्यते ।

*अवेर्दुग्ध इति* । दुग्धं क्षीरम् । सोढादीनाम् 'आदेशप्रत्यययोः' इति षत्वं न न भवति, सकारोच्चारणसामर्थ्यात् ।

*निष्फलस्तिल इति* । सस्यावस्थायां फलरहित उच्यते, धान्यावस्थायां प्रयोजनशून्य इत्यन्ये ॥

न्यासः

महाराजप्रोष्ठपदाट् ठञ् ॥ पितृव्यमातुलमातामहपितामहाः ॥ पितामही, मातामहीति । 'षिद्गौरादिभ्यश्च' इति ङीष् ॥

## तस्य समूहः ॥ ३७ ॥

'तस्य' इति षष्ठीसमर्थात् 'समूहः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। किमिहोदाहरणम्? चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत्प्रतिपदं ग्रहणम्। अचित्ताट्ठकं वक्ष्यति – 'अनुदात्तादेरञ्', 'गोत्राद्वुञ्' प्रतिपदं च 'केदाराद्यञ्च' इत्येवमादि, तत्परिहारणात्रोदाहरणं द्रष्टव्यम्। काकानां समूहः काकम्। शौकम्[1]। बाकम्। 'इनित्रकट्यचश्च' इति यावत्समूहाधिकारः॥

※ गुणादिभ्यो ग्रामज्वक्तव्यः[2] ※। गुणग्रामः। करणग्रामः। गुण। करण। तत्त्व। शब्द। इन्द्रिय। आकृतिगणः[2]॥

## भिक्षादिभ्योऽण् ॥ ३८ ॥

'भिक्षा' इत्येवमादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। अण्ग्रहणं बाधकबाधनार्थम्। भिक्षाणां समूहो

### पदमञ्जरी

*तस्य समूहः*॥ सर्वस्यैव विषयस्यापवादैरवष्टब्धत्वात्पृच्छति—*किमिहोदाहरणमिति*। काकशुकवकशब्दा आद्युदात्ताः 'प्राणिनां कुपूर्वाणाम्' इत्यनेन, अस्यार्थः—व्यधिकरणे षष्ठ्यौ, अथादिः प्राक् शकटेरित्यत आदिरित्यनुवृत्तं षष्ठीबहुवचनान्तं विपरिणम्यते, प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे अचस्तेषामुदात्तो भवतीति। तत्र शौकमित्यनुदाहरणम्; खण्डिकादिषु पाठात्। वकशब्दस्तूदाहार्यः॥

*भिक्षादिभ्योऽण्*॥ *अण्ग्रहणं बाधकबाधनार्थमिति*। भिक्षाशब्दोऽयम् 'गुरोश्च हलः' इत्यकारप्रत्ययान्तत्वादन्तोदात्तः, ततः 'अनुदात्तादेः' इत्यञ् अणो बाधकः

### न्यासः

तस्य समूहः॥ काकम्[3], शौकम्, वाकमिति। काकशुकवकशब्दा आद्युदात्ताः। 'प्राणिनां कुपूर्वाणाम्' इत्यनेन। अस्यायमर्थः—प्राणिविशेषवाचिनां शब्दानां य आदिभूताः कवर्गात् पूर्वे तेषामुदात्तो भवतीति॥

भिक्षादिभ्योऽण्॥ अथाण्ग्रहणं किमर्थम्, न भिक्षादिभ्यो यथाविहितमेवोच्येत? इत्यत आह—अण्ग्रहणमित्यादि। भिक्षाशब्दोऽयम् 'गुरोश्च हलः' इत्यकारप्रत्ययान्त-

---

१. वस्तुस्त्वत्र 'खण्डिकादिभ्यश्च' इत्यञेव भवतीति नेदमुदाहरणम्। न्यासानुसारेणैवात्रास्माभिस्त्विदं स्थापितमिति ध्येयम्। २-२. गुणादिभ्य इत्यारभ्याकृतिगण इत्यन्तः पाठो बहुषु पुस्तकेषु नास्ति। ३. कौकमिति महीशूरपुस्तके पाठः।

भैक्षम्। गार्भिणम्। युवतिशब्दोऽत्र पठ्यते, तस्य ग्रहणसामर्थ्याद् पुंवद्भावो न भवति—'भस्याऽढे तद्धिते' इति। युवतीनां समूहो यौवतम्।

भिक्षा। गर्भिणी। क्षेत्र। करीष। अङ्गार। चर्मिन्[1]। धर्मिन्[1]। सहस्र। युवति। पदाति। पद्धति। अथर्वन्[2]। दक्षिणा। भूत[3]॥

पदमञ्जरी

प्राप्नोति, तस्य बाधनार्थमण्ग्रहणम्। ननु च यद्यत्राञ् स्यात्पुनर्वचनमनर्थकं स्यात्? नानर्थकम्; परत्वादचि तत्तल्लक्षणष्ठक् प्राप्नोति, तद्बाधनार्थमत्र पुनर्वचनं स्यादित्यञ् स्यादेव, पुनरण्ग्रहणादणेव भवति। *गार्भिणमिति*। 'भस्याऽढे तद्धिते' इति पुंवद्भावेन ङीपो निवृत्तिः, ततोऽणि 'इनण्यनपत्ये' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः। *तस्य ग्रहणसामर्थ्यात्पुंवद्भावो न भवतीति*। यदि स्यात्, 'सिद्धत्वात्प्रत्ययविधौ' इति वचनादनुत्पन्न एव तद्धिते पुंवद्भावेन भवितव्यम्। युवशब्दश्च 'कनिन्युवृष' इति कनिन्प्रत्ययान्तत्वादाद्युदात्त इत्यौत्सर्गिक एवाण् सिद्ध इति तस्येह पाठोऽनर्थकः स्यात्। *यौवतमिति*। यथा

न्यासः

त्वादन्तोदात्तः। तत्र 'अनुदात्तादेरञ्' इत्यञ् अणो बाधकः प्राप्नोति, तस्य बाधकस्य बाधनार्थमण्ग्रहणम्। ननु च यद्यत्राण् स्यात् पुनर्वचनमनर्थकं स्यात्? नैतदस्ति; परत्वादचित्तलक्षणष्ठक् प्राप्नोति, अतस्तद्बाधनार्थं पुनर्वचनं स्यात्। अञ्प्रत्ययस्तु स्यादेव, अण्ग्रहणात् पुनरणेवेति न भवत्येष दोषः। गार्भिणमिति। गर्भिणीनां समूहो 'भस्याऽढे तद्धिते'। 'सिद्धत्वात्[4] प्रत्ययविधौ' इति पुंवद्भावेन स्त्रीप्रत्ययनिवृत्तिः, ततोऽण्, तस्मिन् 'नस्तद्धिते' इति टिलोपः प्राप्तः, 'इनण्यनपत्ये' इति प्रकृतिभावान्न भवति। तस्य ग्रहणेति। युवतिशब्दस्य यदि पुंवद्भावो न भवति, तदा तस्य प्रत्ययान्तत्वाद् 'अनुदात्तादेः' इत्यञि प्राप्ते तद्बाधनार्थमिहाण्ग्रहणमर्थवद्भवति। यदि पुंवद्भावः स्यात् तदा तदनर्थकं स्यात्। तथा हि—'सिद्धश्च प्रत्ययविधौ' इति वचनादनुत्पन्न एव तद्धिते बुद्धिस्थे पुंवद्भावेन भवितव्यम्। युवशब्दस्य 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः'

---

१-१. चर्मन्, धर्मन्—इति पाठा०। २. अर्चन्—इति पाठा०।

३. विषय। श्रोत्र। * वृक्षादिभ्यः खण्डः *। वृक्षखण्डः। तरुखण्डः। वृक्ष। तरु। पादप—इत्यधिकमत्र पुस्तकद्वये। तत्रैकस्मिन् पुस्तके "वृक्षादिभ्यः षण्डप्रत्ययो भवति। वृक्षषण्डः, तरुषण्डः"—इति पाठा०।

४. आधुनिके भाष्यसंस्करणे तु 'सिद्धश्च' इति पाठ उपलभ्यते।

## गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ ३९ ॥

गोत्रादिभ्यो वुञ्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यगात्रं न तु पौत्रप्रभृत्येव। औपगवानां समूहः औपगवकम्। कापटवकम्। उक्षन्—औक्षकम्। उष्ट्र—औष्ट्रकम्। उरभ्र—औरभ्रकम्। राजन्—राजकम्। राजन्य—राजन्यकम्। राजपुत्र – राजपुत्रकम्। वत्स – वात्सकम्। मनुष्य –

पदमञ्जरी

तु वार्त्तिकं तथा पुंवद्भाव इष्यते। आह हि—'भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ' इति ॥

*गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्* ॥ *अपत्याधिकारादन्यत्रेति*। यद्येवम्, राजन्यमनुष्ययोरुपादानमनर्थकम्, गोत्र इत्येवसिद्धम्। न तावपत्यप्रत्ययान्तौ; जातेः प्रत्ययार्थत्वात्। उक्तं हि–'राज्ञोऽपत्ये जातिग्रहणम्, मनोर्जातावञ्यतौ षुक्चेति। किं तर्ह्युच्यते 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति यलोपो न भवतीति, यावताऽनापत्ययकारत्वेनैव न भविष्यति? सत्यम्; अपत्यार्थत्वमभ्युपेत्यैतदुच्यते। यद्यपत्यार्थत्वमभ्युपेयते, राजन्यमनुष्ययोर्ग्रहणमनर्थकम्? नानर्थकम्; ज्ञापनार्थत्वात्, एतज् ज्ञापयति—नैतयोरपत्यकृतं भवतीति, तेन यलोपो न भवति, सर्वथा 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति न वक्तव्यम्। *औपगवकमिति*। यथात्र परोऽप्यनुदात्तादेरञ् न भवति, तथा 'खण्डिकादिभ्यश्च' इत्यत्र वक्ष्यते ॥

न्यासः

इति कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वम्। तत्र यदि पुंवद्भावः स्यादुत्सर्गलक्षणेनैवाण् सिद्ध इतीह ग्रहणमनर्थकं स्यात्। तस्माद् मा भूदस्यानर्थक्यमिति तस्य ग्रहणसामर्थ्यादेव पुंवद्भावो न भवति, तेन यौवतमिति सिद्धं भवति ॥

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इति। यद्येवम्, गोत्रग्रहणेनैतस्य सिद्धत्वाद् राजन्यमनुष्ययोरुपादानमनर्थकम्? नैतदस्ति; न हि तौ गोत्रप्रत्ययान्तौ, जातेः प्रत्ययार्थत्वात्। यद्येवम्, लोपस्य प्राप्तिरेव नास्ति, तत्र यदुक्तम्—'प्रकृत्याके राजन्यमनुष्ययुवानः' इति यलोपो न भवतीति, तदनर्थकं स्यात्? एतत् पुनरेकीयमतमाश्रित्योक्तम्। केचिदाचार्या राजन्यमनुष्ययोरपत्यप्रत्ययान्तत्वमिच्छन्ति, अतस्तन्मतमाश्रित्यैतदुक्तमित्यदोषः, तन्मतेन तर्हि राजन्यमनुष्ययोर्ग्रहणमनर्थकं स्यात्? ज्ञापनार्थत्वात्। तेनैतद् ज्ञाप्यते—राजन्यमनुष्ययो-

मानुष्यकम्। अज—आजकम्। 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति यलोपो न भवति – 'आपत्यस्य च तद्धितेऽनाति' इति।

* वृद्धाच्चेति वक्तव्यम् *। वृद्धानां समूहो वार्द्धकम्॥

केदाराद्यञ्च॥ ४०॥

केदारशब्दाद् यञ्प्रत्ययो भवति, चकाराद् वुञ् च, 'तस्य समूहः' इत्येतस्मिन्विषये। अचित्तलक्षणस्य ठकोऽपवादः। केदाराणां समूहः कैदार्यम्। कैदारकम्।

* गणिकायाश्च यञ्वक्तव्यः *। गणिकानां समूहो गाणिक्यम्॥

ठञ् कवचिनश्च॥ ४१॥

कवचिन्शब्दाट्ठञ् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। कवचिनां समूहः कावचिकम्।

चकारः केदारादित्यस्यानुकर्षणार्थः—केदाराणां समूहः कैदारिकम्॥

ब्राह्मणमाणववाडवाद्यन्॥ ४२॥

ब्राह्मणादिभ्यः शब्देभ्यो यन्प्रत्ययो भवति 'तस्य समूहः' इत्येत-

पदमञ्जरी

*ब्राह्मणमाणववाडवाद्यन्॥ नकारः स्वरार्थं इति।* 'ञ्नित्यादिर्नित्यम्' इत्या-

न्यासः

यंकारस्य किञ्चिदपत्याश्रितं कार्यं न भवतीति। किं पुनस्तत्? आपत्यव्यपदेशम्। तेन राजन्यकम्, मानुष्यकमिति—अत्रापि 'आपत्यस्य च तद्धितेऽनाति' इति यलोपो न भवतीति। तथा सूत्रोपात्त एव राजन्यमनुष्ययोः प्रकृतिभावः 'प्रकृत्याके राजन्यमनुष्ययुवानः' इत्यनेनाख्यायत इति वेदितव्यम्।

वृद्धाच्चेति वक्तव्यमिति। वृद्धशब्दाद् वुञ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—इह पुनरुत्तरसूत्राच्चकारोऽनुवर्त्तते सिंहावलोकितन्यायेन, स चानुक्तसमुच्चयार्थः, तेन वृद्धशब्दाद् वुञ् भवतीति। योगश्चायं यथायोगमणञोरपवादः॥

केदाराद् यञ्च॥ गणिकायाश्च यञ् वक्तव्यः। वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—इहाप्युत्तरसूत्राच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन गणिकाशब्दादपि यञ् भवतीति, वुञ् न भवतीति; अनभिधानात्॥

ठञ् कवचिनश्च॥ कवचिन्शब्दो मत्वर्थीयेनिप्रत्ययान्तः, प्रत्ययस्वरेणान्तोदात्तः। तस्मादनुदात्तादिलक्षणेऽञि प्राप्ते वचनम्॥

स्मिन्विषये। नकारः स्वरार्थः। ब्राह्मणानां समूहो ब्राह्मण्यम्। माणव्यम्। वाडव्यम्।

* यन्प्रकरणे पृष्ठादुपसंख्यानम् *। पृष्ठानां समूहः पृष्ठ्यः षडहः।

* अह्नः खः क्रतौ *। अह्नां समूहः अहीनः क्रतुः। क्रताविति किम्? आह्नः। खण्डिकादिषु दर्शनादञ्भवति।

* पर्श्वा णस्वक्तव्यः *। पर्शूनां समूहः पार्श्वम्। पदसंज्ञकत्वाद् गुणो न भवति।

* वातादूलः[1] *। वातानां समूहो वातूलः[1] ॥

## ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ४३ ॥

### पदमञ्जरी

द्युदात्तत्वं यथा स्यात्। किमर्थं पुनर्ब्राह्मणादिभ्यो यन्विधीयते, न प्रकृतो यञेव विधीयते, न हि वृद्धेषु यञो यनो वा विशेषोऽस्ति—तदेव रूपम्, स एव स्वरः, ठञस्त्वस्वरितत्वादननुवृत्तिः? ज्ञापनार्थं तु। एतज् ज्ञापयति–अन्येभ्यऽप्ययम्। किं सिद्धं भवति? पृष्ठादुपसङ्ख्यानं चोदयिष्यति तन्न वक्तव्यं भवति।

*पृष्ठानां समूह इति*। पृष्ठशब्दः स्तुतिविशेषवचनः। *पृष्ठ्यः षडह इति*। तद्भृति तदुपचारः।

*णस्वक्तव्य इति*। सकारः पदसञ्ज्ञार्थः, तेन पार्श्वमित्यत्र भत्वाभावादोर्गुणो न भवति ॥

### न्यासः

ब्राह्मणमाणववाडवाद् यन् ॥ पृष्ठादुपसंख्यानमिति। पृष्ठशब्दाद् यन्प्रत्ययस्योपसंख्यानम् = व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन पृष्ठशब्दादपि भविष्यतीति। अहीन इति। 'अह्नष्टखोरेव' टिलोपः। आह्न इति। 'अल्लोपोऽनः' इत्यकारलोपः। ननु चाचित्तलक्षणेन ठका भवितव्यम्, तत् कथमाह्न इति भवति? इत्याह—खण्डिकादिष्वित्यादि।

णस् वक्तव्य इति। सकारः 'सिति च' इति विशेषणार्थः। तेन पार्श्वमित्यत्र भत्वाभावात् 'ओर्गुणः' न भवति ॥

ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ग्रामशब्दादचित्तलक्षणे ठकि प्राप्ते। जनशब्दो ञित्स्वरेणाद्युदात्तः; घञन्तत्वात्। तथा बन्धुशब्दोऽपि ञित्स्वरेणाद्युदात्त एव। तथा

---

१-१. अयं पाठो बहुत्र नास्ति।

ग्रामादिभ्यस्तल्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। ग्रामाणां समूहः ग्रामता। जनता। बन्धुता। सहायता।

* गजाच्चेति वक्तव्यम् *। गजानां समूहो गजता॥

**अनुदात्तादेरञ्॥ ४४॥**

अनुदात्तादेः शब्दादञ्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। कपोतानां समूहः कापोतम्। मायूरम्। तैत्तिरम्॥

**खण्डिकादिभ्यश्च॥ ४५॥**

'खण्डिका' इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। आद्युदात्तार्थमचित्तार्थं च वचनम्। खण्डिकानां समूहः खाण्डिकम्। वाडवम्। क्षुद्रकमालवशब्दोऽत्र पठ्यते। क्षुद्रकाश्च

पदमञ्जरी

*अनुदात्तादेरञ्॥ अचित्तात्परत्वाद् ठका भवितव्यमिति*। चित्तवन्त उदाहृताः, कपोतमयूरशब्दौ 'लघावन्ते' इति मध्योदात्तौ, इगुपधात्कः, तरतेः सन्वत्तुक् चाभ्यासस्येति किप्रत्ययान्तस्तित्तिरिशब्दः प्रत्ययस्वरेणान्तोदात्तः। सन्वद्भावेनाद्युदात्तत्वं न भवति; 'उणादयो बहुलम्' इति बहुलवचनात्॥

*खण्डिकादिभ्यश्च॥ क्षुद्रकाश्चेति*। क्षुद्रकस्यापत्यानि, जनपदशब्दादिति विहितस्य तद्राजस्य लुक्, मालवात्तु वृद्धलक्षणस्य ञ्यङः। *पूर्वेणाञि सिद्धे इति*। समासान्तोदात्तत्वे सति शेषनिघातेनानुदात्तादित्वात्॥

न्यासः

हि स 'धान्ये नित्' इति वर्त्तमाने 'शॄस्वृस्निहित्प्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्यनेन व्युत्पादित उप्रत्ययान्तः। आद्युदात्तत्वादणि प्राप्ते। सहायशब्दोऽपि 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तः। तत्र अनुदात्तादेरञि प्राप्ते तलो विधानम्।

गजाच्चेति वक्तव्यमिति। गजशब्दात् तल् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं चेह चकारस्यानुवृत्तिमाश्रित्य कर्त्तव्यम्॥

अनुदात्तादेरञ्॥ कापोतम्, मायूरमिति। कपोतमयूरशब्दौ 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तौ। तैत्तिरमिति। तित्तिरिशब्दः 'इगुपधात् कित्' इति किप्रत्ययान्तः। तरतेः सन्वत्तुक् चाभ्यासस्येति प्रत्ययस्वरेणान्तोदात्तः। ननु च सन्वद्भावादाद्युदात्तः प्राप्नोति? 'उणादयो बहुलम्' इति बहुलवचनात् स्वरे सन्वद्भावो न भविष्यतीत्यदोषः।

खण्डिकादिभ्यश्च॥ आद्युदात्तार्थमचित्तार्थञ्च वचनमिति। असत्येतस्मिन्ना-

मालवाश्चेति क्षत्त्रियद्वन्द्वः। ततः पूर्वेणैवाञि सिद्धे वचनं गोत्रवुञ्बाधनार्थम्।

ननु च परत्वादञा वुञ् बाधिष्यते, न च गोत्रसमुदायो गोत्रम्, न च तदन्तविधिरत्रास्ति ? एवं तर्हि एतज् ज्ञापयति—वुञि पूर्व-

पदमञ्जरी

ननु च *परत्वादिति*। अभ्युपेत्य गोत्रत्वमेतदुक्तम्, तदेव तु नास्तीत्याह—*न च गोत्रसमुदायो गोत्रमिति*। तत्र च यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यत इति काशिकोसलीया इत्यत्र छ एव भवति, न जनपदलक्षणो वुञ्, तद्वदत्रापि गोत्रलक्षणो वुञ् न प्राप्नोतीति भावः। स्यादेतत्—मा भूत्समुदायो गोत्रम्, मालवशब्दस्तु गोत्रं भवति, ततश्च तदन्तविधिना समुदायादपि वुञ्प्राप्नोतीति ? तत्राह—*न चेति*। 'येन विधिस्तदन्तस्य' इत्यत्र हि 'समासप्रत्ययविधौ प्रतिषेधः' इत्युक्तम्। *एवं तर्हीत्यादि*। कथमेकेन यत्नेनोभयं शक्यं

न्यासः

द्युदात्तेभ्योऽण् स्यात्, अचित्तेभ्योऽचित्तलक्षणष्ठक् प्रसज्येत। क्षुद्रकाश्च मालवाश्चेति क्षत्त्रियद्वन्द्व इति। क्षुद्रकस्यापत्यानि बहूनि 'जनपदशब्दात् क्षत्त्रियादञ्', मालवस्यापत्यानि बहूनि। 'वृद्धेत्कोशलाजादाञ् ञ्यङ्'। तयोः 'तद्राजस्य' इति बहुषु लुक्, पश्चाद् द्वन्द्वः। ततः पूर्वेणाञि सिद्ध इति। समासान्तोदात्तत्वे कृते द्वन्द्वसमासस्यानुदात्तादित्वात्। वचनं गोत्रवुञो बाधनार्थम्। 'गोत्रोक्षोष्ट्रोरभ्र' इत्यादिना गोत्रलक्षणो वुञ् प्राप्नोति, तद्बाधनार्थं क्षुद्रकमालवकस्येह गणे पाठः।

ननु चेत्यादि। परत्वादेवाञ् वुञं बाधिष्यत इत्यतो नार्थो वुञो बाधनार्थेनानेन वचनेनेति भावः। एतच्च गोत्रत्वमभ्युपेत्योक्तम्। इदानीं गोत्रत्वमेव न भवतीति दर्शयितुमाह न चेत्यादि। गोत्रसमुच्चयोऽयम्। न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते, यथा जनपदसमुदायो न जनपदग्रहणेन। तथा च काशयश्च कोशलाश्च काशिकोशलाः, तेषु भवाः काशिकोशलीयाः। जनपदत्वाभावात् 'जनपदवध्योश्च' इति वुञ् न भवति, 'वृद्धाच्छः' एव तु भवति। स्यादेतत्—यद्यपि गोत्रसमुदायो गोत्रं न भवति, तदवयवस्तु भवति, क्षुद्रकमालवकशब्दोऽवयवो गोत्रम्, अतस्तदन्तविधिना तदन्ताद् गोत्रसमुदायादपि वुञ् प्राप्नोति ? अत आह—न चेत्यादि। न हि सर्वस्तदन्तविधिर्भवतीति ? तथाहि—'येन विधिस्तदन्तस्य' इत्यत्रोक्तम्—'समासप्रत्ययविधौ प्रतिषेधः, उगिद्वर्णग्रहणवर्जम्' इति। प्रत्ययविधिश्चायम्। येषु तत्र च तदन्तविधिरिष्यते ते तत्रैव 'भयाद्यादिग्रहणम्' इत्यादिना परिगणिताः, न चास्य तत्र परिगणनम्। ततो नास्ति तदन्तविधिः। एवं तर्हीत्यादि। यदयं क्षुद्रकमालवकग्रहणं करोति वुञ्बाधनार्थम्, तज्ज्ञापयति—वुञि पूर्वविप्रतिषेधो

विप्रतिषेधः, सामूहिकेषु च तदन्तविधिरस्तीति । प्रयोजनम् — औपगवकं कापटवकमिति वुञ् भवति, वानहस्तिकं गौधेनुकमिति च तदन्तविधिः ।

'क्षुद्रकमालवात्' इत्येतावता योगविभागेन पूर्वविप्रतिषेधस्तदन्तविधिश्च ज्ञापितः, पुनरस्यैव नियमार्थमुच्यते 'सेनासंज्ञायाम्' इति — क्षुद्रकमालवात्सेनासंज्ञायामेवाञ्भवति । क्षौद्रकमालवी सेना । क्षौद्रकमालवकमन्यत्[1] ।

पदमञ्जरी

ज्ञापयितुम् ? शक्यमित्याह, अन्यथानुपपत्त्या ज्ञापकं भवति, उभयेन च विना नास्मादञ्विधानमुपपद्यत इति । किमत्रानुपपन्नम् ? तत्र पूर्वविप्रतिषेधज्ञापनस्य प्रयोजनमौपगवकं कापटवकमिति । वुञोऽवकाशः यदाद्युदात्तम्—ग्लुचुकस्यापत्यं ग्लुचुकायनिः, 'प्राचामवृद्धात्फिन्' तेषां समूहो ग्लौचुकायनकमिति; अञस्तु कापोतमित्याद्यगोत्रमवकाशः; गोत्रादनुदात्तादेरुभयप्रसङ्गे परत्वादञ् स्यात्, अस्मात्तु ज्ञापकाद् वुञेव भवति । तदन्तविधिज्ञापनस्य प्रयोजनम्—वनहस्तिनां समूहो वानहस्तिकम् । *गौधेनुकमिति* । 'जङ्गलधेनुवलजान्तस्य' इत्युत्तरपदवृद्धिविकल्पः ।

पुनरस्यैव नियमार्थत्वं वर्णयिष्यन् कथमेकेन यत्नेनोभयं लभ्यम्—ज्ञापनं च नियमश्च ? इत्याशङ्क्याह—*क्षुद्रकमालवादित्येतावतेति* । योगविभागेन यत्नद्वयमाश्रीयत इत्यर्थः । *क्षौद्रकमालवी, क्षौद्रकमालवकमिति* । उभयत्रापि मालवा-

न्यासः

भवति, न परविप्रतिषेधः । सामूहिकेषु च तदन्तविधिरस्तीति । किमेतस्य ज्ञापने प्रयोजनमित्याह—औपगवकम्, कापटवकमिति । एतद् वुञ्पूर्वविप्रतिषेधज्ञापनस्य प्रयोजनम् । असति ह्येतस्मिन् ज्ञापने परविप्रतिषेधेन 'अनुदात्तादेरञ्' इत्यञ् स्यात् । वुञस्तु यत्राद्युदात्तत्वं सोऽवकाशः—ग्लौचुकायनकमिति । ग्लुचुकायनशब्दो हि 'प्राचामवृद्धात् फिन् बहुलम्' इति फिन्प्रत्ययान्तत्वाद् नित्स्वरेणाद्युदात्तः । वानहस्तिकम्, गौधेनुकमिति । तदन्तविधिज्ञापनस्य प्रयोजनम् । असत्येतस्मिन् ज्ञापने 'अचित्तहस्तिधेनोष्ठक्' इति धेनुहस्तिशब्दाभ्यां विधीयमानष्ठक् न तदन्तात् स्यात् ।

क्षुद्रकमालवकादिति । गणे 'क्षुद्रकमालवात् सेनासंज्ञायाम्' इति पठ्यते, तत्र यद्यय-

---

१. अत्र 'गोत्रलक्षणो वुञेव भवति' इत्यधिकं पुस्तकान्तरे ।

अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।
गोत्राद्वुञ् न च तद्गोत्रं तदन्तान्न च सर्वतः ॥
ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः ।

पदमञ्जरी

दुत्पन्नस्य ञ्यङः 'गोत्रेऽलुगचि' इति लुकि प्रतिषिद्धे 'आपत्यस्य' इति यलोपः ।

*अञ्सिद्धिरित्यादि अनुदात्तादेरिति* । हेतुगर्भं विशेषणम्; यतोऽयं क्षुद्रकमालवशब्दोऽनुदात्तादिस्तेन तस्मादनुदात्तादेरित्येवाञः सिद्धिरस्ति । *कोर्थः* तस्य गणपाठेनेति शेषः । न किञ्चित्प्रयोजनम् इत्यर्थः । गोत्रलक्षणो वुञ् प्राप्नोति, अतस्तद्बाधनार्थः पाठ इति चेत्तत्राह—*गोत्राद्वुञिति* । गोत्राद्वुञ् विधीयते, न च तत्क्षुद्रकमालवेतिशब्दरूपगोत्रमित्यर्थः । *तदन्तादिति* । मालवशब्दस्य गोत्रत्वात्तदन्तविधिना प्राप्नोत्येव । *न स सर्वत इति* । आद्यादित्वात्सप्तम्यन्तात्तसिः, स तदन्तविधिः सर्वत्र न भवतीत्यर्थः । *तदन्तत्वे इति* । तदन्तविधिरस्तीत्यस्मिन्नर्थे इत्यर्थः । *तथा चेति* । धेनुरनञिकमुत्पादयतीति *आपिशलेः* सूत्रम् । अत्र वृद्ध्यर्थोऽनुबन्धो मृग्यः, इकस्यैव चेसुसुक्तान्तात्परस्य कादेशो द्रष्टव्यः । अर्थमात्रं वा *भाष्यकारेण* निर्दिष्टम् । इकमिति ठकमित्यर्थः । धेनूनां समूहो धैनुकम् । अनञिति किम्? अधेनूनां समूह आधेनवम्, उत्सादिपाठादञ् । यद्यपि धेनुशब्दः सूत्रे पठ्यते, तथापि बष्कयास इति लिङ्गादधेनु-

न्यासः

मेको योगः स्यात्, एकेन यत्नेन च ज्ञापनं नियमश्च न लभ्यते । तस्मादत्र योगविभागः कर्त्तव्यः । तत्र क्षुद्रकमालवादित्येको योगः, सेनासंज्ञायामिति द्वितीयः । तत्र पूर्वो योगो ज्ञापनार्थः, उत्तरो नियमार्थः । पुनरस्यैवेति । क्षुद्रकमालवादित्यस्यैव योगस्य । क्षौद्रकमालवीति । 'टिड्ढाणञ्' इति ङीप् । क्षौद्रकमालवकमन्यदिति । तदन्तविधिनात्र वुञ् भवति ।

अञ्सिद्धेरित्यादि । क्षुद्रकमालवशब्दाद् 'अनुदात्तादेरञ्' इत्यञ् सिद्धः । तत् कोऽर्थः किं प्रयोजनं तस्य गणपाठेन? न किञ्चिदित्यर्थः । स्यादेतत्—यो गोत्रलक्षणो वुञ् स्यादतस्तद्बाधनार्थः पाठः? इत्याह – गोत्राद्वुञ् विधीयते । न च क्षुद्रकमालवशब्दो गोत्रम्, तत् कुतस्ततो वुञ्प्राप्तिः? तदन्तादित्यादि । यद्यपि क्षुद्रकमालवशब्दो गोत्रसमुदायो गोत्रं न भवति, तदवयवस्तु भवति, तेन तदन्तविधिना प्राप्नोत्येव । न च सर्वत इति । न च तदन्तविधिः सर्वत्रैव भवति । परिगणितेष्वेव कार्येषु तदन्तविधिरिष्यते, न चेदं तत्र परिगण्यते, तत् कुतस्तदन्तविधिना वुञ्प्राप्तिः । ज्ञापकं स्यादि-

सेनायां नियमार्थं च यथा बाध्येत चाञ् वुञा ॥

खण्डिका । वडवा । * क्षुद्रकमालवात्सेनासंज्ञायाम् * । भिक्षुक । शुक । उलूक । श्वन् । युग । अहन् । वरत्रा । हलबन्ध ॥

पदमञ्जरी

शब्दादपि भवति। तत्र यदि सामूहिकेषु तदन्तविधिर्न स्यात्, अनञिति प्रतिषेधोऽनर्थकः स्यात्।

प्रयोजनान्तरमप्याह—*सेनायामिति*। *यथेति*। पूर्वविप्रतिषेधेन वुञाऽञो बाधा यथा स्यादित्येवमर्थश्च तस्य गणे पाठ इत्यर्थः। उलूकशब्दोऽत्र पठ्यते स 'लघावन्ते' इति मध्योदात्तः। छन्दसि तु यदुलूको वदति मोघमेतत्, इत्था उलूक आपप्तदिति यदाद्युदात्तत्वम्, तच्छान्दसम्। भाषायां तु मध्योदात्तमेव, तत्र पूर्वेणैवाञ् सिद्धः, तस्मादेवं वक्तव्यम्—औलूक्यशब्दो गर्गादियञन्तः, यतः 'यञञोश्च' इति बहुषु लुकि कृते रूपम्, तदिह पठ्यत इति। असति हि तस्य पाठे उलूकानां समूह इत्यर्थविवक्षायां 'गोत्रेऽलुगचि' इति लुकः प्रतिषेधादौलुक्यशब्दाद् गोत्राश्रयो वुञ्प्राप्नोति। शुकशब्दोऽत्र पठ्यते, 'तस्य समूहः' इत्यत्र तु 'यस्य च नान्यत्प्रतिपदविधानमस्ति' इत्युक्त्वोदाहृतम्—काकं शौकमिति, तस्मात्तत्र शौकमित्यस्य स्थाने बाकमिति पठितव्यम्। बकशब्दः 'प्राणिनां कुपूर्वाणाम्' इत्याद्युदात्तः। युगवरत्रेति पठ्यते, तत्सङ्घातविगृहीतार्थमिच्छन्ति—यौगवरत्रम्, यौगम्, वारत्रमिति, तत्र सङ्घातपक्षे 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावे नपुंसकह्रस्वत्वे सति युगवरत्रेति दीर्घनिर्देशोऽनुपपन्नः, तस्माद्युगसहिता वरत्रेति समासः कर्तव्यः, जातिपरत्वाभावाद्वा एकवद्भावाभावः ॥

न्यासः

स्यादि। इदं हि क्षुद्रकमालवग्रहणं ज्ञापनार्थं भवेत्। एतज्ज्ञापयति – सामूहिकेषु तदन्तविधिरस्तीति। एवं कृत्वाऽऽपिशलेर्विधिरुपपन्नो भवति। विधीयतेऽनेनेति विधिः, स पुनः 'धेनोरनञः' इति, एतद्धि तत्सूत्रम्। अस्यायमर्थः—धेनुशब्दः समूहेऽर्थे ठकमुत्पादयति, न चेद्धेनुशब्दो नञ उत्तरो भवतीति। नञ्पूर्वपदो न भवतीति यावत्। यदि तत्र सामूहिकेषु तदन्तविधिर्न स्याद्, 'अनञः' इति वचनं नोपपद्यते। असति तदन्तविधौ धेनुशब्दादुच्यमानः प्रत्ययः, कः प्रसङ्गो यदधेनुशब्दात् स्यात्! तदेतदनञिति वचनं परमर्थवद्भवति यदि सामूहिकेषु तदन्तविधिर्भवति, नान्यथा। प्रयोजनान्तरमाह—सेनायामित्यादि। सेनासंज्ञायामेव क्षुद्रकमालवशब्दादञ् भवतीत्येष नियमो यथा स्यादित्येवमर्थस्तस्य गणे पाठ इत्यर्थः। यथेत्यादि। चेति समुच्चये। पूर्वविप्रतिषेधेन वुञाऽञो बाधनं यथा स्यादित्येवमर्थो गणे पाठः।

खण्डिक इति। खण्डिकशब्दो मत्वर्थीयठन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। 'वल संवरणे' इत्यस्माद् 'उणादयो बहुलम्' इत्यवन्प्रत्यये डलयोरेकत्वस्मरणाल् लकारस्य

## चरणेभ्यो धर्मवत् ॥ ४६ ॥

चरणशब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति । 'गोत्रचरणाद् वुञ्' इत्यारभ्य प्रत्यया वक्ष्यन्ते, तत्रेदमुच्यते—'चरणाद्धर्माम्नाययोः' इति, तेन धर्मवदित्यतिदेशः क्रियते । वतिः सर्वसादृश्यार्थः । कठानां धर्मः काठकम् । कालापकम् ।

पदमञ्जरी

चरणेभ्यो धर्मवत् ॥ *गोत्रचरणाद्वुञित्यारभ्य प्रत्यया वक्ष्यन्ते इति* । ननु च न तत्र धर्मग्रहणमस्ति, तत्कथं धर्मवदित्यतिदेशो युज्यत इत्याह—*तत्रेदमिति* । इदमेव धर्मवदितिवचनं लिङ्गमस्ति, तत्र चरणाद्धर्माम्नाययोरिति । *वतिः सर्वसादृश्यार्थ इति* । असति तस्मिन् 'चरणेभ्यो धर्मः' इत्युच्यमाने यदि तावदेवं

न्यासः

डकारादेशे टापि वडवेति भवति । भिक्षुकशब्दोऽपि कुत्सार्थविवक्षायां[१] कन्नन्तत्वात् पूर्वपदाद्युदात्तः । शुकोलूकयोरपि 'प्राणिनां कुपूर्वाणाम्' इति कुपूर्वादिरुदात्त एव । श्वञ्शब्दः 'कनिन् युवृषि' इत्यतः कनिन्ग्रहणेऽनुवर्तमाने 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्' इति कनिन्प्रत्ययान्तो निपातितः, तेनासावपि पूर्ववदाद्युदात्तः । युगवरत्राशब्दयोरचित्तार्थः । संहतविगृहीतार्थं युगवरत्राग्रहणं वर्णयन्ति—यौगम्, वारत्रम्, यौगवरत्रमिति ॥

चरणेभ्यो धर्मवत् ॥ गोत्रचरणाद् वुञित्यारभ्येति । ननु च तत्र धर्मग्रहणं नास्ति, तत् कथं धर्मवदित्यतिदेशः प्रयुज्यते ? इत्याह—तत्रेदमित्यादि । इदमेव धर्मवदिति वचनं लिङ्गभूतं गमयति—चरणाद्धर्माम्नाययोरित्येतद्वचनं शेषभूतमिति । न हि तेन विनातिदेश उपपद्यते । वतिः सादृश्यार्थ इति । असति हि वतौ यदि चरणग्रहणं धर्मप्रत्ययैरभिसम्बध्यते—चरणेभ्यो धर्मेऽर्थे ये प्रत्यया अभिधास्यन्ते ते भवन्ति 'तस्य समूहः' इत्येतस्मिन्नर्थ इति, समूहप्रकृतिर्न विशेषिता स्यात् । एवञ्चेह प्रकृतिमात्राद्धर्मप्रत्ययाः प्रसज्येरन् । अथ प्रकृतिः सम्बध्यते—धर्मे ये विधास्यन्ते प्रत्ययास्ते भवन्ति 'चरणेभ्यः समूह' इत्येतस्मिन्नर्थे, एवमपि धर्मप्रत्यया न विशेषिताः स्युः । ततश्चाचरणेभ्योऽपि ये धर्मे विधास्यन्ते प्रत्ययास्तेऽपीह चरणेभ्य आपद्येरन् । अथाप्युभयसंनिधानादुभयं विशेष्यते, तेन वाक्यभेदं कृत्वा प्रत्ययैः प्रकृतिभिः सम्बध्यते—चरणेभ्यो धर्मेऽर्थे ये प्रत्यया विधास्यन्ते ते समूहे भवन्ति चरणेभ्य इति ? एवमपि कश्चित् चरणप्रकृतिकः

---

१. 'अनुकम्पार्थविवक्षायाम्' इति पाठा० ।

छान्दोग्यम् । औक्थिक्यम् । आथर्वणम् । तथा समूहेऽपि—काठकम् । कालापकम् । छान्दोग्यम् । औक्थिक्यम् । आथर्वणम्[1] ॥

## अचित्तहस्तिधेनोष्ठक् ॥ ४७ ॥

पदमञ्जरी

सम्बन्धः, चरणेभ्यो धर्मे ये प्रत्यया विधास्यन्ते ते भवन्ति, समूह इति समूहप्रकृतिरविशेषिता स्यात्, ततश्च काकादिभ्योऽपि वुञादयः प्रसज्येरन् । अथ पुनरेवं सम्बन्धः—धर्मे ये प्रत्यया विधास्यन्ते ते चरणेभ्यः समूहे भवन्तीति ? एवमपि धर्मप्रत्यया न विशेषिताः स्युः, ततश्च 'तस्येदम्' इति विधास्यमाना अणादयोऽपि कठादिभ्य आपद्येरन् । अथाप्येवं सम्बन्धः—चरणेभ्यो धर्मे ये प्रत्ययास्ते भवन्ति चरणेभ्य एव समूह इति ? तत्र सकृत् श्रुतस्य चरणशब्दस्यैवमुभयसम्बन्ध एव तावद् दुर्लभः, अथापि लभ्येत ? एवमपि यः कश्चिद्धर्मे प्रत्ययो यतः कुतश्चिच्चरणशब्दात्स्यात्, 'कौपिञ्जलहास्तिपदादण्' कठादिभ्योऽपि स्यात्, वतिनिर्देशे तु सति सर्वसादृश्यपरिग्रहो भवति । तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया धर्मे विधास्यन्ते, इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव भवन्तीति न किञ्चिदनिष्टम् । *काठकम्*, *कालापकमिति* । गोत्रचरणाद्वुञ् । *छान्दोग्यमिति* । 'छन्दोगौक्थिक' इति ञ्यः । *आथर्वणमिति* । 'आथर्वणिकस्येकलोपश्च' इत्यण्, इकलोपश्च ॥

न्यासः

प्रत्ययो यतः कुतश्चिच्चरणात् समूहे स्यात् । 'कौपिञ्जलहास्तिपदादण्' छन्दोगादिभ्योऽपि स्यात् । वतौ तु तस्य सादृश्ये विधानात् सर्वसादृश्यपरिग्रहो भवति । तेन याभ्यः प्रकृतिभ्यश्चरणविशेषणेन ये प्रत्यया विहिताः, इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न किञ्चिदनिष्टमापद्यते । तस्मात् सर्वसादृश्यपरिग्रहार्थं वत्करणं कर्तव्यम् । काठकम्, कालापकमिति । 'गोत्रचरणाद् वुञ्' । छान्दोग्यम्, औक्थिक्यमिति । 'छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः' इति ञ्यः । आथर्वणमिति । 'कौपिञ्जलहास्तिपदादण्', 'आथर्वणिकस्येकलोपश्च' इत्यण्, इकलोपश्च । एते प्रत्यया यथा चरणेभ्यो धर्मे भवन्ति, तथा समूहेऽपि ॥

---

१. "ननु धर्मे न कोऽपि प्रत्ययो विधास्यते, कथं धर्मवदित्यतिदेशः ? एतदेव ज्ञापयति वार्त्तिककारः 'गोत्रचरणाद्वुञ्' इत्यस्मिन्प्रकरणे सर्वयोगशेषम् 'चरणाद्धर्माम्नाययोः' इति वक्ष्यति । तद्भगवतः पाणिनेरप्यभिमतम्' इति"—इत्यधिकमेकस्मिन्पुस्तके ॥

अचित्तार्थेभ्यो हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। अणञोरपवादः। अपूपानां समूह आपूपिकम्। शाष्कुलिकम्। हास्तिकम्। धैनुकम्।

* धेनोरनञ इति वक्तव्यम् *। आधेनवम्।

## केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ ॥

केश, अश्व – इत्येताभ्यां यथासंख्यं यञ्, छ – इत्येतौ प्रत्ययौ भवतोऽन्यतरस्याम् 'तस्य समूहः' इत्येतस्मिन्विषये। केशानां समूहः कैश्यम्। कैशिकम्। अश्वानां समूह आश्वम्। अश्वीयम्॥

### पदमञ्जरी

*अचित्तहस्तिधेनोष्ठक्॥ अणञोरपवाद इति*। अचित्तार्थेषु येननाप्राप्तिन्यायेनाणोऽपवादः। कपोतादिषु चित्तवत्सु चरितार्थस्याञोऽपि परत्वाद्बाधक इत्यर्थः। हस्तिधेनुशब्दयोस्तु प्रत्ययस्वरेणान्तोदात्तयोरनुदात्तादिलक्षणस्याञोऽपवादः। हस्तिशब्दः 'हस्ताज्जातौ' इतीनिप्रत्ययान्तः। धेनुशब्दः 'धेटोऽनुश्च' इति नुप्रत्ययान्तः। *आधेनवमिति*। उत्सादिपाठादञ्, 'जङ्गलधेनुवलजान्तस्य' इति पक्षे वृद्ध्यभावः॥

### न्यासः

अचित्तहस्तिधेनोष्ठक्॥ अचित्त इति। अर्थप्रधानत्वान्निर्देशस्यार्थस्येदं ग्रहणम्, न स्वरूपस्य, तेनाचित्तवाचिभ्यष्ठग् विज्ञायत इत्याह—अचित्तवाचिभ्यः शब्देभ्य इति। हस्तिधेनुशब्दयोश्च शब्दप्रधानत्वान्निर्देशस्य स्वरूपग्रहणम्। अत एव हस्तिधेनुशब्दाभ्यामिति।

अधेनोरिति वक्तव्यमिति। धेनुशब्दादनञ्पूर्वाट् ठग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—वक्ष्यमाणमिहान्यतरस्यांग्रहणमुभयोरपि योगयोः शेषो विज्ञायते, व्यवस्थितविभाषा च। तेन धेनुशब्दादनञ्पूर्वादेव भवतीति, न नञ्पूर्वादिति। आधेनवमिति। 'उत्सादिभ्योऽञ्'। ननु च धेनुशब्दस्तत्र पठ्यते, तत् कथमधेनुशब्दाद् भवतीति? तत्रापि तदन्तविधेः सम्भवात्। तत् कथं विज्ञायते? वष्कयास इति वष्कयशब्दस्य समासे प्रतिषेधात्। वष्कयशब्दाद्धि प्रत्ययविधानम्, गोवष्कयशब्दान्न प्राप्नोति, किं समासप्रतिषेधेन? इतः प्रतिषेधाद्विज्ञायते—अस्ति तत्र तदन्तविधिरिति॥

केशाश्वाभ्यां यञ्छावन्यतरस्याम्॥ केशशब्दादचित्तलक्षणे ठकि प्राप्ते वचनमिदम्। अश्वशब्दादप्यणि सूत्रमिदमारभ्यते। अन्यतरस्यांग्रहणाट् ठगणावपि भवतः॥

## पाशादिभ्यो यः ॥ ४९ ॥

पाशादिभ्यो यः प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। पाशानां समूहः पाश्या। तृण्या[1]।

पाश। तृण। धूम। वात। अङ्गार। पोत। बालक। पिटक। पिटाक। शकट। हल। नड। वन[2] ॥

## खलगोरथात् ॥ ५० ॥

खलगोरथशब्देभ्यो यः प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। खलानां समूहः खल्या। गव्या। रथ्या।

पाशादिष्वपाठ उत्तरार्थः[3] ॥

## इनित्रकट्यचश्च ॥ ५१ ॥

### पदमञ्जरी

*पाशादिभ्यो यः॥* यप्रत्ययान्तं स्वभावतः स्त्रीलिङ्गम्। वातशब्दोऽत्र पठ्यते—वातानां समूहो वात्या, पृथग्वातादर्शनादयुक्तोऽत्र समूहः, तस्माच्छीघ्रत्वे प्रत्ययो वक्तव्यः? नैष दोषः; एकस्यापि वातावयविनो दिग्भेदेन भेदोऽध्यारोपः, तदाश्रयश्च समूहः। अथ वा—प्रतिदिशं वातावयविन एव भिद्यन्ते, तथा च प्रतिभासः—पूर्वो वातः, उत्तरो वातः, सर्वतो वान्ति वाता इति। आह च—वायोर्वायुसम्मूर्छनं नानात्वे लिङ्गमिति॥

*खलगोरथात्॥* अथ कस्मात्खलादयोऽपि पाशादिष्वेव न पठिताः, एवं हि विभक्तिर्नोच्चारयितव्या भवति? तत्राह—*पाशादिष्वपाठ इति॥*

*इनित्रकट्यचश्च॥* योगविभागो यथासङ्ख्यार्थः, अन्यथा इनित्रकट्यचस्त्रय

### न्यासः

पाशादिभ्यो यः॥ अचित्तलक्षणके ठकि प्राप्ते वचनमिदम्॥

खलगोरथात्॥ गोशब्दादणि प्राप्ते खलरथाभ्यामचित्तलक्षणे ठकीदं वचनम्। अत्र पाशादिष्वेव खलादीनां पाठः कस्मान्न कृतः? इत्याह—पाशादिष्वपाठ उत्तरार्थ इति। उत्तरसूत्रे इनित्रकट्यचः खलादिभ्य एव यथा स्युः, पाशादिभ्यो मा भूदिति।

---

१. अत्र 'स्त्रीलिङ्गत्वं लोकाश्रयत्वाल्लिङ्गस्य' इत्यधिकं पुस्तकान्तरे।

२. अत्र—'पाटलका, गल'—इत्यधिकौ शब्दौ पुस्तकान्तरे।

३. योगविभाग उत्तरार्थः' इति पाठा०।

खलगोरथशब्देभ्यो यथासंख्यम् 'इनि' 'त्र' कटयच्'—इत्येते प्रत्यया भवन्ति 'तस्य समूहः' इत्येतस्मिन्विषये। खलिनी। गोत्रा। रथकट्या ॥

❀ खलादिभ्य इनिर्वक्तव्यः ❀। डाकिनी। कुण्डलिनी। कुटुम्बिनी।

❀ कमलादिभ्यः[1] खण्डच् प्रत्ययो भवति ❀। कमलखण्डम्। अम्भोजखण्डम्।

कमल। अम्भोज। पद्मिनी। कुमुद। सरोज। पद्म। नलिनी। कैरविणी। कमलादिराकृतिगणः ॥

❀ नरकरितुरङ्गाणां स्कन्धच् प्रत्ययः ❀। नरस्कन्धः। करिस्कन्धः। तुरङ्गस्कन्धः ॥

❀ पूर्वादिभ्यः काण्डः प्रत्ययो भवति ❀। पूर्वकाण्डम्। तृणकाण्डम्। कर्मकाडम्[1] ॥

पदमञ्जरी

अकाराद्यश्चेति चत्वारः प्रत्ययाः, प्रकृतयस्तु तिस्र इति वैषम्यं स्यात्।

*खलादिभ्य इति*। खलादयः प्रयोगतो गम्याः। एतेऽपि प्रत्ययाः स्वभावतः स्त्रियामेव ॥

न्यासः

इनित्रकट्यचश्च ॥ खलादिभ्य इनिर्वक्तव्य इति। वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्– चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन खलादिभ्य इनिप्रत्ययो भविष्यति। आदिशब्दश्चायं प्रकारे, खलप्रकार इत्यर्थः। किं पुनस्ते खलप्रकाराः? येभ्य इनिर्दृश्यते। यदि तर्हि खलादिभ्य इनिर्भवति, वैषम्याद् यथासंख्यं न प्राप्नोति? वाक्यभेदाददोषः। एकं वाक्यं यथासंख्यं न भवति, इह द्वे वाक्ये इति। इनित्रकट्यचः खलगोरथेभ्यो भवन्तीत्येकं वाक्यम्; चकारश्चानुक्तसमुच्चयार्थः, ततः खलादिभ्य इनिर्भवतीति द्वितीयम्। द्वितीये तु वाक्ये खलशब्दस्य तत्र प्रकारोपलक्षणत्वं वेदितव्यम्, न तु प्रकृतित्वम् ॥

---

१–१. अयं पाठः क्वचिन्नास्ति।

## विषयो देशे ॥ ५२ ॥

'समूहः' इति निवृत्तम् । षष्ठी समर्थविभक्तिरनुवर्त्तते । तस्येति षष्ठीसमर्थाद् 'विषयः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयो देशश्चेत्स भवति ।

विषयशब्दोऽयं बह्वर्थः । क्वचिद् ग्रामसमुदाये वर्तते – विषयो लब्ध इति । क्वचिदिन्द्रियग्राह्ये—चक्षुर्विषयो रूपमिति । क्वचिदत्यन्तशीलिते ज्ञेये – देवदत्तस्य विषयोऽनुवाक इति । क्वचिदन्यत्राभावे – मत्स्यानां विषयो जलमिति । तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम् । शिबीनां विषयो देशः शैबः । औष्ट्रः ।

देश इति किम् ? देवदत्तस्य विषयोऽनुवाकः ॥

### पदमञ्जरी

*विषयो देशे* ॥ ननु च विषयस्य देशत्वाव्यभिचाराद् देश इति विशेषणं व्यर्थमित्यत आह—*विषयशब्दोऽयमिति* । *अत्यन्तशीलितः* = अत्यन्ताभ्यस्तः । *तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थमिति* । यद्येवम्, देशग्रहणमेवास्तु मा भूद्विषयग्रहणम् ? नैवं शक्यम्; देशशब्दोऽपि नानार्थः, देशनं देश इति क्रियाशब्दस्यापि भावात् । *शिबीनां विषयो देशः शैब इति* । कथं शिबयो देश इति ? निवासविवक्षायाम् 'तस्य निवासः', 'जनपदे लुप्' इति लुपि भविष्यति । नन्वर्थभेदो भवति, शिबीनां निवासो जनपद इत्यत्र स्वस्वामिभावो न प्रतीयते, अन्यदीयेऽपि जनपदे निवाससम्भवात्; शिबीनां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते, न तु निवासार्थः, तत्रावसतामपि स्वामित्वसम्भवात् ? सत्यम्; य एवासौ येषां विषयस्तत्रैव तेषां निवासे जनपदे लुप् स्मर्यते, न निवासमात्रे । अत्र चाभिधानस्वाभाव्यं हेतुः । एवं च शिबीनां विषयः शैब इत्यत्रार्थे शिबय इत्यपि भवति । एवं वसातीनां विषयो वासातः, तेषामेव निवासो वसातयः । तथा गान्धारीणां विषयो गान्धारः, निवासो गान्धारयः । अङ्गाः, वङ्गाः, सुह्माः पुण्ड्रा इति—निवासरूपतैव विवक्ष्यते, न विषयरूपता ।

### न्यासः

विषयो देशे ॥ योऽसौ विषयो देशश्चेत् स भवतीति । ननु च यो विषयः स देश एव भवति, किं तद्विशेषणेन देशग्रहणेन ? इत्याह—विषयशब्दोऽयमित्यादि । अत्यन्तशीलित इति । अत्यन्ताभ्यस्त इत्यर्थः ॥

## राजन्यादिभ्यो वुञ् ॥ ५३ ॥

राजन्यादिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति 'विषयो देशे' इत्येतस्मिन्नर्थे । अणोऽपवादः । राजन्यानां विषयो देशः राजन्यकः । दैवयानकः । आकृतिगणश्चायम् । मालवानां विषयो देशः मालवकः । वैराटकः । त्रैगर्तकः ।

राजन्य । देवयान । शालङ्कायन । जालन्धरायण । आत्मकामेय । अम्बरीषपुत्र । वसाति । बैल्ववन । शैलूष । उदुम्बर । बैल्वत । आर्जुनायन । संप्रिय । दाक्षि । ऊर्णनाभ[1] ॥

## भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५४ ॥

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासंख्यं विधल्, भक्तल् – इत्येतौ प्रत्ययौ भवतः 'विषयो देशे' इत्येतस्मिन्विषये । अणोऽपवादः । भौरिकिविधः । वैपेयविधः । ऐषुकार्यादिभ्यः—ऐषुकारिभक्तः । सारस्यायनभक्तः ।

भौरिकि । वैपेय । भौलिकि । चैटयत । काणेय । वाणिजक । वालिज । वालिज्यक । शैकयत । वैकयत । इति भौरिक्यादिः ॥

ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौलायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण । दाक्षायण । शयण्ड । तार्क्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । विशदेव[2] ॥

पदमञ्जरी

एवं *राजन्यादिभ्यो वुञित्यत्रापि* विषयविवक्षायां राजन्यकम्, निवासो

न्यासः

राजन्यादिभ्यो वुञ् ॥ आकृतिगणश्चायमिति । अपरिसमाप्तता राजन्यादेर्दर्शयति । आदिशब्दश्चायं प्रकारार्थः ॥

---

१. आप्रीत, अक्रीड, वैतिल, वात्रक— एतेऽत्राधिकाः शब्दाः पुस्तकान्तरे ।
२. अलायत, औलालायत, शौण्ड, शयाण्ड, वैश्वदेव—एते शब्दा अधिकाः क्वचित् ।

## सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ॥ ५५ ॥

'सः' इति समर्थविभक्तिः। 'अस्य' इति प्रत्ययार्थः। 'आदिः' इति प्रकृतिविशेषणम्। इतिकरणो विवक्षार्थः। 'छन्दसः' इति प्रकृतिनिर्देशः। 'प्रगाथेषु' इति प्रत्ययार्थविशेषणम्। 'सः' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति। इतिकरणस्ततश्चेद्विवक्षा। पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः। आनुष्टुभः। जागतः।

आदिरिति किम्? अनुष्टुम्मध्यमस्य प्रगाथस्य। छन्दस इति किम्? उदुत्यशब्द आदिरस्य प्रगाथस्य। प्रगाथेष्विति किम्? पङ्क्तिरादिरस्यानुवाकस्य। प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते स प्रग्रथनात्प्रकर्षगानाद्वा 'प्रगाथः' इत्युच्यते॥

पदमञ्जरी

राजन्याः। तत्रैव बैल्वतादिषु विषयविवक्षैव, तेन बैल्वतकम्, आम्बरीषपुत्रकमित्याद्येव भवति। सर्वत्र चाभिधानशक्तिरेव हेतुः, तदाह—विषयाभिधाने जनपदे लुप्, बहुवचनविषयाद् गान्धार्यादिभ्यो वा राजन्यादिभ्यो नित्यम्, न वाभिधेयस्य निवासविषयत्वात्। निवासविवक्षायां लुप्, विषयविवक्षायां तु प्रत्यय इति॥

*सोऽस्यादिरितिच्छन्दसः प्रगाथेषु*॥ छन्दस *इति* न स्वरूपग्रहणम्, नापि मन्त्रब्राह्मणयोः, कस्य तर्हि? अक्षराणामियतावचनश्छन्दःशब्दोऽस्ति, यस्य जगत्यादयो विशेषास्तस्य ग्रहणम्; प्रगाथानामादौ तस्यैव सम्भवात्, तेन पङ्क्त्यादिशब्देभ्यः प्रत्ययः। यत्र द्वे ऋचौ तिस्रः क्रियन्त इति चतुर्थषष्ठौ पादौ बार्हतो प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येदित्येवमादिना प्रकारेण। तद्यथा—यज्ञायज्ञा वः प्रियं मित्रं न शंसिषौ प्रियं मित्रं न शंसिषमूजे निपातमिति। तत्र योऽयमुच्चारणप्रकारस्तद्ग्रथनम्। *प्रग्रथनादिति*। प्रगाथशब्दप्रवृत्तिनिमित्तं

न्यासः

भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ॥ सोऽस्यादिरितिच्छन्दसः प्रगाथेषु॥ छन्दस इति। न स्वरूपग्रहणम्, नापि मन्त्रब्राह्मणयोः। कस्य तर्हि? अक्षराणा-

* छन्दसः प्रत्ययविधाने नपुंसके स्वार्थं उपसंख्यानम् *। त्रिष्टुबेव त्रैष्टुभम्। जागतम्॥

संग्रामे प्रयोजनयोद्धृभ्यः॥ ६५॥

'सोऽस्य' इति समर्थविभक्तिः, प्रत्यायार्थश्चानुवर्तते। प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च। प्रत्ययार्थविशेषणं संग्रामः। प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे

पदमञ्जरी

दर्शयति, प्रग्रथ्यत इति प्रगाथः, 'अकर्तरि च कारके' इति कर्मणि घञ्, पृषोदरादित्वाद्रेफनकारयोर्लोपः। *प्रगायणाद्वेति*। 'कृत्यचः' इति णत्वम्, 'कै गै शब्दे', प्रगीयत इति प्रगाथः, 'उषिकुषिगर्तिभ्यस्थन्'। त्रैष्टुभ*मिति*। कुटीर इति स्वार्थिकस्यापि रप्रत्ययस्य यथा भिन्नलिङ्गता, तथेहापि नपुंसकत्वं द्रष्टव्यम्॥

*संग्रामे प्रयोजनयोद्धृभ्यः*॥ 'समर्थानां प्रथमाद्वा' इति वचनात्संग्रामवाचिभ्यः प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्यश्चरमनिर्दिष्टेभ्य इत्याशङ्क्याह—*सोऽस्येति समर्थविभक्तिरित्यादि*। *प्रथमासमर्थविशेषणमिति*। तेन विशेष्यद्वारेण

न्यासः

मियत्तावचनश्छन्दःशब्दोऽस्ति, यस्य जगत्यादयो विशेषाः, तस्येदं ग्रहणम्। तस्यैव हि प्रगाथ इत्यादौ सम्बन्धः, नेतरस्य। तेन पङ्क्त्यादिभ्यः प्रत्ययो भवतीत्युक्तं भवति।

प्रग्रन्थनेनेति। उच्चारणविशेषणेन प्रग्रन्थनात् प्रकर्षाद् गायनार्थाद्वेति। एतेन यन्निमित्तकः प्रगाथशब्दस्तां क्रियां दर्शयति। प्रगाथशब्दोऽयं यदा 'अकर्तरि च कारके संज्ञायाम्' इति कर्मणि घञन्तो व्युत्पाद्यते—प्रग्रथ्यतेऽसौ प्रगाथ इति, पृषोदरादिपाठाद् ग्रन्थे रेफानुनासिकयोर्लोपश्च, तदा प्रग्रन्थनक्रियानिमित्तको भवति। यदा तु 'कै गै शब्दे' इत्यस्माद् 'उणादयो बहुलम्' इति प्रगाथस्थन्प्रत्ययान्तो व्युत्पाद्यते, तदा गायनक्रियानिमित्तो भवति।

नपुंसक इत्यादि। नपुंसकलिङ्गे स्वार्थ एव च्छन्दसः प्रत्ययस्योपसंख्यानम्। तत्रेदं व्याख्यानम्—इतिकरणो विवक्षार्थः। तेन यत्र प्रत्ययान्ताच्छिष्टानां विवक्षा भवति तत्र प्रत्ययेन भवितव्यम्। नपुंसकलिङ्गे स्वार्थेऽपि च सा भवति, अतस्तत्रापि प्रत्ययो भवति। अवश्यं चैतदेव विज्ञेयम्। यो हि मन्यते—'सर्वातिप्रसङ्गनिवृत्तिरितिकरणेन क्रियते' इति, तस्यासावनर्थक एव स्यात्; सर्वातिप्रसङ्गानामुपाधिभिर्निरस्तत्वात्॥

संग्रामे प्रयोजनयोद्धृभ्यः॥ अत्र 'संग्रामे' इति प्रत्ययार्थ इति, सप्तम्यन्तत्वात्।

१. मुद्रितमूलपुस्तके प्रगथनादिति पाठ उपलभ्यते, स पदमञ्जर्यसम्मतः।

संग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति। भद्रा प्रयोजनमस्य संग्रामस्य भाद्रः संग्रामः। सौभद्रः। गौरिमित्रः। योद्धृभ्यः—अहिमाला योद्धारोऽस्य संग्रामस्य आहिमालः। स्यान्दनाश्वः। भारतः।

संग्राम इति किम्? सुभद्रा प्रयोजनमस्य दानस्य। प्रयोजनयोद्धृभ्य इति किम्? सुभद्रा प्रेक्षिकाऽस्य संग्रामस्य॥

**तदस्यां प्रहरणमिति क्रीडायां णः॥ ५७॥**

तदिति प्रथमासमर्थात् 'अस्याम्' इति सप्तम्यर्थे णः प्रत्ययो भवति, यत्तदिति निर्दिष्टं प्रहरणं चेत्तद्भवति। यदस्यामिति निर्दिष्टं क्रीडा चेत्सा भवति। इतिकरणस्ततश्चेद्विवक्षा। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। मौष्टा।

प्रहरणमिति किम्? माला भूषणमस्यां क्रीडायाम्। क्रीडायामिति किम्? खड्गः प्रहरणमस्यां सेनायाम्॥

**घञः सास्यां क्रियेति ञः॥ ५८॥**

'सा' इति समर्थविभक्तिः। 'अस्याम्' इति प्रत्ययार्थः स्त्रीलिङ्गः। 'क्रिया' इति प्रकृत्यर्थविशेषणम्। 'घञः' इति प्रकृतिनिर्देशः।

पदमञ्जरी

प्रयोजनयोद्धार एव प्रथमनिर्दिष्टाः। *प्रत्ययार्थविशेषणं संग्राम इति*। तेन तद्द्वारेण संग्रामश्चरमनिर्दिष्टः॥

*घञः सास्यां क्रियेति ञः॥ अस्यामिति प्रत्ययार्थः स्त्रीलिङ्ग इति*। तेन

न्यासः

'प्रयोजनयोद्धृभ्यः' इति पञ्चम्यन्तत्वात् प्रकृतिनिर्देशः, ततश्च 'समर्थानां प्रथमाद्वा' इत्येतद्विरुध्यते; प्रथमस्य प्रत्ययार्थत्वेन द्वितीयस्य प्रकृतित्वेनोपादीयमानत्वादित्यस्य चोद्यस्य निरासायाह—सोऽस्येति समर्थविभक्तिः प्रत्ययार्थश्चानुवर्त्तत इति। एतेनैतद् दर्शयति—'प्रयोजनयोद्धृभ्यः' इत्येतदेवमर्थं यस्मात् पूर्वसूत्रादेव स इति प्रथमं तदिहानुवर्त्तते, तद्विशेषणं तु प्रयोजनयोद्धृभ्य इति। प्रत्ययार्थोऽप्यस्येति पूर्वसूत्रादनुवर्त्तते, तद्विशेषणं संग्रामः, ततो नास्ति विरोधः; पूर्वसूत्रे यत् प्रथमानिर्दिष्टस्तत एव प्रत्ययविधानादिति॥

तदस्यां प्रहरणमिति क्रीडायां णः॥ घञः सास्यां क्रियेति ञः॥ क्रियेति

इतिकरणो विवक्षार्थः। घञन्तात्क्रियावाचिनः प्रथमासमर्थात् 'अस्याम्' इति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रत्ययो भवति। 'घञः' इति कृद्ग्रहणम्, तत्र गतिकारकपूर्वमपि गृह्यते। श्येनपातोऽस्यां वर्तते श्यैनम्पाता। तैलम्पाता।

घञ इति किम्? श्येनपतनमस्यां वर्तते। क्रियेति किम्? प्राकारोऽस्यां वर्तते।

अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात्पुनरुपादीयते, यावता द्वयमपि प्रकृतमेव? क्रीडायामित्यनेन तत्सम्बद्धम्, अतस्तदनुवृत्तौ

पदमञ्जरी

लिङ्गस्य विवक्षितत्वं दर्शयति। *घञन्तात्क्रियावाचिन इति*। भावे यो घञ् तदन्तादित्यर्थः। *श्यैनम्पातेति*। पतनं पातः, श्येनानां पात इति कर्तरि षष्ठ्याः समासः, ततो ञः, 'श्येनतिलस्य पाते ञः' इति मुम्। *प्राकार इति*। द्रव्य-वचनोऽयं कर्मणि घञन्तः, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति प्रशब्दस्य

न्यासः

प्रकृतिविशेषणमिति। यत्र तद् घञन्तं क्रियावाचि चेद् भवतीति। तेन भावे यो घञ् तदन्तात् प्रत्ययो भवतीत्युक्तं भवति। ननु च भावे यो घञ् तेनैव तदन्तं क्रियावाचि? यस्माद् धात्वर्थस्य सिद्धता नाम यो धर्मस्तत्र घञादिभिर्भवितव्यमित्युक्तं प्राक्, धर्मधर्मि-णोर्भेदस्याविवक्षितत्वात् क्रियाधर्मोऽपि क्रियाशब्देनोक्त इत्यदोषः। इतिकरणो विवक्षार्थ इति। ननु च पूर्वसूत्रादेवेतिकरणोऽनुवर्तिष्यते, तत् किं पुनरिह तस्योपादानम्? इतिकरणस्येह प्रकरणेऽनधिकारतां दर्शयितुं पुनरुपादानम्। तेन 'तदधीते तद्वेद' इत्यत्रास्येतिकरणस्याननुवृत्तौ विवक्षानियमाभावादध्येतृवेदितृमात्रे प्रत्ययः सिद्धो भवती-त्येके। वैचित्र्यार्थमितिकरणोपादानमित्यपरे। श्यैनम्पातेति। 'शल हुल पत्लृ गतौ', भावे घञ्, श्येनस्य पात इति षष्ठीसमासः। ञे विहिते 'श्येनतिलस्य पाते ञः' इति मुम्।

प्राकार इति। करोतेः प्रपूर्वाद् 'अकर्तरि च कारके संज्ञायाम्' इति कर्मणि घञ्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति प्रशब्दस्य दीर्घः। भवतीदं घञन्तम्, न तु क्रिया-वाचि; प्राकारस्य द्रव्यत्वात्।

अथेत्यादि चोद्यम्। क्रीडायामित्यनेन तत्सम्बद्धमित्यादि परिहारः। स्यादेतत्

क्रीडानुवृत्तिरपि सम्भाव्येत । सामान्येन चेदं विधानम् । दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः । मौसलपाता तिथिः ॥

## तदधीते तद्वेद ॥ ५९ ॥

तदिति द्वितीयासमर्थाद् 'अधीते', 'वेद'–इत्येतयोरर्थयोर्यथाविहितं प्रत्ययो भवति । छन्दोऽधीते छान्दसः । वैयाकरणः । नैरुक्तः । निमित्तानि वेद नैमित्तः । मौहूर्तः । औत्पातः ।

द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम् ॥

पदमञ्जरी

दीर्घत्वम् । *सामान्येन चेदं विधानमिति* । एतदेवोदाहरणेन द्रढयति— *दण्डपात इति* ॥

*तदधीते तद्वेद* ॥ इह योऽयं ग्रन्थमधीते स तं स्वरूपतो वेत्ति, यश्च वेत्ति सोऽवश्यमधीते—इत्यन्यतरोपादानेन सिद्धम्, किमर्थमिमावर्थावुपदिश्येते, नैतयोरावश्यकः समावेशः, अध्ययनम् = शब्दपाठः, अर्थावबोधः = वेदनम्, भवति च—कश्चित्संपाठं पठति नार्थं वेत्ति, कश्चिच्चार्थं वेत्ति न संपाठं पठति ।

*द्विस्तद्ग्रहणमित्यादि* । 'तदधीते वेद' इत्युच्यमाने समुच्चयो विज्ञायेत, ततश्च यस्तदधीते वेद च तत्रैव स्यात्, यस्तु केवलमधीते वेद वा न तत्र स्यात्; द्विस्तद्ग्रहणे तु वाक्यभेदेनाधीयानविदुषोः पृथक्प्रत्ययविधानं सिध्यति । ननु च 'तदस्य तदस्मिन्स्यात्' इत्यत्र नानार्थनिर्देशे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति द्विस्तद्ग्रहणेन न्यायो व्युत्पादयिष्यते, अत एव 'तेन दीव्यति' इत्यत्र प्रत्यर्थं

न्यासः

अनुवर्त्ततां क्रीडा, तस्याश्चेदं प्रत्ययविधानमिष्यत इत्यत आह—सामान्येन चेत्यादि ॥

तदधीते तद्वेद ॥ वैयाकरण इति । 'न य्वाभ्याम्' इत्यादिना वृद्धिप्रतिषेधः, ऐजागमश्च ।

द्विस्तद्ग्रहणमित्यादि । यदि 'तदधीते वेद' इत्येवोच्येत प्रत्ययार्थद्वयस्य द्वितीयासमर्थे समुच्चयो विज्ञायेत, ततश्च यस्त्वधीते वेत्ति च तत्रैव स्यात्; यस्त्वधीते केवलं न वेत्ति, वेत्ति वा केवलं नाधीते तत्र न स्यात् । द्विस्तद्ग्रहणे तु वाक्यभेदादधीयाने विदुषि च प्रत्येकं प्रत्ययः सिध्यति । तदर्थं द्विस्तद्ग्रहणम् । नैतद् द्विस्तद्ग्रहणस्य प्रयोजनम्, यथैव हि 'तेन दीव्यति खनति जयति जितम्' इत्यत्र सकृत् समर्थविभक्त्युपादानेऽपि प्रत्ययार्थचतुष्टयेन तृतीयासमर्थेन समुच्चयो न विज्ञायते, तथेहापि न विज्ञास्यते । तेन यथा दीव्यतिप्रभृतिषु प्रत्ययो भवति, तथेहापि प्रत्येकमधीयाने विदुषि च भविष्यतीति ? न ब्रूमः—इहैव द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति । कुतस्तर्हि ?

## क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ६० ॥

क्रतुविशेषवाचिभ्य उक्थादिभ्यश्च सूत्रान्ताच्च ठक्प्रत्ययो भवति 'तदधीते तद्वेद' इत्यस्मिन्विषये। अणोऽपवादः। अग्निष्टोममधीते वेद वा आग्निष्टोमिकः। वाजपेयिकः। उक्थादिभ्यः—औक्थिकः। लौकायतिकः। सूत्रान्तात्—वार्त्तिकसूत्रिकः। सांग्रहसूत्रिकः।

पदमञ्जरी

प्रत्ययो भवति? न ब्रूमः—इहैव द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति, किं तर्हि? उत्तरत्र 'क्रतूक्थादिसूत्रान्ताट्ठक्', 'वसन्तादिभ्यष्ठक्' इत्यत्रापि, किं च कारणं न स्यात्? क्रतुशब्दः कर्मनामधेयं वसन्तादयोऽप्यर्थाः, न तेषामध्ययनं सम्भवति, तस्य शब्दविषयत्वात्, तत्सहचरिते तु ग्रन्थे सम्भवति, गौणत्वात्तु न गृह्यते, मुख्य एव त्वर्थे वेदनं सम्भवतीति तेभ्यो विदुष्येव स्याद्, नाध्येतरि। पुनस्तद्ग्रहणात्तु यत्नाद् गौणस्यापि ग्रहणात्तत्रापि भवति॥

*क्रतूक्थादिसूत्रान्ताट्ठक्॥ क्रतुविशेषवाचिभ्य इति।* स्वरूपस्य तु ग्रहणं न भवति, यदि स्यादुक्थादिष्वेव पठेत्। क्रतुसामान्यवाचिनामपि सोमयागादीनां पर्यायाणां न भवति; उक्थादिषु यज्ञशब्दस्य पाठात्। तस्माद्विशेषवाचिनामेव ग्रहणं तेभ्यो मुख्यार्थवृत्तिभ्यो वेदितरि प्रत्ययः, तत्प्रतिपादनपरग्रन्थवृत्तिभ्यस्त्वध्येतरि। *वार्त्तिकसूत्रिक इति।* वृत्तौ साधु वार्त्तिकम् 'कथादिभ्यष्ठक्'। वार्त्तिकं च तत्सूत्रं चेति कर्मधारयात्प्रत्ययः। एवं *सांग्रहसूत्रिक इति।* कल्पसूत्रमिति कर्मधारयः, समाहारद्वन्द्वो वा।

न्यासः

'क्रतूक्थादिसूत्रान्ताट्ठक्', 'वसन्तादिभ्यष्ठक्' इत्यत्र च। किं कारणं तत्र न स्यात्? क्रतुशब्दः कर्मनामधेयः, वसन्तादयोऽप्यृतुवचनाः, तेषामध्ययनं नोपपद्यते। तत्सहचरिते ग्रन्थे स्यात्, स च तत्र गौण इति न गृह्यते। मुख्य एवार्थे वेदने सम्भवतीति तेभ्यो विदुष्येव प्रत्ययः स्यात्, नाध्येतरि। पुनर्द्विस्तद्ग्रहणाद् गौणस्यापि ग्रहणं भवतीति प्रत्येकमध्येतृविदुषोरत्र ठक्प्रत्ययो भवति॥

क्रतूक्थादिसूत्रान्ताट्ठक्॥ क्रतुशब्दः कर्मनामधेयः, तस्याध्ययनवेदने द्वे न सम्भवत इति साहचर्यात् तदर्थो ग्रन्थो गृह्यते, न तु क्रतुनामा क्रतुरस्तीति तद्विशेषा येऽग्निष्टोमादयस्तदर्थो ग्रन्थो गृह्यते, तत्र चाह— क्रतुविशेषवाचिभ्य इति। अग्निष्टोममधीत इत्यग्निष्टोमेन सहचरितं तदर्थग्रन्थमधीत इत्यर्थः।

* सूत्रान्तादकल्पादेरिष्यते *। कल्पसूत्रमधीते काल्पसूत्रः, अणेव भवति। उक्थशब्दः केषुचिदेव सामसु रूढः। यज्ञायज्ञीयात्परेण यानि गीयन्ते, न च तान्यधीयाने प्रत्यय इष्यते, किं तर्हि? सामलक्षणे औक्थिक्ये वर्तमान उक्थशब्दः प्रत्ययमुत्पादयति। उक्थमधीते, औक्थिकः। औक्थिक्यमधीत इत्यर्थः। औक्थिक्यशब्दाच्च प्रत्ययो न भवत्येव; अनभिधानात्।

* विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यम् *। वायसविद्यिकः। सार्पविद्यिकः। गौलक्षणिकः। आश्वलक्षणिकः। मातृकल्पिकः। पाराशरकल्पिकः।

विद्या च नाङ्गक्षत्त्रधर्मसंसर्गत्रिपूर्वा *। अङ्गविद्यामधीते आङ्गविद्यः। क्षात्त्रविद्यः। धार्मविद्यः। सांसर्गविद्यः। त्रैविद्यः।

पदमञ्जरी

*यज्ञायज्ञीयात्परेणेति*। एनपा योगे पञ्चमी चिन्त्या, एनबपि परशब्दात्पाक्षिकः, यदा तद्विधौ 'उत्तराधरदक्षिणादातिः' इति नानुवर्तते, दिक्शब्देभ्य इत्येवानुवर्तते। न च *तान्यधीयाने प्रत्यय इष्यत इति*। ठग्, अण्—च प्रत्ययद्वयमपि नेष्यते, तेनोक्थान्यधीयत इति वाक्यमेव भवति। अत्र च अभिधानमेव शरणम्, सामलक्षणं प्रातिशाख्यम्। *औक्थिक्य इति*। औक्थिकानामाम्नायः, इदमर्थे 'छन्दोगौक्थिक' इति ञ्यः। *औक्थिक्यशब्दाच्च प्रत्ययो न भवतीति*। अणप्रत्यय इत्यर्थः, इदं प्रसङ्गादुक्तम्। *सूत्रान्तादिति*। अत्यल्पमिदमुच्यत इत्याह—*विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यमिति*। *विद्या* चेत्यादिवाक्येनातिप्रसक्तस्यापवादः। अङ्गादिपूर्वो विद्याशब्दः प्रत्ययं नोत्पादयतीत्यर्थः। *त्रैविद्य इति*।

न्यासः

सूत्रान्तादकल्पादेरिष्यत इति। किमिष्यत एव? ततो न तत् शस्यते, लभ्यते च। कुतः? वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानात्। किं तर्हि? सामलक्षण औक्थिक्ये वर्त्तमाने इति। उक्थसंज्ञकानां साम्नां लक्षणं व्याख्याग्रन्थ औक्थिक्यः, 'छन्दोगौक्थिक्य' इत्यादिना ञ्यः। तत्रौक्थिक्ये सामलक्षणे ग्रन्थे वर्त्तमान उक्थशब्दः प्रत्ययमुत्पादयति। कुत एतत्? गौणेन सह क्रतुशब्देन निर्देशात्। औक्थिक्ये उक्थशब्दस्य वृत्तिस्तादर्थ्याद्भवति। भवति च तादर्थ्यात् ताच्छब्द्यम्, यथा—प्रदीपार्था मल्लिका प्रदीप इति। अत्रौक्थिक्यं योऽधीते कथं तत्र भवितव्यम्? इत्यत आह—औक्थिक्यशब्दाच्चेति। तत्रैव कारणमाह—अनभिधानादिति।

❀ आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्यः ❀। आख्यानाख्यायिकयोरर्थग्रहणम्, इतिहासपुराणयोः स्वरूपग्रहणम्। यावक्रीतिकः। प्रैयङ्गविकः। वासवदत्तिकः। सौमनोत्तरिकः। ऐतिहासिकः। पौराणिकः।

❀ सर्वसादेर्द्विगोश्च लः ❀। सर्ववेदः। सर्वतन्त्रः। सादेः — सवार्त्तिकः। ससंग्रहः। द्विगोः — द्विवेदः। पञ्चव्याकरणः।

पदमञ्जरी

त्र्यवयवा विद्या त्रिविद्या, तामधीते त्रैविद्यः। तिस्रो विद्या अधीत इति तु विग्रहे 'द्विगोर्लुगनपत्ये' इति लुक्प्रसङ्गः।

*यावक्रीतिक इति*। यवक्रीतमधिकृत्य कृतमाख्यानं यवक्रीतशब्देनोच्यते, एवं प्रैयङ्गवमधिकृत्य कृतमुपचारात्प्रैयङ्गवमुच्यते। *वासवदत्तिक इति*। वासवदत्तामधिकृत्य कृता आख्यायिका, 'अधिकृत्य कृते ग्रन्थे' इत्यत्रार्थे 'वृद्धाच्छः', तस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति लुप्, ततोऽनेन ठक्। एवं *सौमनोत्तरिकः*, *ऐतिहासिक इति*। इति हासीदिति यत्रोच्यते स इतिहासः, पृषोदरादित्वात्साधुः।

*सर्वसादेरिति*। सर्वादेः, सादेर्द्विगोश्चोत्पन्नस्य प्रत्ययस्य लो भवति लुग्भवतीत्यर्थः, अर्थवतः सशब्दस्य ग्रहणात्सर्वशब्दः पृथगुपात्तः, 'द्विगोश्च' इत्यनेन 'द्विगोर्लुगनपत्ये' इत्ययमेव लुक् स्मारितः। *सर्ववेद इति*। सर्ववेदानधीते इत्यणो लुक्। *सवार्त्तिक इति*। वर्त्तिकान्तमधीते इति अन्तवचने सहशब्दस्याव्ययीभावः, 'अव्ययीभावे चाकाले' इति सभावः, ततोऽणो लुक्।

न्यासः

'विद्यालक्षणकल्पसूत्रान्तात्' इत्यस्यातिप्रसक्तस्यापवादमाह—विद्या चेत्यादि। विद्याशब्दोऽनङ्गक्षत्रधर्मसंसर्गत्रिपूर्व एव प्रत्ययमुत्पादयति, नाङ्गादिपूर्व इत्यर्थः। त्रैविद्य इति। त्र्यवयवा विद्या, शाकपार्थिवादित्वादुत्तरपदलोपी समासः। त्रिविद्यामधीते त्रैविद्यः।

यावक्रीतमाख्यानमधीते यावक्रीतिकः। प्रियङ्गुमधीते प्रैयङ्गविकः। वासवदत्तामाख्यायिकामधीते वासवदत्तिकः। सुमनोत्तरामधीते सौमनोत्तरिकः।

सर्वसादेर्द्विगोश्च ल इति। सर्वादेः सादेर्द्विगोरुत्पन्नस्य ठको लोपो भवतीत्यर्थः। ननु च 'द्विगोर्लुगनपत्ये' इत्येवं सिद्धः? सत्यमेतत्; इह तु कैश्चिद् 'विद्यालक्षणकल्पसूत्रान्ताद्' इत्यादिना प्रतिपदं प्रत्ययो विधीयते। तद् द्वेष्यमपि जायेत। प्रतिपदविधानान्न लुक्, ततो लुग्वचनम्।

* अनुसूर्लक्ष्यलक्षणे च * । अनुसूर्नाम ग्रन्थः, तमधीते आनुसुकः । लाक्षिकः । लाक्षणिकः ।

* इकन्बहुलं पदोत्तरपदात् * । पूर्वपदिकः[1] ।

* शतषष्टेः षिकन् पथो बहुलम् * । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी । बहुलग्रहणादणपि भवति – शातपथः, षाष्टिपथः ।

उक्थ । लोकायत । न्याय । न्यास । निमित्त । पुनरुक्त । निरुक्त । यज्ञ । चर्चा । धर्म । क्रमेतर । श्लक्ष्ण । संहिता । पद । क्रम । संघात । वृत्ति । संग्रह । गुणागुण । आयुर्वेद । सूत्रान्तादकल्पादेः * विद्यालक्षणकल्पान्तात् । विद्या चानङ्गक्षत्त्रधर्मसंसर्गत्रिपूर्वा । आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् । सर्वसादेर्द्विगोश्च लः । अनुसूर्लक्ष्यलक्षणे च । द्विपदी – ज्योतिषि । अनुपद । अनुकल्प । अनुगुण । इकन्बहुलं पदोत्तरपदात् । शतषष्टेः षिकन् पथो बहुलम् ॥

पदमञ्जरी

*अनुसूरिति* । अनुसूशब्दष्ठकमुत्पादयति, लक्ष्यलक्षणशब्दौ चेत्यर्थः । *आनुसुक इति* । अनुसूमधीत इति ठक्, तस्य 'इसुसुक्तान्तात्कः' इति कादेशः, 'केऽणः' इति ह्रस्वः ।

*पदोत्तरपदादिति* । पदशब्द उत्तरपदं यस्य स तथोक्तः, पूर्वपदमधीते पूर्वपदिकः । एवमुत्तरपदिकः ।

*शतषष्टेरिति* । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन् भवति । षकारो ङीषर्थः ॥

न्यासः

अनुसूर्लक्ष्यलक्षणे चेति । अनुसूशब्दः प्रत्ययमुत्पादयति । लक्ष्यलक्षणे च शब्दरूपे प्रत्ययमुत्पादयतः । आनुसुक इति । 'इसुसुक्तान्तात् कः' इति कः, 'केऽणः' इति ह्रस्वः ।

इकन् बहुलं पदोत्तरपदादिति । पदशब्द उत्तरपदं यस्य स तथोक्तः ।

शतषष्टेः षिकन् पथ इति । शतषष्टिशब्दाभ्यामुत्तरस्मात् पथः षिकन् प्रत्ययो

---

१. "इकन् बहुलं पदोत्तरपदात् । पदोत्तरपदिकः । अन्ये तु पदोत्तरपदादिति पदशब्द उत्तरपदं यस्य तस्मादित्यर्थं व्याचक्षते; तन्मते पूर्वपदिकः, उत्तरपदिकः" इति क्वचित्पाठः ।

### क्रमादिभ्यो वुन् ॥ ६१ ॥

'क्रम' इत्येवमादिभ्यः शब्देभ्यो वुन्प्रत्ययो भवति 'तदधीते तद्वेद' इत्यस्मिन्विषये । अणोऽपवादः । क्रमकः । पदकः ।

क्रम । पद । शिक्षा । मीमांसा । सामन् ॥

### अनुब्राह्मणादिनिः ॥ ६२ ॥

अनुब्राह्मणशब्दादिनिः प्रत्ययो भवति 'तदधीते तद्वेद' इत्यस्मिन्विषये । अणोऽपवादः । ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणम् । तदधीते अनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिनः ।

मत्वर्थे 'अत इनिठनौ' इति इनिना सिद्धम् ? तत्रैतस्माट्ठन्नपि प्राप्नोति । अनभिधानान्न भविष्यति ? अणो निवृत्त्यर्थं तर्हि वचनम् ॥

### वसन्तादिभ्यष्ठक् ॥ ६३ ॥

'वसन्त' इत्येवमादिभ्यष्ठक्प्रत्ययो भवति 'तदधीते तद्वेद' इत्यस्मिन्विषये । अणोऽपवादः । वसन्तसहचरितोऽयं ग्रन्थो वसन्तः, तमधीते वासन्तिकः । वार्षिकः ।

पदमञ्जरी

*अनुब्राह्मणादिनिः* ॥ *ब्राह्मणसदृश इति* । 'यथार्थे यदव्ययम्' इति सादृश्येऽव्ययीभावः ।

चोदयति—*मत्वर्थ इति* । परिहरति—*तत्रैतस्मादिति* । दूषयति—*अनभिधानादिति* । साक्षात्परिहारमाह—*अणो निवृत्त्यर्थं तु वचनमिति* । क्वचित्तु मत्वर्थं इत्यादि न पठ्यते ॥

*वसन्तादिभ्यष्ठक्* ॥ *वसन्तसहचरित इति* । यत्र वसन्तो वर्ण्यते यो वा

न्यासः

भवति । षकारो ङीषर्थः, नकारः स्वरार्थः । एतत् सर्वमुक्थादिषु पाठादेव सिद्धम् । यदपीह किञ्चिन्न पठ्यते, तदपि च बहुलग्रहणेन संगृहीतम् । उक्थादिष्वपि षिकन् बहुलं पदोत्तरपदाच्चेति पठ्यते ॥

क्रमादिभ्यो वुन् ॥ अनुब्राह्मणादिनिः ॥ ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणमिति । यथार्थेऽव्ययीभावं दर्शयति । ननु योऽनुब्राह्मणमधीते तस्यानुब्राह्मणमस्तीति तत्र मत्वर्थीयेनैवेनिना सिद्धम्, तत् किमर्थमिदम् ? अण्बाधनार्थम् । यदीदं नोच्येत 'तदधीते तद्वेद' इत्यण् प्रसज्येत ॥

वसन्तादिभ्यष्ठक् ॥ वसन्तसहचरितो ग्रन्थो वसन्त इति । यो वसन्ते पठ्यते,

वसन्त । वर्षाशरद्[1] । हेमन्त । शिशिर । प्रथम । गुण । चरम । अनुगुण । अपर्वन् । अथर्वन् ॥

प्रोक्ताल्लुक् ॥ ६४ ॥

प्रोक्तसहचरितः प्रत्ययः 'प्रोक्तः' । प्रोक्तप्रत्ययान्तादध्येतृवेदित्रोरुत्पन्नस्य लुग्भवति । पाणिनिना प्रोक्तं पाणिनीयम्, तदधीते पाणिनीयः ।

पदमञ्जरी

वसन्तेऽध्येयः । वसन्तसाहचर्यात्ताच्छब्द्यं लभते ।

उक्थादिष्वेते पठितव्याः, ते वा वसन्तादिषु ? तथा तु न कृतमित्येव । अथर्वन्शब्दोऽत्र पठ्यते, स उपचारेण प्रोक्ते ग्रन्थे वर्तते । अथर्वणमधीते आथर्वणिकः, 'दाण्डिनायनहास्तिनायन' इति निपातनात् 'नस्तद्धिते' इति टिलोपाभावः ॥

*प्रोक्ताल्लुक्* ॥ *प्रोक्तसहचरित इति* । अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य पौर्वापर्यायोगान्मुख्यार्थासम्भवाद् गौणस्य ग्रहणमित्यर्थः । अपर आह—प्रोक्तशब्द इह स्वर्यते, तेन तदधिकारविहितः प्रत्ययो गृह्यत इति । यदि वा प्रोक्ते भवः प्रोक्त इति सौत्रोऽयमतद्धितनिर्देशः । *पाणिनीयमिति* । ननु पणोऽस्यास्तीति पणी, तस्यापत्यं पाणिनः, पाणिनस्यापत्यं पणिनो युवा पाणिनिः, ततः 'तेन प्रोक्तम्' इत्यर्थविवक्षायां 'यूनि लुक्' इति इञो लुकि कृते प्रत्ययलक्षणेन 'इञश्च' इत्यण् प्राप्नोति ? नैष दोषः; 'इञश्च' इत्यत्र 'कण्वादिभ्यो गोत्रे' इत्यतः 'गोत्रे' इत्यनुवर्तते, तेनेञं विशेषयिष्यामः—गोत्रे य इञ् विहितस्तदन्तादिति । तत्र च पारिभाषिकं गोत्रं गृह्यते, तेन यूनीञो न भविष्यति, ततो वृद्धाच्छः; आपिशलिशब्दाद् 'इञश्च' इत्यण्, उभयत्राध्येतृप्रत्ययस्य लुक् । नन्वत्र लुकि सति,

न्यासः

नियोगेन यत्र च वसन्तो वर्ण्यते स वसन्तसहचरितो भवति । वर्षाशरदमिति । वर्षाश्च शरच्च वर्षाशरदम् । 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच् । समासान्तेन निर्देशः ॥

प्रोक्ताल्लुक् ॥ युक्तो निर्देशो यदि प्रोक्तनामा ग्रन्थो व्याकरणादिर्भवति, न चासावस्ति; अन्यार्थेन ततः परः सम्भवतीत्येतं दोषमपाकर्तुमाह—प्रोक्तसहचरित इत्यादि । साहचर्यात् सोऽयमित्यभेदोपचारेण प्रोक्तार्थे यो विहितः प्रत्ययः स प्रोक्तशब्देनोक्त इति दर्शयति । पाणिनीय इति । 'वृद्धाच्छः' तदन्तात् 'तदधीते तद्वेद' इत्यण् । तस्य लुक् पाणिनीयः । आपिशलिना प्रोक्तमित्यण्, तस्य लुक्—आपिशलः । कः पुनरत्र

१. 'वर्षा, शरद्'—इति शब्दद्वयात्मकः मुद्रितः पाठः ।

आपिशलः । स्त्रियां स्वरे च विशेषः – पाणिनीया ब्राह्मणी ॥

## सूत्राच्च कोपधात् ॥ ६५ ॥

सूत्रवाचिनः ककारोपधादुत्पन्नस्य प्रत्ययस्य लुग्भवति । अप्रोक्तार्थं आरम्भः । पाणिनीयमष्टकं सूत्रम् , तदधीते अष्टकाः पाणिनीयाः । दशका वैयाघ्रपदीयाः । त्रिकाः काशकृत्स्नाः ।

* संख्याप्रकृतेरिति वक्तव्यम् * । इह मा भूत् – महावार्त्तिकं सूत्रमधीते माहावार्त्तिकः । कालापकमधीते कालापकः ।

पदमञ्जरी

असति वा तदेव रूपमिति नास्ति विशेषः ? तत्राह—*स्त्रियां स्वरे च विशेष इति* । असति लुकि स्त्रियाम् 'टिड्ढाणञ्' इत्यादिना ङीप् स्यात् , अण्स्वरेणान्तोदात्तत्वं च । लुकि तु सति टाब् भवति, छस्वरेण मध्योदात्तत्वं च । आपिशले तु स्वरे नास्ति विशेषः, यथा तु लुकि सत्यपिशलेत्यत्र ङीन्न भवति, तथा 'अनुपसर्जनाद्' इत्यत्र प्रत्यपादि ॥

*सूत्राच्च कोपधात्* ॥ *अष्टकं सूत्रमिति* । अष्टावध्यायाः परिमाणमस्य, 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति 'संख्याया अतिशदन्तायाः कन्' ।

*संख्याप्रकृतेरिति वक्तव्यमिति* । संख्या प्रकृतिर्यस्य प्रत्ययस्य तदन्तात्कोपधादिति वक्तव्यमित्यर्थः । *कालापकमधीते कालापक इति* । कलापिना प्रोक्तम-

न्यासः

विशेषोऽर्थो लुकि सति, यावता तदेव रूपम् ? इत्याह—स्त्रियामित्यादि । असति लुकि 'टिड्ढाणञ्' इति ङीप् स्यात् , सोऽणः स्वरेणान्तोदात्तः । लुकि हि सति टाब् भवति, स्वरेण तु मध्योदात्तः । आपिशलिशब्दाल्लुकि सति स्वरे नास्ति विशेषः । सत्यपि हि लुक्यन्तोदात्तत्वेन भवितव्यम् । स्त्रियां तु पूर्वोक्तो विशेषो वर्त्तते—न हि लुकि सति ङीब् भवति; सत्यप्यणि तत्रैव 'अनुपसर्जनाद्' इत्यधिकारात् प्रतिषेधात् , प्रोक्तार्थविहितस्य चाण इहोपसर्जनत्वात् ॥

सूत्राच्च कोपधात् ॥ कोपधादिति वचनात् स्वरूपग्रहणं न भवतीत्यतः सूत्रवाचिनो ग्रहणं विज्ञायत इत्याह—सूत्रवाचिनः प्रातिपदिकादिति । अष्टकमिति । अष्टावध्यायाः परिमाणमस्य । 'तदस्य परिमाणम्' इत्यनुवर्त्तमाने 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति च 'संख्याया अतिशदन्तायाः कन्' इति कन् ।

संख्याप्रकृतेरिति वक्तव्यमिति । संख्या प्रकृतिर्यस्य प्रत्ययस्य स संख्याप्रकृतिः । तदन्तात् कोपधादुत्पन्नस्य लुब् भवतीत्येतदर्थरूपं वक्तव्यम् , व्याख्येयमित्यर्थः । तत्रेदं

कोपधादिति किम् ? चतुष्टयमधीते चातुष्टयः ॥

छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥

प्रोक्तग्रहणमनुवर्तते । छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि

पदमञ्जरी

धीयते कालापाः, 'कलापिनोऽण्,' 'नान्तस्य टिलोपे सब्रह्मचारि' इत्यौपसंख्यानिकष्टिलोपः, ततः 'तदधीते' इत्यण्, प्रोक्ताल्लुक्। कालापानामाम्नाय इति 'गोत्रचरणाद् वुञ्', कालापकम्, ततः 'तदधीते' इत्यण्, तस्य लुग्न भवति। यदि स्याद् ञित्स्वरेणाद्युदात्तत्वं स्यात्, लुगभावे त्वण एव स्वरो भवति, स्त्रियां च ङीब् भवति।

चतुष्टय इति। चत्वारोऽवयवा अस्य 'संख्याया अवयवे तयप्', 'ह्रस्वात्तादौ तद्धिते' इति मूर्द्धन्यः ॥

*छन्दोब्राह्मणानि च तद्विषयाणि* ॥ *प्रोक्तग्रहणमनुवर्तते इति*। तद्ध्यनुवर्तमानमेव पूर्वसूत्र आरम्भसामर्थ्यान्न सम्बध्यते। *छन्दांसि च ब्राह्मणानि चेति*। तद्वाचीनि शब्दरूपाणीत्यर्थः। स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात्, अप्रोक्तप्रत्ययान्तत्वाच्च। *प्रोक्तप्रत्ययान्तानीति*। प्रोक्तादिति पञ्चम्यन्तं प्रकृतं प्रथमाबहुवचनान्तं विपरिणम्यते, 'छन्दोब्राह्मणानि' इत्यनेन सामानाधिकरण्या-

न्यासः

व्याख्यानम्—वेति वर्त्तते, सा च व्यवस्थितविभाषा, तेन संख्याप्रकृतेरेव भविष्यति, नान्यस्मादिति।

चातुष्टयमिति। चत्वारोऽवयवा अस्येति 'संख्याया अवयवे तयप्', 'ह्रस्वात् तादौ तद्धिते' इति मूर्धन्यः षत्वं भवति। एतत् संख्याप्रकृतिप्रत्ययान्तम्, न तु कोपधम्, किं तर्हि ? योपधम् ॥

छन्दोब्राह्मणानि च तद्विषयाणि ॥ प्रोक्तग्रहणमनुवर्त्तत इति। तच्चेहार्थात् प्रथमान्तं विज्ञायते छन्दोब्राह्मणानीत्यस्य समानाधिकरणार्थम्, अत आह—छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानीति भवन्ति। स्वरूपग्रहणमिह न भवति। तथा हि—प्रोक्तग्रहणमिहानुवर्त्तते, न च च्छन्दोब्राह्मणशब्दौ प्रोक्तप्रत्ययान्तौ। तस्माच्छन्दोब्राह्मणवाचिनो ये शब्दाः प्रोक्तप्रत्ययान्तास्ते गृह्यन्ते। किमर्थं पुनरिदमुच्यते ? इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता लभ्यते। तथा हि क्वचित् तदन्तस्य स्वातन्त्र्यमुपलभ्यते, यथा-पाणिनिना प्रोक्तं पाणिनीयं शास्त्रम्। प्रोक्तार्थ एव वृत्तिः = स्वातन्त्र्यम्। पाणिनीयशब्दस्य चात्र प्रोक्तार्थ एव वृत्तिः। क्वचिदुपाध्यन्तरयोगः, यथा—पाणिनीयं महत् भवत्तु विहितमिति। क्वचिद्वाक्यम्—पाणिनीयमधीत इति। क्वचिद् वृत्तिः—पाणिनीय इति। तदिह छन्दोब्राह्मणानामध्येतृवेदितृविषया वृत्तिर्यथा स्यात्। प्रकारान्तरं मा

तद्विषयाण्येव भवन्ति । अध्येतृवेदितृप्रत्ययविषयाणि । अनन्यभावो विषयार्थः, तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च निवर्तते । कठेन प्रोक्तमधीयते कठाः । मौदाः । पैप्पलादाः । आर्चाभिनः । वाजसनेयिनः ।

पदमञ्जरी

दिति भावः । *अध्येतृवेदितृप्रत्ययविषयाणीत्य*नेनैतद्दर्शयति—तच्छब्देनाध्येतृवेदितृप्रत्ययः परामृश्यते, विधेयतया प्रधानत्वात्; नाध्येतृवेदितारावर्थौ, तयोः प्रत्ययविधौ गुणभावादिति । किं सिद्धं भवति ? अध्येतृविषयमपि वाक्यं निवर्त्तितं भवति । *अनन्यभावो विषयार्थ इति* । ग्रामसमुदायादिवृत्तिस्तु विषयशब्दोऽसम्भवान्न गृह्यते । अत्र यद्यधीते वेदेत्यनुवर्तेत, ततोऽध्येतृवेदितृविवक्षायामेव तद्विषयता विधीयेत, ततश्च तद्विषयमेव वाक्यं निवर्तयेत्, न क्रियान्तरविषयम्, नापि स्वातन्त्र्यमुपाध्यन्तरयोगं च । यदाह—तत्र 'यथाधिकारात्तद्विषयप्रसङ्गः' इति । तस्मात्प्रोक्तग्रहणमेवानुवर्तते, नाधीयते वेदेति । तच्छब्देन च प्रत्ययः परामृश्यते, विषयशब्दश्च अनन्यभावार्थः । तेन सर्वमेतत्स्वातन्त्र्यादि निवर्तते । आह च—'सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात्' इति । प्रोक्तग्रहणमेवाधिक्रियते, नाधीते वेदेत्येतावर्थावित्यर्थः ।

इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता दृश्यते—स्वातन्त्र्यम्, उपाध्यन्तरयोगः, वाक्यम्, अध्येतृवेदित्रोः प्रत्यय इति । स्वातन्त्र्यं तावत्—पाणिनिना प्रोक्तं पाणिनीयमिति । प्रोक्तार्थ एव वृत्तिः; उपाध्यन्तरयोगः । महत्पाणिनीयमिति वाक्यम् । पाणिनीयमधीत इति प्रत्ययः—पाणिनीयाश्छात्रा इति । छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानां नित्यमध्येतृवेदितृप्रत्ययान्ततैवेष्यते, न तु

न्यासः

भूदित्येवमर्थमिदमुच्यते । अध्येतृवेदितृ इति । अध्येतृवेदितृप्रत्ययो विषयो येषामिति बहुव्रीहिः । अनन्यत्रभावो विषयार्थ इति । यथा मत्स्यानां जलं विषय इत्यत्रानन्यत्रभावे विषयशब्दो वर्त्तते, तथेहापि । एतेन यद्यपि ग्रामसमुदायादिष्वप्यर्थेषु विषयशब्दस्य वृत्तिः, तथापीहानन्यत्रभावे वर्तमानः संगृह्यत इति दर्शयति । तेनेत्यादिना अनन्यत्रभाववृत्तिशब्दस्य फलं दर्शयति । एवं ह्यनन्यत्रभावो भवति यदि स्वातन्त्र्यादि न भवति । उपाध्यन्तरयोगो महत्त्वादिना विशेषेण सम्बद्धः कठ इति । कठेन प्रोक्तमिति । 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः, तस्य 'कठचरकाल्लुक्', ततः कठेन प्रोक्तमधीते तद्वेदेति पुनरण्, तस्यापि 'प्रोक्ताल्लुक्' इति लुक् । मौदाः, पैप्पलादा इति । 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः—मोदेन प्रोक्तमिति, कलापिनोऽण्' इत्यण्, तदन्ताद् 'तदधीते तद्वेद' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । आर्चाभिन इति । ऋचामेन प्रोक्तमिति 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः,

ब्राह्मणानि खल्वपि – ताण्डिनः । भाल्लविनः । शाट्यायनिनः । ऐतरेयिणः ।

ब्राह्मणग्रहणं किम्, यावता छन्द एव तद् ? ब्राह्मणविशेषप्रतिपत्त्यर्थम्, इह तद्विषयता मा भूत् – याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि । सौलभानि ।

पदमञ्जरी

स्वातन्त्र्यादि, तदर्थमिदमारभ्यते, तदाह—*तेनेति* । एवं च कृत्वाऽर्थद्वयस्यापि तन्त्रेण विग्रहः कर्तव्य इति दर्शयति । कठेन प्रोक्तमधीयते *कठाः*, वैशम्पायनान्तेवासित्वाण्णिनिः, तस्य 'कठचरकाल्लुक्' इति लुक्, ततः 'तदधीते' इत्यण्, ततस्तस्यापि 'प्रोक्ताल्लुक्' इति लुक् । मुदपिप्पलादशब्दाभ्यां प्रोक्तार्थे औत्सर्गिकोऽण् । शेषं यथायोगं पूर्ववत् । ऋचाभः=वैशम्पायनान्तेवासी । एवं *ताण्ड्यः* । वाजसनेयशब्दः शौनकादिः । *ताण्डिन इति* । 'आपत्यस्य' इति यलोपः । *भाल्लविशब्द* इञन्तः । शाट्यशब्दाद् गर्गादियञन्ताद् 'यञिञोश्च' इति फक् । ऐतरेयशब्दः शुभ्रादिढगन्तः, तेभ्यः 'पुराणप्रोक्तेषु' इति णिनिः, सर्वत्राध्येतृप्रत्ययस्य लुक् ।

*ब्राह्मणविशेषप्रतिपत्त्यर्थमिति* । ब्राह्मणस्य विशेषः पुराणप्रोक्तत्वम् । *याज्ञवल्क्यानीति* । याज्ञवल्क्यशब्दः कण्वादिः, सुलभादौत्सर्गिकोऽण्, अत्र स्वातन्त्र्यं भवति । 'पुराणप्रोक्तेषु' इत्यत्र वक्ष्यति—'याज्ञवल्क्यादयो ह्यचिरकालप्रवृत्ता

न्यासः

तदन्तात् 'तदधीते तद्वेद' इत्यण् । वाजसनेयिन इति । वाजसनेयेन प्रोक्तमिति । 'शौनकादिभ्यश्छन्दसि' इति णिनिः, तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य लुक् । ताण्डिन इति । ताण्ड्यशब्दाद् गर्गादियञन्तात् प्रोक्तार्थे 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति णिनिः, 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः । ततः 'तदधीते तद्वेद' इत्यण् तस्य लुक् । भाल्लविन इति । भाल्लविशब्दादिञन्तात् प्रोक्तार्थे पूर्ववण्णिनिः, तदन्तात् तद्वेदेत्यण्, तस्य लुक् । शाट्यायनिन इति । शाट्यशब्दाद् गर्गादियञन्ताद् 'यञिञोश्च' इति फक्, ततः प्रोक्तार्थे पूर्ववण्णिनिः, तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य लुक् । ऐतरेयिण इति । ऐतरेयशब्दाच् शुभ्रादिढगन्तात् पूर्ववण्णिनिः, ततः 'तदधीते' इत्यण्, तस्य लुक् ।

ब्राह्मणविशेषप्रतिपत्त्यर्थमिति । ब्राह्मणविशेषः पुराणप्रोक्तत्वम् । तस्य प्रतीतिः = प्रतिपत्तिर्यथा स्यादित्येवमर्थं ब्राह्मणग्रहणम् । याज्ञवल्क्यानीति । याज्ञवल्क्यशब्दाद् गर्गादियञन्तात् प्रोक्तार्थे 'कण्वादिभ्यो गोत्रे' इत्यण् । सौलभानीति सुलभेन प्रोक्ता-

चकारोऽनुक्तसमुच्चयार्थः । कल्पे – काश्यपिनः । कौशिकिनः । सूत्रे–पाराशरिणो भिक्षवः । शैलालिनो नटाः । कर्मन्दिनः । कृशाश्विनः ।

छन्दोब्राह्मणानीति किम्? पाणिनीयं व्याकरणम् । पैङ्गी कल्पः ॥

**तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥**

'तत्' इति प्रथमा समर्थविभक्तिः । 'अस्मिन्' इति प्रत्ययार्थः । 'अस्ति' इति प्रकृत्यर्थविशेषणम् । इतिकरणो विवक्षार्थः । 'देशे तन्नाम्नि' इति प्रत्ययार्थविशेषणम् । तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थमस्ति चेत्तद्भवति, यदस्मिन्निति निर्दिष्टं देशश्चेत्स तन्नामा भवति – प्रत्ययान्तनामा, इतिकरणस्ततश्चेद्विवक्षा । उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः । बाल्बजः । पार्वतः । मत्वर्थीयापवादो योगः ॥

पदमञ्जरी

इत्याख्यानेषु वार्ता' इति । *काश्यपिनः, कौशिकिन इति* । 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' । *पाराशरिण इति* । पाराशर्यशब्दाद् गर्गादियञन्तात् 'पाराशर्यशिलालिभ्याम्' इति णिनिः, पूर्ववद्यलोपः । *कर्मन्दिन इति* । 'कर्मन्दकृशाश्वादिनिः' । पिङ्गशब्दात्पुराणप्रोक्तेषु' इति णिनिः ॥

*तदस्मिन्नस्तीति देशे तन्नाम्नि* ॥ *इतिकरणस्ततश्चेद्विवक्षेति* । ननु तन्नाम-

न्यासः

नीति । पूर्ववत् 'कलापिनोऽण्' इत्यण् । अत्र स्वातन्त्र्यं भवति । न हीह पुराणप्रोक्तत्वमस्ति; इदानीन्तनेन प्रोक्तत्वात् । काश्यपिनः, कौशिकिन इति । काश्यपेन प्रोक्तः कल्पः, कौशिकेन प्रोक्त इति । 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः', तदन्तात् 'तदधीते' इत्यण्, तस्य लुक् । पाराशरिणः, शैलालिन इति । पाराशर्येण प्रोक्तं सूत्रम्, शिलालिना प्रोक्तं सूत्रम्—'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति णिनिः, 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः, ततः 'तदधीते' इत्यण्, तस्य लुक् । कर्मन्दिनः, कृशाश्विन इति । कर्मन्देन प्रोक्तं सूत्रम्, कृशाश्वेन प्रोक्तं सूत्रमिति 'कर्मन्दकृशाश्वादिनिः'; तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य लुक् ।

पैङ्गी कल्प इति । पिङ्गेन प्रोक्तः कल्पः—'पुराणप्रोक्त' इत्यादिना णिनिः । तत्र स्वातन्त्र्यमेव भवति, न च तद्विषयता ॥

तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ प्रत्ययान्तनामेति । यदि तर्हि तन्नाम्नि देशे

## तेन निर्वृत्तम् ॥ ६८ ॥

'तेन' इति तृतीयासमर्थात् 'निर्वृत्तम्' इत्यस्मिन्विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने । 'देशे तन्नाम्नि' इति चतुर्ष्वपि योगेषु सम्बध्यते । सहस्रेण निर्वृत्ता साहस्री परिखा । कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । हेतौ कर्तरि च यथायोगं तृतीया समर्थविभक्तिः ॥

## तस्य निवासः ॥ ६९ ॥

'तस्य' इति षष्ठीसमर्थात् 'निवासः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने । निवसत्यस्मिन्निति निवासः । ऋजुनावां

पदमञ्जरी

ग्रहणादेवातिप्रसङ्गो न भविष्यति ? तन्न; द्विविधं नाम—कदाचित्केनचित्सङ्केतितम्, नित्यं व्यवहारानुपाति । तत्र द्वितीयस्य परिग्रहार्थमितिकरणः क्रियते, भूमादिविशेषपरिग्रहार्थं च । 'तन्नाम्नि' इत्येतत्तु नामधेयताविरोधिनो बलीयसोऽपि प्रत्ययान् बाधितुम्, अन्यथा नाप्राप्ते मतुप्यारम्भात्तस्यायं बाधकः । तदपवादैस्त्विनिठनादिभिः सह सम्प्रधारणायामपवादविप्रतिषेधादिनिठनादय एव स्युः ॥

तेन *निर्वृत्तम्* ॥ निर्वृत्तमित्यन्तर्भावितण्यर्थाद् वृतेः कर्मणि क्तः ॥

*तस्य निवासः* ॥ *ऋजुनावामिति* । ऋज्वी नौर्येषां तेषामित्यर्थः ॥

न्यासः

प्रत्ययः, इतिकरणोऽनर्थकः, तन्नामग्रहणादेवातिप्रसङ्गनिवृत्तिः ? नैतदस्ति; द्विविधं हि नाम—संकेतितम्, अनुवृत्तञ्च । संकेतितं यद्यापि व्यवहारपदवीं नानुपतति, अनुवृत्तञ्च व्यवहारमनुपतति । तत्रानुवृत्तं यन्नाम तत्रायं योगः । अनुवृत्तञ्च व्यावहारिकम्, तत्प्रतिपत्त्यर्थमितिकरणः क्रियते, ग्रामादिविशेषपरिग्रहार्थंश्च । यद्येवम्, इतिकरण एव क्रियताम्, किं तन्नाम्नीत्यनेन ? एतदपि न कर्त्तव्यम्; नामधेयता विरोधिनोऽपि बलीयसोऽपि प्रत्ययान् बाधितुम् । कथम् ? नाप्राप्ते मतुप्ययं योग आरभ्यमाणो मतुपमपवादत्वाद् बाधते । तदपवादैस्त्विनिठनादिभिः सह सम्प्रधारणायामपवादविप्रतिषेधादिनिठनादय एव स्युः । नामग्रहणे तु सति बलीयोभिरपि सम्प्रधारणायाः सम्प्रत्ययो भवति—यो नामधेयतां गमयति स चातुरर्थिक एवेति । अतः स एव भवति ॥

तेन निर्वृत्तम् ॥ चतुर्ष्वपीति । अनन्तरातीतेऽस्मिन् वक्ष्यमाणयोश्च योगयोः । कर्त्तरि चेति । लक्ष्यानुरोधेन क्वचिद्धेतौ क्वचित् कर्त्तरि च—सहस्रेणेति हेतौ, कुशाम्बेनेति कर्त्तरि । यदा हेतौ तदा वृत्तेरकर्मकत्वान्निर्वृत्त इति कर्त्तरि निष्ठा, यदा कर्त्तरि तदाऽन्तर्भावितण्यर्थत्वात् कर्मणि । अकर्मका अप्यन्तर्भावितण्यर्थाः सकर्मका भवन्ति ॥

निवासो देश आर्जुनावो देशः । शैबः । औदिष्ठः ॥

अदूरभवश्च ॥ ७० ॥

पूर्वा समर्थविभक्तिरनुवर्तते । तस्येति षष्ठीसमर्थाद् 'अदूरभवः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । विदिशाया अदूरभवं नगरं वैदिशम् । हैमवतम् ।

चकारः पूर्वेषां त्रयाणामर्थानामिह सन्निधानार्थः । तेनोत्तरेसु चत्वारोऽप्यर्थाः सम्बद्धचन्ते ॥

ओरञ् ॥ ७१ ॥

चत्त्वारोऽर्था अनुवर्तन्ते । उवर्णान्तात्प्रातिपदिकाद्यथाविहितं समर्थविभक्तियुक्तादञ् प्रत्ययो भवति 'तदस्मिन्नस्ति' इत्येवमादिष्वर्थेषु । अणोऽपवादः । अरडु – आरडवम् । कक्षतु – काक्षतवम् । कर्कटेलु – कार्कटेलवम् । नद्यास्तु परत्वान्मतुब्भवति – इक्षुमती ।

अत्रधिकारः – प्राक् सुवास्त्वादिभ्योऽणः ॥

मतोश्च बह्वजङ्गात् ॥ ७२ ॥

बह्वज् अङ्गं यस्यासौ बह्वजङ्गो मतुप्, तदन्तात्प्रातिपदिका-

पदमञ्जरी

*अदूरभवश्च* ॥ अदूरमन्तिकं तत्र भवतीत्यदूरभवः, निपातनात्सप्तमीसमासः । *विदिशाया इति* । 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति षष्ठी । *चकार इत्यादि* । असति तु तस्मिन्नानन्तर्यादयमेवार्थ उत्तरत्र सम्बध्येत ॥

*ओरञ्* ॥ अरडुः = क्षत्त्रियविशेषः । *नद्यां तु मतुप्परत्वादिति* । आरडवमित्यादिरञोऽवकाशः, 'नद्यां मतुप्' इत्यस्योदुम्बरावतीत्यादिः ॥

*मतोश्च बह्वजङ्गात्* ॥ *चातुरर्थिक इति* । चतुर्णामर्थानां समूहश्चतुरर्थी, तत्र भवः, अध्यात्मादित्वाट्ठञ् । तद्धितार्थे द्विगौ तु ठञो लुक् स्यात् ।

न्यासः

तस्य निवासः ॥ अदूरभवश्च ॥ ओरञ् ॥ यथायथमिति । यथास्वम् । तत्र प्रथमे प्रथमासमर्थविभक्तियुक्तात् । द्वितीये तृतीयासमर्थविभक्तियुक्तात् । तृतीयचतुर्थयोः षष्ठीसमर्थविभक्तियुक्तात् । नद्यास्तु परत्वान्मतुबेव भवतीति । 'नद्यां मतुप्' इत्यनेन ॥

दञ्प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। ऐषुकावतम्[1]। सैध्रकावतम् ॥

बह्वजङ्गादिति किम्? आहिमतम्। यावमतम्।

अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा विज्ञायते, मत्वन्तविशेषणं मा विज्ञायीति। मालावतां निवासो मालावतम् ॥

## बह्वचः कूपेषु ॥ ७३ ॥

बह्वचः प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेषु। अणोऽपवादः। यथासम्भवमर्थाः सम्बध्यन्ते। दीर्घवरत्रेण निर्वृत्तः कूपः, दैर्घवरत्रः। कापिलवरत्रः ॥

## उदक्च विपाशः ॥ ७४ ॥

विपाश उत्तरे कूले ये कूपास्तेष्वभिधेयेष्वञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। अबह्वजर्थं आरम्भः। दत्तेन निवृत्तः कूपो दात्तः। गौप्तः।

उदगिति किम्? दक्षिणतो विपाशः।

कूपेष्वणेव—दात्तः। गौप्तः। स्वरे विशेषः। महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य! ॥

### पदमञ्जरी

*अङ्गग्रहणं किमिति*। 'मतोश्च बह्वचः' इत्येवास्तु, व्यधिकरणे पञ्चम्यौ, बह्वचो यो विहितो मतुप् तदन्तादिति विज्ञायमाने सिद्ध्यत्येव विवक्षितमिति प्रश्नः। *मतुबन्तविशेषणं मा भूदिति*। अन्यथा सामानाधिकरण्ये सम्भवति, वैयधिकरण्यस्यायुक्तत्वात् तस्यैव विशेषणं स्यादिति विभावः। अस्ति चेदिदानीं कश्चिदबह्वच् मत्वन्तो यदर्थं बह्वज्ग्रहणं स्यात्? अस्तीत्याह—स्ववान्, श्ववान् ॥

उदक्च *विपाशः* ॥ *महती सूक्ष्मेक्षिकेति*। एवं नाम स्वरेऽप्याचार्योऽवहित इति आचार्यस्य प्रशंसैषा ॥

### न्यासः

मतोश्च बह्वजङ्गात् ॥ मालावतमिति। यदि बह्वजिति, न भवत्येष दोषः ॥

---

१. 'ऐकटावतम्' इति पाठा०।

## सङ्कलादिभ्यश्च ॥ ७५ ॥

'कूपेषु' इति निवृत्तम् । 'सङ्कल' इत्येवमादिभ्योऽञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । संगतः कलः सङ्कलः, सङ्कलेन निवृत्तः साङ्कलः । पौष्कलः ।

सङ्कल । पुष्कल । उद्वप । उडुप । उत्पुट । कुम्भ । विधान । सुदक्ष । सुदत्त । सुभूत । सुनेत्र । सुपिङ्गल । सिकता । पूतीकी । पूलास । कूलास । पलाश । निवेश । गवेष । गम्भीर । इतर । शर्मन् । अहन् । लोमन् । वेमन् । वरुण । बहुल । सद्योज । अभिषिक्त । गोभृत् । राजभृत् । गृह । भृत । भल्ल । माल । वृत् ॥

## स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥

'देशे तन्नाम्नि' इत्यस्य विशेषणम् – सौवीरादयः, स्त्रीत्वं च । ङ्याप्प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि । सौवीरे तावत्—दत्तामित्रेण निर्वृत्ता नगरी दात्तामित्री । साल्वे—विधूमाग्निना निर्वृत्ता वैधूमाग्नी । प्राचि खल्वपि—ककन्देन निर्वृत्ता काकन्दी । माकन्दी । माणिचरी । जारुषी ॥

## सुवास्त्वादिभ्योऽण् ॥ ७७ ॥

'सुवास्तु' इत्येवमादिभ्योऽण् प्रत्ययो भवति चातुरर्थिकः[1] । अत्र उवर्णान्तलक्षणस्य कूपलक्षणस्य चापवादः । सुवास्तोरदूरभवं नगरं सौवास्तवम् । वार्णवम् ।

पदमञ्जरी

*सुवास्त्वादिभ्योऽण् ॥ अत्र इति ।* 'अण्ग्रहणरहितसूत्राभिप्रायमेतत् । तस्य

न्यासः

बह्वचः कूपेषु ॥ उदक् च विपाशः ॥ सङ्कलादिभ्यश्च ॥ स्त्रीषु सौवीरसाल्वप्राक्षु ॥ सुवास्त्वादिभ्योऽण् ॥ उवर्णान्तलक्षणस्येत्यादि । य उवर्णान्तास्तेभ्यः

---

१. 'यथासंभवमर्थसंबन्धः'—इत्यधिकं क्वचित् ।

अण्ग्रहणं नद्यां मतुपो बाधनार्थम्। सौवास्तवी नदी।

सुवास्तु। वर्णु। भण्डु। खण्डु[1]। सेचालिन्। कर्पूरिन्। शिखण्डिन्। गर्त। कर्कश। शटीकर्ण। कृष्ण। कर्क। कर्कन्धूमती। गोह्य[2]। अहिसक्थ। वृत्॥

## रोणी ॥ ७८ ॥

रोणीशब्दादण्प्रत्ययो भवति चातुरर्थिकः। यथासंभवमर्थसंबन्धः। कूपलक्षणस्याञोऽपवादः। रोणीति कोऽयं निर्देशः, यावता प्रत्ययविधौ पञ्चमी युक्ता? सर्वावस्थप्रतिपत्त्यर्थमेवमुच्यते – रोणीशब्दः सर्वावस्थोऽ-

पदमञ्जरी

तु प्रयोजनं स्वयमेव वक्ष्यति—'अण्ग्रहणं मतुपो बाधनार्थम्' इति। तेन वस्तुतो मतुपोऽप्ययमपवादः। अथाण्ग्रहणं किमर्थम्, न सुवास्त्वादिभ्यो यथा विहितमित्येवोच्येत, पुनर्वचनाद्धि को विहितो न च प्राप्नोति स एव भविष्यति स चाणेव? तत्राह-*अण्ग्रहणमिति*। असत्यण्ग्रहणे मध्येऽपवादन्यायेन यथाविहितमित्युच्यमानोऽणञ् एव बाधकः स्याद्, नदीमतुपा तु परत्वाद्बाध्येत, पुनरण्ग्रहणात्तु मतुपो विषये भवतीत्यर्थः। किञ्च—'ओरञ्' इत्यस्य नद्यां मतुप्परत्वाद्बाधक इत्युक्तम्, तत्रासत्यण्ग्रहणे यथाविहितमित्युच्यमाने नद्याम् 'ओरञ्' एव स्याद्, वचनं तु मतुपो बाधनार्थं स्यात्। तस्मादेतदर्थमप्यण्ग्रहणं कर्तव्यम्॥

*रोणी*॥ *केवलस्तदन्तश्चेति*। अन्यथा ग्रहणवता प्रातिपदिकेन तदन्त-

न्यासः

'ओरञ्' इति प्राप्तस्याञोऽपवादः। शेषेभ्यश्च 'बह्वचः कूपेषु' इत्यादिना प्राप्तस्य कूपलक्षणस्य। अथाण्ग्रहणं किमर्थम्, सुवास्त्वादिभ्यो यथाविहितमेवोच्येत। पुनर्वचनं यो विहितो न च प्राप्नोति तदर्थं विज्ञायते। अणेव च विहितो न प्राप्नोति, अपवादेन बाधितत्वात्। अथ स भविष्यतीत्यत आह—अण्ग्रहणमित्यादि। असति ह्यण्ग्रहणे 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति नदीमतुपा सह संप्रधारणायां परत्वान्नदीमतुप् स्यात्। अणो ग्रहणादणेव भवति। तस्मान्मतुपो बाधनार्थमण्ग्रहणम्॥

रोणी॥ कोऽयं निर्देश इति। कुत्सितोऽयं निर्देश इत्यर्थः। कुत्सितत्वं तु लक्षणातिक्रान्तत्वात्। तदेव लक्षणातिक्रान्तत्वं दर्शयितुमाह—यावतेत्यादि। सर्वावस्थाप्रति-

---

१. 'कण्डु'—इति पाठा०।

२. 'गार्हि'—इति पाठा०।

णप्रत्ययमुत्पादयति, केवलस्तदन्तश्च। रौणः। आजकरोणः। सैंहिकरोणः॥

कोपधाच्च ॥ ७९ ॥

ककारोपधाच्च प्रातिपदिकादण्प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। कूपलक्षस्यौवर्णलक्षणस्य चाञोऽपवादः। कार्णच्छिद्रिकः कूपः। कार्णवेष्टकः। कृकवाकुना निर्वृत्तं कार्कवाकवम्। त्रैशङ्कवम् ॥

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्य-कुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराह-कुमुदादिभ्यः ॥ ८० ॥

पदमञ्जरी

विधिप्रतिषेधात्केवलादेव स्यात्, न तदन्तात्। रोणीति पुनः शास्त्रनिरपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिह सूच्यत इति परिभाषाया अनपेक्षणात्तदन्तादपि भवति। ननु च रोणीति नेदं प्रातिपदिकम्, स्त्रीप्रत्ययान्तत्वात्; न च 'ग्रहणवता प्रातिपदिकेन' इत्यत्र लिङ्गविशिष्टस्य ग्रहणम्, येन स्त्रीप्रत्ययान्तेनापि तदन्तविधिः प्रतिषिध्येत, स्वरूपविधिविषया परिभाषेयं प्रातिपदिकस्य स्वरूपग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्युक्तत्वात्? यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं भवतीति *भाष्यकार*पक्षः, तदाश्रयेणैतदुक्तम्। एवं च *वृत्तिकारस्या*प्ययमेव पक्षः। ङ्याप्सूत्रे तु परपक्षो दर्शित इति गम्यते। किं सिद्धं भवति? कुमारीमाचष्टे कुमारयति—'णाविष्ठवद्' इति टिलोपः सिद्धो भवति॥

न्यासः

परेऽस्यर्थमित्यादि। सर्वावस्था च केवलस्य तदन्तस्य च प्रतिपत्तिः प्रकृतित्वेन यथा स्यादित्येवमर्थमुच्यते। यदि 'रोण्याः' इत्यादिनिर्देशः क्रियेत तदा 'ग्रहणवता प्रातिपदिकेन तदन्तविधिन' इति केवलादेव स्यात्, न तदन्ताद्। रोणीति शास्त्रानपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिहोच्यते, तदस्याः परिभाषाया अनपेक्षणादिह तदन्तादपि प्रत्ययः सिद्धो भवति। ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, न चेदं प्रातिपदिकम्; स्त्रीप्रत्ययान्तत्वात्। अथ मतम्—प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति प्रातिपदिकस्य तदन्तविधेः प्रतिषिध्यमानः स्त्रीप्रत्ययान्तस्यापि प्रतिषिध्यत इति, एतच्च यत्र हि प्रातिपदिकस्य स्वरूपग्रहणं तद्विषया परिभाषेति प्राग् ज्ञापितमेतत्? एवं तर्हि तस्य ज्ञापनस्य प्रायिकत्वं दर्शयति। तेन क्वचिदस्वरूपग्रहणेऽप्येषा परिभाषा प्रवर्त्तते। तेन कुमारीमाचष्टे कुमारयतीत्यत्र 'णाविष्ठवत् प्रातिपदिकस्य' इतीष्ठवद्भावः सिद्धो भवति॥

वुञादयः सप्तदश प्रत्ययाः, अरीहणादयोऽपि सप्तदशैव प्रातिपदिकगणाः। आदिशब्दः प्रत्येकमभिसम्बध्यते। तत्र यथासंख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश प्रत्यया भवन्ति चातुरर्थिकाः। अणोऽपवादः। यथासम्भवमर्थसम्बन्धः। अरीहणादिभ्यो वुञ्प्रत्ययो भवति। आरीहणकम्। द्रौघणकम्।

अरीहण। द्रुघण। खदिर। सार। भगल। उलन्द। साम्परायण। क्रौष्ट्रायण। भास्त्रायण। मैत्रायण। त्रैगर्त्तायन। रायस्पोष। विपथ। उद्दण्ड। उदञ्चन। खाडायन। खण्ड। वीरण। काशकृत्स्न। जाम्बवन्त। शिशपा। किरण। रैवत। बैल्व। वैमतायन[1]। सौसायन। शाण्डिल्यायन। शिरीष। बधिर[2]। अरीहणादिः॥

कृशाश्वावादिभ्यश्छण्प्रत्ययो भवति। कार्शाश्वीयः। आरिष्टीयः। कृशाश्व। अरिष्ट। अरीश्व। वेश्मन्। विशाल। रोमक। शबल। कूट। रोमन्। वर्वर। सुकर। सूकर। प्रतर। सदृश। पुरग। सुख। धूम। अजिन। विनता[3]। अवनत। विकुघास। अरुस्। अवयास[4]। मौद्गल्य। कृशाश्वादिः॥

पदमञ्जरी

*वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ण्यकक्ठकोरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः॥* सूत्रे कुमुदशब्दो द्विरुपादीयते, तत्रारीहणकृशाश्वर्श्यकुमुदाश्च काशतृणादयश्चेति द्वन्द्वयोर्द्वन्द्व-

न्यासः

कोपधाच्च॥ वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदा-

---

१. 'मैत्तायण'—इति पाठा०।

२. वैगर्तायण, गोमतायण, सौमतायण, खाण्डायण, विपाश, सुयज्ञ, जम्बु, समर्थ—एतेऽत्र गणे क्वचिदधिकाः शब्दाः।

३. 'वनिता'—इति पाठा०।

४. 'अयावस्'—इति पाठा०।

ऋश्यादिभ्यः कः प्रत्ययो भवति। ऋश्यकः। न्यग्रोधकः। ऋश्य। न्यग्रोध। शिरा। निलीन। निवास। निधान। निवात। निबद्ध। विबद्ध। परिगूढ। उपगूढ। उतराश्मन्। स्थूलबाहु। खदिर। शर्करा। अनडुह्। परिवंश। वेणु। वीरण[1]। ऋश्यादिः॥

कुमुदादिभ्यष्ठच्प्रत्ययो भवति। कुमुदिकम्। शर्करिकम्। कुमुद। शर्करा। न्यग्रोध। इत्कट[2]। गर्त। बीज। अश्वत्थ। बल्वज। परिवाप। शिरीष। यवाष। कूप। विकङ्कत[3]। कुमुदादिः॥

काशादिभ्य इलः प्रत्ययो भवति। काशिलम्। वाशिलम्। काश। वाश। अश्वत्थ। पलाश। पीयूष। विश[4]। तृण। नर। चरण। कर्दम। कर्पूर। कण्टक। गृह। काशादिः[5]।

तृणादिभ्यः शः प्रत्ययो भवति। तृणशः। नडशः। तृण। नड। बुस। पर्ण। वर्ण। चरण। अर्ण। जन। बल। लव। वन। तृणादिः।

प्रेक्षादिभ्य इनिप्रत्ययो भवति। प्रेक्षी। हलकी। प्रेक्षा। हलका[6]। बन्धुका। ध्रुवका। क्षिपका। न्यग्रोध। इकुंट[7]। प्रेक्षादिः।

अश्मादिभ्यो रप्रत्ययो भवति। अश्मरः। अश्मन्। यूष। रूष। मीन। दर्भ। वृन्द। गुड। खण्ड। नग। शिखा[8]। अश्मादिः।

१. खण्ड, परिवृत्त, कर्दम, अंशु—एतेऽत्र गणेऽधिकाः पुस्तकान्तरे।
२. उत्कट—इति पाठा०।
३. कण्टक, कङ्कट, संकट, पलाश, त्रिक, कत, दशग्राम—पुस्तकान्तरे एतेऽधिकाः शब्दा अत्र गणे।
४. विस—इति पाठा०।
५. आवास, नड, वन, वघूल, बर्बर—एतेऽत्र शब्दा गणेऽधिकाः पुस्तकान्तरे।
६. फलका—इति पाठा०।
७. बुधका, संकट, कूपका, कर्कटा, सुकटा, सुक, महा—एते शब्दा अत्राधिकाः पुस्तकान्तरे।
८. यूथ, रुष, नद, नख, काट, पाम—एतेऽत्र शब्दा गणेऽधिकाः पुस्तकान्तरे।

सख्यादिभ्यो ढञ् प्रत्ययो भवति। साखेयम्। साखिदत्तेयम्। सखि। सखिदत्त। वायुदत्त। गोहित[1]। भल्ल। पाल। चक्रपाल। चक्रवाल। छगल। अशोक। करवीर। सीकर। सकर। सरस। समल[2]। सख्यादिः।

संकाशादिभ्यो ण्यप्रत्ययो भवति। सांकाश्यम्। काम्पिल्यम्। संकाश। काम्पिल्य। समीर। कश्मर। शूरसेन। सुपथिन्। सक्थच। यूप। अंश। एग। अश्मन्। कूट। मलिन। तीर्थ। अगस्ति। बिरत। चिकार। विरह। नासिका। संकाशादिः।

बलादिभ्यो यः प्रत्ययो भवति। बल्यः। कुल्यम्। बल। वुल। तुल। उल। डुल। कवल। वन। कुल। बलादिः॥

पक्षादिभ्यः फक् प्रत्ययो भवति। पाक्षायणः। तौषायनः। पक्ष। तुष। अण्ड। कम्बलिक। चित्र। अश्मन्। अतिस्वन्। पथिन्पन्थ च[3]। पक्षादिः।

कर्णादिभ्यः फिञ्प्रत्ययो भवति। कार्णायनिः। वासिष्ठायनिः। कर्ण। वसिष्ठ। अलुश। शल। डुपद। अनडुह्य। पाञ्चजन्य। स्थिरा। कुलिश। कुम्भी। जीवन्ती। जित्व। आण्डीवत्[4]। कर्णादिः।

सुतङ्गमादिभ्य इञ्प्रत्ययो भवति। सौतङ्गमिः। मौनिचित्तिः। सुतङ्गम। मुनिचित्त। विप्रचित्त। महापुत्र। श्वेत। गडिक। शुक्र। विग्र। बीजवापिन्। श्वन्। अर्जुन। अजिर। जीव। सुतङ्गमादिः।

---

१. गोहिल—इति पाठा०।

२. चर्क, वक्रपाल, उशीर, सुरस, रोह, तमाल, कदल, सप्तल—एते शब्दा अत्र गणेऽधिकाः क्वचित्॥

३. कुम्भ, सीरज, सीरक, सरक, सलक, सरस, समल, रोमन्, लोमन्, हंसका, लोमक, सकण्डक, अस्तिबल, यमल, हस्त, सिंहक—क्वचिदेते शब्दा अत्र गणेऽधिकाः।

४. अर्क, लूष, स्फिक्, ज्ञावत्—एते शब्दा अत्र गणेऽधिकाः क्वचित्।

प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति । प्रागद्यम् । प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । चूडार । मार्जार । कोविदार । प्रगद्यादिः ।

बराहादिभ्यः कक् प्रत्ययो भवति । बाराहकम् । पालाशकम् । वराह । पलाश । शिरीष । पिनद्ध । स्थूण । विदग्ध । विजग्ध । विभग्न । बाहु । खदिर । शर्करा[1] । वराहादिः ॥

कमुदादिभ्यष्ठक् प्रत्ययो भवति । कौमुदिकम् । कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण[2] । कुमुदादिः ।

शिरीषशब्दोऽरीहणादिषु कुमुदादिषु वराहादिषु च पठ्यते, औत्सर्गिकोऽपि तत इष्यते, तस्य च वरणादिषु दर्शनाल्लुब्भवति । तथा चोक्तम् – शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवन-मिति ॥

पदमञ्जरी

करणादेकशेषाभावः । *कुमुदादिष्विति* । ऋश्यादेरनन्तेरेषु औत्सर्गिकोऽपि तत इष्यत इत्यादि यदुक्तं तदेवाप्तप्रयोगेण द्रढयति—*तथा चोक्तमिति* । 'लुपि युक्तवद्' इत्यत्र *भाष्यकारेणै*तदुक्तम् । अथास्मात्प्रयोगाद्विशेषविहितानामेव पक्षे लुब् भवतीति कस्मान्नोच्यते ? तथा वा भवतु; सर्वथा चातूरूप्यमेवात्र नः समीहितम् ॥

न्यासः

दिभ्यः ॥ औत्सर्गिकोऽपि तत्रेष्यत इति । यद्येवम्, तस्य श्रवणं प्राप्नोतीत्यत आह—तस्य चेत्यादि । तथा चोक्तमित्यादि । तदेव द्रढयति—औत्सर्गिक इत्येव । शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनमिति भाष्यकारवचनाल्लभ्यते । विशेषविहितानां हि लुपा न भवितव्यम् । अत औत्सर्गिकस्य लुब् भवतीति विज्ञायते ॥

---

१. विनद्ध, निबद्ध, विरुद्ध, मूल—एतेऽत्र गणेऽधिकाः पुस्तकान्तरे ।

२. कुन्द, मधुकर्ण, शुचिकर्ण, शिरीष—एतेऽप्यत्राधिका शब्दाः ।

## जनपदे लुप् ॥ ८१ ॥

'देशे तन्नाम्नि' इति यश्चातुरर्थिकः प्रत्ययो भवति, तस्य देशविशेषे जनपदेऽभिधेये लुब्भवति। ग्रामसमुदायः = जनपदः। पञ्चालानां निवासो जनपदः पञ्चालाः कुरवः। मत्स्याः। अङ्गाः। वङ्गाः। मगधाः। सुह्माः। पुण्ड्राः।

इह कस्मान्न भवति—उदुम्बरा अस्मिन्सन्ति, औदुम्बरो जनपदः, वैदिशो[1] जनपद इति ? तन्नाम्नीति वर्त्तते। न चात्र लुबन्तं तन्नामधेयं भवति ॥

## वरणादिभ्यश्च ॥ ८२ ॥

'वरण' इत्येवमादिभ्य उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुब् भवति। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः। शृङ्गी। शाल्मलयः। चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति। [2]कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी। शिरीषाः काञ्ची।

वरणाः। पूर्वौ गोदौ[3]। आलिङ्ग्यायन। पर्णी। शृङ्गी। शाल्मलयः न सदाण्वी। वणिकि। वणिक। जालपद। मथुरा। उज्जयिनी। गया। तक्षशिला। उरशा। आकृत्या ॥

## शर्कराया वा ॥ ८३ ॥

शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब्भवति।

वाग्रहणं किम्, यावता शर्कराशब्दः कुमुदादिषु वराहादिषु च पठ्यते, तत्र पाठसामर्थ्यात्प्रत्ययस्य पक्षे श्रवणं भविष्यति ? एवं तर्हि

पदमञ्जरी

*शर्कराया वा ॥ कुमुदादिष्विति। ऋश्याद्यनन्तरेषु। पाठसामर्थ्यादिति।*

न्यासः

जनपदे लुप् ॥ वरणादिभ्यश्च ॥ शर्कराया वा ॥ पाठसामर्थ्यादित्यादि।

---

१. 'वैतसः'—इति पाठा०।

२. 'कन्दुक'—इति पाठा०।

३. 'पूर्वेण गोदौ, अपरेण गोदौ'—इति पाठा०।

एतज्ज्ञापयति – शर्कराशब्दादौत्सर्गिको भवति, तस्यायं विकल्पितो लुबिति। शर्करा। शार्करम्। गणपाठाच्च श्रवणम्, उत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ। तदेवं षड् रूपाणि भवन्ति – शर्करा, शार्करम्, शर्करिकम्, शार्करकम्, शार्करिकम्, शर्करीयमिति ॥

ठक्छौ च ॥ ८४ ॥

शर्कराशब्दाट्ठक्, छ – इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ। यथासम्भवमर्थसम्बन्धः। शार्करिकम्। शर्करीयम् ॥

नद्यां मतुप् ॥ ८५ ॥

नद्यामभिधेयायां मतुप्प्रत्ययो भवति चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। उदुम्बरा यस्यां सन्ति उदुम्बरावती। मशका-

पदमञ्जरी

नित्ये हि लुपि गणयोरस्य पाठोऽनर्थकः स्यात। *शर्करेति*। अणो लुप्। *शार्करमिति*। तस्यैव श्रवणम्। *शार्करिकमिति*। कुमुदादित्वाट्ठच्। *शार्करकमिति*। वराहादित्वात्कक्, 'केऽणः' इति ह्रस्वः। *शार्करिकम्, शर्करीयमिति*। उत्तरसूत्रेण ठक्छौ ॥

*नद्यां मतुप्* ॥ 'तदस्यास्त्यस्मिन्' इति मतुपि सिद्धे वचनमिदं तदस्मिन्नस्तीति प्राप्तस्याणो बाधनार्थं निवृत्ताद्यर्थं च, तत्सूचितम्—*चातुरर्थिक इति*। *देशस्य विशेषणं नदीति*। यद्यपि 'विशिष्टलिङ्ग' इत्यत्रोक्तम्–'नदीग्रहणमदेशत्वात् जनपदो हि देशः' इति, इह तु नद्यां देश इति; सम्बन्धसामर्थ्यादजनपदो देशग्रहणेन गृह्यते, एवं च पर्वतेष्वपि चातुरर्थिको भवति। अन्ये त्वाहुः—नद्यपि देश एव, लोकप्रसिद्धेः; 'विशिष्टलिङ्ग' इत्यत्र तु नदीग्रहणं यस्य द्वन्द्वस्य सर्व एवावयवो नदीवचनस्तत्परिग्रहार्थम्, यत्र कश्चिदवयवो नदीवचनः, कश्चिदन्यदेशवाची–तत्र

न्यासः

यदि नित्यो लुप् स्याद्, गणयोरस्य पाठोऽनर्थकः स्यात्। तस्मात् पाठसामर्थ्यादेव पक्षे श्रवणं भविष्यतीत्यत आह। एवं तर्हीत्यादिना वाग्रहणस्य ज्ञापकं दर्शयति। शर्करेति। औत्सर्गिकस्य लुप्। शार्करमिति। तस्यैव पक्षे श्रवणम्। शर्करिकमिति। कुमुदादित्वात् ठच्। शार्करकमिति। वराहादित्वात् कक्। शार्करिकम्, शर्करीयमिति। उत्तरसूत्रेण ठक्छौ ॥

ठक्छौ च ॥ नद्यां मतुप् ॥ उदुम्बरावतीति। 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घः ॥

वती । वीरणावती । पुष्करावती । इक्षुमती । द्रुमती ।

इह कस्मान्न भवति – भागीरथी, भैमरथी ? मतुबन्तस्यातन्नामधेयत्वात् ।

## मध्वादिभ्यश्च ॥ ८६ ॥

'मधु' इत्येवमादिभ्यः शब्देभ्यो मतुप्प्रत्ययो भवति चातुरर्थिकः । अनद्यर्थं आरम्भः । मधुमान् । विसवान् ।

मधु । विस । स्थाणु । मुष्टि[1] । इक्षु । वेणु । रम्य । ऋक्ष । कर्कन्धु । शमी । किरीर । हिम । किशरा । शर्पणा । मरुत् । मरुव । दार्वाघाट । शर । इष्टका । तक्षशिला । शक्ति । आसन्दी । आसुति । शलाका । आमिधी । खडा । वेटा । मध्वादिः ॥

## कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ८७ ॥

'कुमुद', 'नड', 'वेतस' – इत्येतेभ्यः शब्देभ्यो ड्मतुप् प्रत्ययो भवति चातुरर्थिकः । कुमुद्वान् । नड्वान् । वेतस्वान् ।

* महिषाच्चेति वक्तव्यम् * । महिष्मान्नाम देशः ॥

### पदमञ्जरी

मा भूदित्येवमर्थमिति । *उदुम्बरावतीत्यादौ* 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घत्वम् । *भागीरथीति* । 'तेन निर्वृत्तम्' इत्यण् ॥

*कुमुदनडवेतसेभ्यो ड्मतुप्* ॥ कुमुद्वानित्यादौ झयः 'मादुपधायाश्च' इति वत्वम् । अथ वकारादिरेव कस्मान्न विहितः ? ज्ञापनार्थम्, एतज्ज्ञापयति—अन्येभ्योऽप्ययं भवतीति । तेन महिष्मानिति सिद्धं भवति, महिषाच्चेति न

### न्यासः

मध्वादिभ्यश्च ॥ कुमुदनडवेतसेभ्यो ड्मतुप् ॥ कुमुदशब्दात् ठच्छकोः प्राप्तयोः । नडशब्दादपि 'नडशादाड्ड्वलच्' इति 'नडादीनां कुक्च' इति । अस्मिंश्च विधौ प्राप्ते वेतसशब्दादपि मतुब् विधीयते । महिषाच्चेत्यादि । 'महिषशब्दान्मतुब् विधीयते' इत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वसूत्राच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेन महिषशब्दादपि भविष्यतीति ॥

---

१. 'दृष्टि' 'द्रुष्टि' इति वा पाठा० ।

## नडशादाड् ड्वलच् ॥ ८८ ॥

नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । नड्वलम् । शाद्वलम् ॥

## शिखाया वलच् ॥ ८९ ॥

शिखाशब्दाद्वलच् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । शिखावलं नाम नगरम् । मतुप्प्रकरणेऽपि शिखाया वलचं वक्ष्यति, तददेशार्थं वचनम् ॥

## उत्करादिभ्यश्छः ॥ ९० ॥

उत्कर-इत्येवमादिभ्यश्छः प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । उत्करीयम् । शफरीयम् ।

उत्कर । सम्फल[1] । शफर । पिप्पल । पिप्पलीमूल । अश्मन् । अर्क । पर्ण । सुपर्ण । खलाजिन । इडा । अग्नि । तिक । कितव । आतप । अनेक । पलाश । तृणव । पिचुक । अश्वत्थ । शकाक्षुद्र । भस्त्रा । विशाला । अवरोहित । गर्त्त । शाल । अन्य । जन्या ।

पदमञ्जरी

वक्तव्यं भवति । एतेनैतदपि निरस्तम्—प्रकृतस्यैव मतुपो डित्त्वातिदेशेन सिद्धमिति, न हि डित्त्वातिदेशे पूर्वोक्तं ज्ञापनं समर्थितं भवति ॥

*नडशादाड् ड्वलच्* ॥ शादशब्दो दोपधः, 'पङ्कोऽस्त्री शादकर्दमौ'[2] इति ॥

*शिखाया वलच्* ॥ *शिखाया वलज्वक्ष्यतीति* । 'दन्तशिखात्संज्ञायाम्' इत्यनेन । *तददेशार्थं वचनमिति* । इदं तु निर्वृत्ताद्यर्थम्, देशे तन्नाम्न्यणो बाधनार्थं च ॥

न्यासः

नडशादाड् ड्वलच् ॥ नडशब्दात् पूर्वसूत्रेण ड्मतुप्यपि प्राप्ते शादशब्दादप्यणि ड्वलज्विधीयते ॥

शिखाया वलच् ॥ शिखाया वलचं वक्ष्यतीति । 'दन्तशिखात् संज्ञायाम्' इत्यनेन ।

---

१. 'संकर'—इति पाठा० ।

२. अ० को० १.१.६ ।

अजिन। मञ्ज। चर्मन्। उत्क्रोश। शान्त। खदिर। शूर्पणाय। श्यावनाय। नैव। बक। नितान्त। वृक्ष। इन्द्रवृक्ष। आर्द्रवृक्ष। अर्जुनवृक्ष। उत्करादिः ॥

नडादीनां कुक् च ॥ ९१ ॥

'नड' – इत्येवमादीनां कुगागमो भवति, छश्च प्रत्ययश्चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। नडकीयम्। प्लक्षकीयम्।

नड। प्लक्ष। बिल्व। वेणु। वेत्र। वेतस। तृण। इक्षु। काष्ठ। कपोत। ❀ क्रुञ्चाया ह्रस्वत्वं च ❀। ❀ तक्षन्नलोपश्च ❀।

शेषे ॥ ९२ ॥

'शेषे' इत्यधिकारोऽयम्। यानित ऊर्ध्वं प्रत्ययाननुक्रमिष्यामः, शेषेऽर्थे ते वेदितव्याः।

उपयुक्तादन्यः शेषः। अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्योऽन्योऽर्थः

पदमञ्जरी

*नडादीनां कुक् च* ॥ *तक्षन्नलोपश्चेति*। यदि पुनरयं कुक् परादिः क्रियेत, नान्तस्य 'पदत्वात्सिद्धो नलोपः; किन्तु कुटि प्रत्ययादेरादेशानुपपत्तिः, छस्याप्रत्ययादित्वादीयादेशो न प्राप्नोति ॥

*शेषे* ॥ *उपयुक्तादन्यः शेष इति*। शब्दार्थकथनमेतत्। तस्यैव प्रकरणादागतं विशेषमाह—*अपत्यादिभ्य इति*। एते ह्यत्रोपयुक्ताः। *चतुरर्थपर्यन्तेभ्य इति*। चत्वारोऽर्थाः 'तदस्मिन्नस्ति' इत्यादयः पर्यन्तो येषामिति त्रिपदो बहुव्रीहिः। *चातुरर्थ्यपर्यन्तेभ्य इति* पाठे समाहारद्विगोश्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। ये तु पठन्ति—*चातुरर्थपर्यन्तेभ्य इति*, ते प्रज्ञादेराकृतिगणत्वादणमिच्छन्ति। किमर्थं

न्यासः

उत्करादिभ्यश्छः ॥ नडादीनां कुक् च ॥ क्रुञ्चाया ह्रस्वत्वञ्चेति। क्रुञ्चाशब्दस्य कुग्भवति ह्रस्वत्वञ्च—क्रौञ्चकीयमिति। तक्षन्नलोपश्चेति। तक्षन्नित्येतस्य कुगागमो भवति, नलोपश्च—तक्षकीयमिति ॥

शेषे ॥ उपयुक्तादन्यः शेष इत्येतद् ग्रहणकवाक्यम्। तदेव अपत्यादिभ्य इत्यादिना विवृणोति। अपत्यादयो हि चातुरर्थ्यपर्यन्ता प्रत्ययविधौ विनियुक्ताः, तस्मात् तेभ्यो योऽन्यो जातादिरर्थः स शेषः। ननु च निवृत्ता अपत्यादयः, तेभ्यश्चान्तरेषु जातादिषु येषु]घादयस्ततोऽपत्यादिषु नैव ते प्राप्नुवन्तीति तत्किं तन्निवृत्त्यर्थेन शेषाधिकारेण?

शेषः । तस्येदंविशेषा ह्यपत्यसमूहादयः, तेषु घादयो मा भूवन्निति शेषाधिकारः क्रियते ।

पदमञ्जरी

पुनः शेषवचनम् ? शेषे घादयो यथा स्युः, अपत्यादिषु मा भूवन् । चिरनिवृत्ता अपत्यादयः ? चतुर्ष्वर्थेषु तर्हि मा भूवन् ; अन्यथा 'ओरञ्' इत्यादयः 'नडादीनां कुक् च' इत्येवमन्ता यथा चतुरर्थेषु भवन्ति, तथा घादयोऽपि 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्येवमन्तास्तत्रैव स्युः । न ह्यकस्मात्प्रकरणं विच्छिद्यते । निवर्तिष्यते तर्हि चतुरर्थाः ? अस्वरितत्वाल्लिङ्गाच्च, यदयमुत्करादिषु कांश्चिद् वृद्धान् शब्दान्पठति— आर्द्रका, शालेति; अन्यथा 'वृद्धाच्छः' इत्येव सिद्धः स्यात् । स्वार्थे तर्हि घादयो मा भूवन् ? अनिर्दिष्टार्थत्वाद्धि स्वार्थ एव स्युः, नामी अनिर्दिष्टार्थाः । जातादिष्वर्थेषु घादयोऽनुवर्तिष्यन्ते ? यद्यनुवर्तन्ते या या परा प्रकृतिः तस्यास्तस्याः पूर्वः पूर्वः प्रत्ययः प्राप्नोति । नार्थनिर्देशं प्रति व्यग्रयोरन्योऽन्यमभिसम्बन्धो भवति । लिङ्गाच्च, यदयं क्वचिच्चकारेण प्रकृतं समुच्चिनोति 'रङ्कोरमनुष्येऽण् च' इति, तज्ज्ञापयति—न पूर्वः पूर्वः प्रत्ययः परस्याः परस्याः प्रकृतेर्भवतीति । अथ वा—लौकिकोऽधिकारोऽपेक्षालक्षणः । न च घादीनां प्रकृत्यन्तरापेक्षा, नापि ग्रामादीनां प्रत्ययान्तरापेक्षा, तस्मादप्रयोजनमेतत्स्वार्थे मा भूवन्निति । तदेव तर्हि प्रयोजनम्—अपत्यादिषु तर्हि मा भूवन्निति । ननु चोक्तम्—चिरनिवृत्ता अपत्यादयश्चातुरर्थी च नापेक्ष्यत इति ? न ब्रूमोऽपत्यादीनामत्राभिसम्बन्ध इति, किं तर्हि ? तस्येदमित्यनेनापत्यादिष्वपि प्राप्नुवन्ति । कथम् ? इत्याह— *तस्येदंविशेषा ह्यपत्यसमूहादय इति* । यथा 'तस्येदम्' इत्यनेन पाणिनीयाश्छात्रा इति छात्त्रादिषु विशेषेषु प्रत्ययो भवति, एवमपत्यादिष्वपि विशेषेषु घादयः स्युः; विशेषेषु सामान्यभावात् ।

ननु च विशेषशब्दसंनिधौ सामान्यशब्द उपात्तः, तत्र विशेषे पर्यवस्यति— कौण्डिन्यो ब्राह्मण इति, विशेषान्तरे वा—दधि ब्राह्मणेभ्यस्तक्रं कौण्डिन्यायेति । तत्रापत्यादिविशेषसन्निधावुपात्तं तस्येदमिति सामान्यम्, यद्यपत्यादिष्वेव पर्यवस्येत् सामान्योपादानं व्यर्थं स्यादिति विशेषान्तर एव पर्यवसास्यति ।

किञ्च यद्यपत्यादिष्वपि घादयः स्युः, 'प्राग्दीव्यतोऽण्' इत्यत्रैवाणादिभिः सह

न्यासः

इत्यत आह—तस्येदमित्यादि । जातादिष्वर्थेषु तस्येदमित्येषोऽर्थः पठ्यते । तच्चापत्यादीनां सामान्यम् । सामान्ये च विधीयमानस्तद्विशेषेऽपि विधीयते । तदुपलक्षणत्वात् सामान्यस्य । अतस्तस्येदं विशेषत्वाज्जाताद्यन्तःपातिष्वपत्यादिषु घादयः प्राप्नुवन्ति । तस्मात् तेषु मा भूवन्निति शेषाधिकारः क्रियते ।

किञ्च – सर्वेषु जातादिषु घादयो यथा स्युरनन्तरेणैवार्थदिशेन सम्बन्धित्वेन कृतार्थता मा ज्ञायीति साकल्यार्थं शेषवचनम्। वक्ष्यति– 'राष्ट्रावारपाराद् घखौ'। राष्ट्रियः। अवारपारीणः। 'शेषे' इति लक्षणं चाधिकारश्च। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः[1]। दृषदि पिष्टाः दार्षदा सक्तवः। उलूखले क्षुण्णः औलूखलो यावकः। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति ॥

पदमञ्जरी

विधीयेरन्, लिङ्गाच्चापत्यादिषु घादयो न भविष्यन्ति, किं लिङ्गम्? 'फेश्छ च' इत्यत्र 'फेर्वा' इत्येव ठग्विधानार्थं वक्तव्यम्, ठका मुक्ते 'वृद्धाच्छः' इति तावच्छः सिद्धः, तदेव छविधानं ज्ञापनार्थम्—न ह्यपत्यादिषु घादयो भविष्यन्ति। तथा गोत्रचरणाद्वुञिति समूह इदमर्थान्तर्भूते वुञि सिद्धे 'गोत्रोक्षोष्ट्र' इति पुनर्विधानमपि लिङ्गमस्यार्थस्य; तथा 'राजन्यादिभ्यो वुञ्' इति राजन्यादिषु दैवयातशब्दः पठ्यते, स च देवयातूनामपत्यानि दैवयातवा इति गोत्रप्रत्ययान्तः; तथाऽरीहणादिषु भास्त्रायणशब्दो गोत्रप्रत्ययान्तः पठ्यते, तत्रापि 'गोत्रचरणाद् वुञ्' इत्येव सिद्धः; तदेतैर्लिङ्गैरपत्यादिषु घादयो न भविष्यन्ति। तदेवमेतत्प्रयोजनं नोपपद्यत इति प्रयोजनान्तरमाह—*किञ्चेति*। असति हि शेषग्रहणे प्रथमेनैवार्थेन सम्बन्धमनुभवतां कृतार्थता विज्ञायेत, द्वितीयादिषु त्वर्थेषु 'प्राग्दीव्यतः' इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युः, शेषशब्दस्तूपयुक्तादन्यतमान् जातादीनर्थान्वशीकृत्य शक्नोत्यभिधातुमिति सर्वत्र घादयः सिध्यन्ति। अतः साकल्यार्थमपि विशेषवचनं कर्तव्यम्। *लक्षणं चाधिकारश्चेति*। तत्र 'तस्येदम्' इत्येव चाक्षुषादयः सिध्यन्ति, पार्षदादयस्तु 'संस्कृतं भक्षाः' इति, तस्माल्लक्षणत्वं नातीवोपयुज्यते ॥

न्यासः

किञ्चेत्यादिना प्रयोजनान्तरं दर्शयति। असति हि शेषाधिकारे घादीनां प्रथमार्थेनैव सम्बन्धमनुभवतां तत्रैव कृतार्थता विज्ञायेत। तत्र द्वितीयादिष्वर्थेषु प्राग्दीव्यतीया एवाणादयः स्युः, न तु घादयः। शेषशब्दस्तूपयुक्तादन्यतया जातादीनर्थानेकीकृत्य शक्नोत्यभिधातुम्—सर्वत्र घादयः सिध्यन्तीति। अतः साकल्यार्थं वा शेषवचनम्। लक्षणं चाधिकारश्चेति। इह लक्षणस्य विधायकत्वाल्लक्ष्यतेऽनेनेति लक्षणमिति कृत्वा;

१. 'रासनो रसः, स्पार्शनः स्पर्शः'—इत्येकस्मिन्पुस्तकेऽधिकम्।

## राष्ट्रावारपाराद् घखौ ॥ ९३ ॥

'राष्ट्र' 'अवारपार' – इत्येताभ्यां यथासंख्यं घ-खावित्येतौ प्रत्ययौ भवतः। राष्ट्रियः। अवारपारीणः। विगृहीतादपीष्यते – अवारीणः। पारीणः। विपरीताच्च – पारावारीणः।

प्रकृतिविशेषोपादानमात्रेण तावत्प्रत्यया विधीयन्ते। तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद्वक्ष्यन्ते।

## ग्रामाद्यखञौ ॥ ९४ ॥

### पदमञ्जरी

*राष्ट्रावारपाराद्धखौ* ॥ *विगृहीतादपीष्यते इति*। सूत्रे तु संघातस्यैव ग्रहणम्; अन्यथा वैषम्यात्संख्यातानुदेशो न स्यात्। *विपरीताच्चेति*। इयमपीष्टिरेव ॥

### न्यासः

उत्तरत्राधिकारः स्वरितत्वात्। तत्र यदाऽस्य लक्षणम्, चाक्षुषादयः सिध्यन्ति। यदा त्वधिकारता, तदा सर्वेषु जातादिष्वर्थेषु घादयो भवन्ति। यदि तर्हि शेष इति लक्षणमपीदमनेनैव यथा ग्रहणादिष्वर्थेषु शेषेष्वर्थेषु प्रत्ययो भवति, तथा जातादिष्वपि भविष्यतीति जाताद्यनुक्रमणमनर्थकम्? न; अपवादविधानार्थत्वात्। यानि त्वनपवादार्थानि जातनिर्वृत्तलब्धक्रीतकुशलाः—इत्येवमादीनि तानि शेषग्रहणस्यैव प्रपञ्चो वेदितव्यः।

राष्ट्रावारपाराद् घखौ ॥ राष्ट्रशब्दाद् 'वृद्धाच्छः' इति च्छे प्राप्ते। अवारपार-
शब्दादणि घखौ विधीयेते। अवारस्य पारमवारपारमिति षष्ठीसमासः। राजदन्तादिषु
दर्शनात् पारावारमित्यपि पक्षे भवति। विगृहीताद् विपरीताच्च लभ्यते। वक्तव्यमेवैतत्।
अथ वा— एकशेषो विज्ञास्यते, तत्रैकः समुदायार्थः, अपरोऽवयवार्थो भविष्यति। विपरी-
तस्यापि 'एकार्थानां विरूपाणाम्' इत्येकशेषो न विरुध्यते, यथा— वक्रदण्डश्च कुटिल-
दण्डश्च कुटिलदण्डाविति, यथा च यङ्लुकाविति। ननु च तस्यैवं प्रकृतयो भवन्ति, पञ्च
राष्ट्रादिशब्दाः, प्रत्ययौ तु द्वौ—इति वैषम्यात् संख्यातानुदेशो न सिध्यति? नैष दोषः;
निर्देशापेक्षं हि यथासंख्यत्वम्। निर्देशश्च द्वयोरेव, तदपेक्षया प्रकृते यथासंख्यत्वम्। एवं
पञ्चाद्यभेद उपजायते, न स यथासंख्यं बाधते। यथा वुञादीनाञ्च गणापेक्षया यथासंख्यं
प्रवृत्ते तु यथासंख्येन प्रत्ययोत्पत्तिवेलायां गणेषु यद्यपि प्रातिपदिकरूपाण्यसमसंख्यानि
भवन्ति, तथात्रापि यथासंख्यं न हीयते। कुतः पुनरवगतम्–एकशेषोऽयमिति?
व्याख्यानात्।

प्रकृतिविशेषोपादानमात्रेणेति। मात्रशब्दो जाताद्यर्थविभक्तिनिर्देशस्य च व्यवच्छेदाय ॥

ग्रामशब्दाद्य, खञ्-इत्येतौ प्रत्ययौ भवतः । ग्राम्यः । ग्रामीणः ॥

## कत्र्यादिभ्यो ढकञ् ॥ ९५ ॥

'कत्त्रि' इत्येवमादिभ्य ढकञ् प्रत्ययो भवति । कात्त्रेयकः । औम्भेयकः ।

कत्त्रि । उम्भि । पुष्कर । पुष्कल । मोदन । कुम्भी । कुण्डिन । नगर । वञ्जी । भक्ति । माहिष्मती । चर्मण्वती[1] । ग्राम । उख्या । * कुल्याया[2] यलोपश्च * । कत्र्यादिः ॥

## कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ९६ ॥

कुलकुक्षिग्रीवाशब्देभ्यो यथासंख्यं 'श्वन्', 'असि', 'अलङ्कार' - इत्येतेषु जातादिष्वर्थेषु ढकञ् प्रत्ययो भवति । कौलेयको भवति श्वा चेत्, कौलोऽन्यः । कौक्षेयको भवत्यसिश्चेत्, कौक्षोऽन्यः । ग्रैवेयको भवत्यलङ्कारश्चेत्, ग्रैवोऽन्यः ॥

### पदमञ्जरी

*ग्रामाद्यखञौ* ॥ ग्रामशब्दः कत्र्यादिषु पठ्यते, तेन ढकञपि भवति ॥

*कत्र्यादिभ्यो ढकञ्* ॥ *कात्त्रेयक इति* । कुत्सितास्त्रयः कत्त्रय इति बहुव्रीहिर्वा । अस्मादेव निपातनात्कोः कद्भावः, तेन कद्भावे 'त्रौ उपसंख्यानम्' इति न वक्तव्यं भवति । *कुल्याया यलोपश्चेति* । केचित्तु तृतीयं वर्णं लकारं पठन्ति, अन्ये तु डकारम् ॥

*कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु* । अयं योगः शक्योऽवक्तुम् । कथम् ? कौलेयकः श्वा, यदा कुलशब्दः श्वकुले वर्तते तदा तस्यापत्यमपि श्वैव भवति,

### न्यासः

ग्रामाद् यखञौ ॥ वृद्धलक्षणे छे प्राप्ते वचनम् ॥

कत्र्यादिभ्यो ढकञ् ॥ कत्र्यादिषु यद्वृद्धं पठ्यते ततश्छे प्राप्ते शेषेभ्यस्त्वणीति योगोऽयमारम्यते । कत्त्रिशब्दश्च तत्पुरुषः—कुत्सितास्त्रयः, 'कोः कत्' इति योगविभागात् कद्भावः । अत एव निपातनाद् बहुव्रीहिर्वा—कुत्सितास्त्रयो यस्याः सा कत्त्रिः । कुड्याया यलोपश्चेति । कुड्याशब्दाड् ढञ् भवति यलोपश्च—कौडेयकः ।

ये तु कुल्याया यलोपश्चेति पठन्ति तेषां कौलेयकः ॥

कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ अणोऽपवादो योगः ।

---

१. 'चर्मंती'—इति पाठा० ।

२. 'कुण्ड्यायाः'—इत्यपि केचित्पठन्ति, तेषां मते 'कौण्डेयकः' इति ।

## नद्यादिभ्यो ढक् ॥ ९७ ॥

'नदी'– इत्येवमादिभ्यो ढक् प्रत्ययो भवति । नादेयम् । माहेयम् । पूर्वनगरीशब्दोऽत्र पठ्यते । पौर्वनगरेयम् ।

केचितु पूर्वनगिरीति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति – पौरेयम्, वानेयम्, गैरेयमिति; तदुभयमपि दर्शनं प्रमाणम् ।

नदी । मही । वाराणसी । श्रावस्ती । कौशाम्बी । नवकौशाम्बी । काशफरी । खादिरी । पूर्वनगरी । पावा । मावा । साल्वा । दार्वा । दाल्वा । वासेनकी । वडवाया वृषे ॥

## दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥

दक्षिणा, पश्चात्, पुरस् – इत्येतेभ्यस्त्यक् प्रत्ययो भवति शैषिकः । दाक्षिणात्यः । पाश्चात्त्यः । पौरस्त्यः ।

### पदमञ्जरी

तत्र 'अपूर्वपदादन्यतरस्याम्' इति ढकञा सिद्धम्; कुक्षिग्रीवाशब्दाभ्याम् 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' इति ढञि कृते आस्यलङ्कारयोस्स्वार्थिकः कन् भविष्यति ॥

*नद्यादिभ्यो ढक्* ॥ गणे नदीति स्वरूपग्रहणम्, न संज्ञा; नद्याः मह्यादीनां पृथग्ग्रहणात् । *पौरेयमित्यादिषु* पुरि भवम्, वने भवम्, गिरौ भवमिति विग्रहः । *उभयमपि दर्शनं प्रमाणमिति* । उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ॥

*दक्षिणापश्चात्पुरसस्त्यक्* ॥ दक्षिणाशब्दः 'दक्षिणादाच्' इत्याजन्तोऽव्ययं गृह्यते; पश्चात्पुरोभ्यां साहचर्यात् । तेन न टाबन्तस्य प्रवीणवाचिनो ग्रहणम् ॥

### न्यासः

नद्यादिभ्यो ढक् ॥ यान्यत्रावृद्धानि तेभ्योऽणि प्राप्ते, वृद्धेभ्यस्तु वाराणसीत्येवमादिभ्यश्छे प्राप्तेऽपवादः । केषाञ्चिद् 'रोपधेतोः प्राचाम्' इति वुञि प्राप्ते ढगारभ्यते । पौरेयमिति । पुरि भवम् । वने भवं वानेयम् । गैरेयमिति गिरौ भवम् । तदुभयमपि दर्शनं प्रमाणभूतमिति । उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ।

गणे नदीत्येतत् स्वरूपेण ग्रहणम्, न संज्ञाग्रहणार्थम् । संज्ञाग्रहणे हि मह्यादीनां पाठोऽनर्थकः स्यात् ॥

दक्षिणापश्चात्पुरसस्त्यक् ॥ पश्चात्पुरसोरव्ययत्वात् साहचर्याद् दक्षिणाशब्दोऽपि 'दक्षिणादाच्' इत्याजन्तमव्ययमेव गृह्यते । एवञ्च 'अव्ययात्त्यप्' इत्यत्र परिगणनात् त्यपः प्राप्तिर्नास्तीत्यणोऽपवादोऽयं योगः ॥

## कापिश्याः ष्फक् ॥ ९९ ॥

कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः । षकारो ङीषर्थः । कापिशायनं मधु । कापिशायनी द्राक्षा ॥

❁ बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् ❁ । बाह्लायनी । और्दायनी । पार्दायनी ॥

## रङ्कोरमनुष्येऽण् च ॥ १०० ॥

रङ्कुशब्दादण् प्रत्ययो भवति, चकारात्ष्फक्च शैषिकोऽमनुष्येऽभिधेये । राङ्कवो गौः । राङ्कवायणो गौः ।

अमनुष्य इति किम् ? राङ्कवको मनुष्यः ।

ननु च रङ्कुशब्दः कच्छादिषु पठ्यते, तत्र च 'मनुष्यतत्स्थयोर्वुञ्' इति मनुष्ये परत्वाद्वुञैव भवितव्यम्, कच्छादिपाठादमनुष्ये

पदमञ्जरी

*कापिश्याः ष्फक्* ॥ *बह्ल्युर्दिपर्दीति* । 'अवृद्धादपि' इति वुञि प्राप्ते वचनम् ॥

*रङ्कोरमनुष्येऽण्च* ॥ रङ्कवो नाम जनपदः, ततः 'प्राग्दीव्यतोऽण्' प्राप्तः, तस्य 'अवृद्धादपि' इति वुञ् बाधकः, तस्य ओर्देशे ठञ्, ततः कोपधादण्, ततः 'कच्छादिभ्यश्च' इत्यण् प्राप्तः, ततः ष्फगणौ विधीयेते । कोपधत्वादेवाणि सिद्धे रङ्कुशब्दस्य कच्छादिषु पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थः । *मनुष्ये परत्वादिति* । उत्कृष्टत्वाद् अपवादत्वादित्यर्थः । *कच्छादिपाठादमनुष्येऽणपि सिद्ध इति* । ननु च मनुष्यतत्स्थयोर्वुञ्विधानार्थस्तत्र पाठः स्यात्, ततश्च तद्व्यतिरिक्ते विषये ष्फगेव स्यात्, यत्राण् विधीयते ? नैतदस्ति; कच्छादिपाठस्योभयार्थत्वे

न्यासः

कापिश्याः ष्फक् ॥ वृद्धादिति छे प्राप्ते कापिशीशब्दात् ष्फग्विधीयते ।

वाहीत्यादि । वाहीत्यादिभ्यः ष्फग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्,—उत्तरसूत्रादिह चकारः सिंहावलोकितन्यायेनानुवर्त्तते, तस्यानुक्तसमुच्चयार्थत्वाद् वाह्यादिभ्योऽपि ष्फग्भवतीति ॥

रङ्कोरमनुष्येऽण् च ॥ 'ओर्देशे ठञ्' इति ठञि 'जनपदतदवध्योश्च' इति जनपदलक्षणे वुञि 'कोपधादण्' इत्यणि प्राप्ते वचनम् ।

कच्छादिपाठादणपि सिद्ध इति । 'कच्छादिभ्यश्च' इत्यत्र 'कोपधादण्' इत्यण्

ऽणपि सिद्धः, किमिह मनुष्यप्रतिषेधेनाण्ग्रहणेन च ? तदुच्यते; नैवायं मनुष्यप्रतिषेधः, किं तर्हि ? नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते । तेन राङ्कवः, कम्बल इति ष्फग्न भवति ।

विशेषविहितेन च ष्फकाऽणो बाधा मा भूदित्यण्ग्रहणमपि क्रियते ॥

## द्युप्रागपागुदक्प्रतीचो यत् ॥ १०१ ॥

दिव, प्राच्, अपाच्, उदच्, प्रत्यच् – इत्येतेभ्यो यत्प्रत्ययो

पदमञ्जरी

बाधकाभावात् । *नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते इति* । यस्त्वमनुष्यशब्दो रक्षःपिशाचादिषु रूढः, न तस्यैव ग्रहणम्; अनभिधानादिति मन्यते, अथैवं कस्मान्न विज्ञायते—परत्वादेव वुञि सिद्धे मनुष्यप्रतिषेधो ज्ञापयति–'मनुष्यतत्स्थयोः' इत्यस्याप्येतौ ष्फगणौ बाधकाविति, तेन तत्स्थे ष्फगणावेव भवतो न वुञिति ? तन्न; अनिष्टत्वात् । न हि तत्स्थे ष्फगणाविष्येते, किं तर्हि ? वुञेव । *राङ्कवः कम्बल इति ष्फग्न भवतीति* । यथा तु वार्त्तिकं भाष्यं च तथात्र ष्फगिष्यते, मनुष्यप्रतिषेधश्च प्रत्याख्यातः । यथाऽऽह—'रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात्, तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वादण्ग्रहणानर्थक्यं च कच्छादिभ्योऽण्विधानात्' इति । *विशेषविहितेन च ष्फकेति* । अन्यथा कच्छादिपाठस्य प्राणिनि चरितार्थत्वात्प्राणिनि ष्फगेव स्यात् ॥

*द्युप्रागपागुदक्प्रतीचो यत्* ॥ 'द्यु' इति दिव उत्त्वेन निर्देशः । द्युशब्दस्य तु

न्यासः

ग्रहणानुवृत्तेः । नञिवयुक्तन्यायेनेति । नञ्युक्ते चेवयुक्ते च सत्सदृशसंप्रत्ययो भवति । इह च मनुष्यशब्दो नञ्युक्तः, तस्मान्नेह मनुष्यप्रतिषेधः क्रियते । अपि च मनुष्यसदृशे प्राणिन्येव प्रवृत्तिः, तेन मनुष्यसदृशे प्राणिनि ष्फगणौ भवतः । अप्राणिनि तु कच्छादिपाठादणेव भवति, न ष्फक्– राङ्कवः, कम्बल इति । विशेषविहितेनेत्यादि । यदीहाप्यण्न क्रियेत, तदा 'कच्छादिभ्योऽण्' इत्यणो राङ्कवः कम्बल इत्यत्र सावकाशत्वात् प्राणिनि विशेषविहितेन ष्फका तस्य बाधनं स्यात् । तस्मादेष दोषो मा भूदित्यणपि क्रियते ॥

द्युप्रागपागुदक्प्रतीचो यत् ॥ अणि प्राप्ते यद् विधीयते । प्रागित्यादयः शब्दा अञ्चतेः 'ऋत्विग्' इत्यादिना क्विनि कृते सत्यात्मानं लभन्ते । ते च द्विविधाः—अव्ययसंज्ञकाः, अनव्ययसंज्ञकाश्च । यदा त्वस्तातिप्रत्ययान्ता भवन्ति तदा 'तद्धितश्चासर्व-

भवति शैषिकः। दिव्यम्। प्राच्यम्। अवाच्यम्। उदीच्यम्। प्रतीच्यम्।

अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलौ भवतः। प्राक्तनम्॥

कन्थायाष्ठक्॥ १०२॥

कन्थाशब्दाट्ठक् प्रत्ययो भवति शैषिकः। कान्थिकः॥

वर्णौ वुक्॥ १०३॥

'कन्थायाः' इत्येव। वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः। ठकोऽपवादः। वर्णुर्नाम नदस्तत्समीपो देशो वर्णुः। तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः। तथाहि जातं हिमवत्सु कान्थकम्।

पदमञ्जरी

ग्रहणं न भवति, व्याख्यानात्। *अवाच्यमिति*। अवाची = दक्षिणा दिक्।

*अव्ययात्तु कालवाचिन इति*। यथाव्ययात्कालवाचिनः 'कालाट्ठञ्' इति ठञ्न भवति; न्यायस्य तुल्यत्वात्॥

*वर्णौ वुक्॥ तत्समीपो देशो वर्णुरिति*। 'अदूरभवश्च' इत्यर्थे 'सुवास्त्वादिभ्योऽण्' इत्यण्, तस्य 'जनपदे लुप्' इति लुप्। *तद्विषयार्थवाचिन इति*। स

न्यासः

विभक्तिः' इत्यव्ययसंज्ञाविधानादव्ययसंज्ञकाः, अन्यदा त्वनव्ययसंज्ञकाः। तेषामिह विशेषस्यानुपादानादुभयेषामपि ग्रहणम्। प्राच्यम्, अपाच्यमिति। 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घः। उदीच्यमिति। 'उद ईत्' इतीकारः। प्राक्तनमिति। प्राक्शब्दाद् दिक्शब्देभ्यः 'सप्तमीपञ्चमीप्रथमाभ्यो दिक्' इत्यादिनाऽस्तातिः, तस्य 'अञ्चेर्लुक्' इति लुक्, ततोऽनेन यति प्राप्ते 'सायञ्चिरम्' इत्यादिना ट्युट्युलौ भवतः। यतस्तु—यश्च कालवाची सोऽवकाशः॥

कन्थायाष्ठक्॥ अणपवादोऽयं योगः॥

वर्णौ वुक्॥ वर्णुरिति। नदोऽभिधीयते। स्रोतसि च कन्था न सम्भवतीति सामीपिकमधिकरणं विज्ञायते, अत आह—तत्समीपो देशो वर्णुरिति। वर्णुशब्दाद् 'अदूरभवश्च' इत्यत्रार्थे 'सुवास्त्वादिभ्योऽण्' इत्यण्, तस्य 'जनपदे लुप्' इति लुपि कृते वर्णुरिति भवति। ननु च प्रतिपदविधानात् प्रत्ययस्य लुब्न भवति ? नैतत्; सुवास्त्वादिपाठो हि जनपदादन्यस्मिन् प्रत्ययार्थे कृतार्थः—वार्णवो ग्रामो वार्णवं नगरमिति, न तु जनपदे। तत्र तु परत्वाल्लोपेन भवितव्यम्। तद्विषयार्थेति। विषयग्रहणेन वर्णाविति

## अव्ययात्त्यप् ॥ १०४ ॥

अव्ययात् त्यप् प्रत्ययो भवति शैषिकः ।

अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ।

निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा[1] ॥

अमात्यः । इहत्यः । क्वत्यः । इतस्त्यः । तत्रत्यः । यत्रत्यः ।

परिगणनं किम् ? औपरिष्टः । पौरस्तः । पारस्तः[2] । वृद्धात्तु छो भवति – आरातीयः ।

### पदमञ्जरी

वर्णुर्देशो विषयो यस्यार्थस्य तद्वाचिन इत्यर्थः । विषयग्रहणेन वर्णाविति विषयसप्तमीं दर्शयति ॥

*अव्ययात्त्यप्* ॥ *अमेहेति* । योऽव्ययात्त्यब्विहितः सोऽमादिभ्य एव स्मृत इत्यर्थः ।

अमाशब्दः समीपवाची स्वरादिः, अमा समीपे भवोऽमात्यः । *औपरिष्ट इति* । उपरिष्टाद्भव इत्यणि कृते 'अव्ययानां भमात्रे टिलोपः' इति टिलोपः । परतःशब्दः 'विभाषा परावराभ्याम्' इत्यतसुजन्तः, तत्र भवः । *आरातीय इति* । 'बहिषष्टिलोपश्च' इत्यनित्यत्वज्ञापनादत्र टिलोपाभावः ।

### न्यासः

सप्तम्या विषयसप्तमीत्वं दर्शयति । स वर्णुदेशो विषयो यस्य तद्विषयार्थः । सा पुनः कन्थैव ॥

अव्ययात्त्यप् ॥ अमेहेत्यादि । परिगणनम् । एतच्चोत्तरसूत्रस्थस्यान्यतरस्यांग्रहणस्योभयोर्योगयोः शेषभूतत्वाद्, व्यवस्थितविभाषाविज्ञानाच्च लभ्यते । अमाशब्दः समीपवाची, स्वरादिपाठादव्ययत्वम् । इहेत्यादीनाम् 'तद्धितश्चासर्वविभक्तिः' इति । अमा भवोऽमात्यः ।

औपरिष्ट इति । उपरिष्टाद् भवतीत्यणि कृते 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' इति टिलोपः । परतो भावः पारस्तः । परतःशब्दः 'विभाषा परावराभ्याम्' इत्यतसुजन्तः । आरातीय इति । अत्र टिलोपो न भवति; 'बहिषष्टिलोपश्च' इत्यत्रानित्यत्वस्य ज्ञापितत्वात् ।

---

१. इदं पद्यार्धं क्वचिन्नास्ति ।

२. अत्र 'अव्ययानां भमात्रे टिलोपः' इत्यधिकःपाठ कस्मिन्पुस्तके ।

भवति शैषिकः । दिव्यम् । प्राच्यम् । अवाच्यम् । उदीच्यम् । प्रतीच्यम् ।

अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलौ भवतः । प्राक्तनम् ॥

कन्थायाष्ठक् ॥ १०२ ॥

कन्थाशब्दाट्ठक् प्रत्ययो भवति शैषिकः । कान्थिकः ॥

वर्णौ वुक् ॥ १०३ ॥

'कन्थायाः' इत्येव । वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः । ठकोऽपवादः । वर्णुर्नाम नदस्तत्समीपो देशो वर्णुः । तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः । तथाहि जातं हिमवत्सु कान्थकम् ।

पदमञ्जरी

ग्रहणं न भवति, व्याख्यानात् । *अवाच्यमिति* । अवाची = दक्षिणा दिक् ।

*अव्ययात्तु कालवाचिन इति* । यथाव्ययात्कालवाचिनः 'कालाट्ठञ्' इति ठञ्न भवति; न्यायस्य तुल्यत्वात् ॥

*वर्णौ वुक्* ॥ *तत्समीपो देशो वर्णुरिति* । 'अदूरभवश्च' इत्यर्थे 'सुवास्त्वादिभ्योऽण्' इत्यण्, तस्य 'जनपदे लुप्' इति लुप् । *तद्विषयार्थवाचिन इति* । स

न्यासः

विभक्तिः' इत्यव्ययसंज्ञाविधानादव्ययसंज्ञकाः, अन्यदा त्वनव्ययसंज्ञकाः । तेषामिह विशेषस्यानुपादानादुभयेषामपि ग्रहणम् । प्राच्यम्, अपाच्यमिति । 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घः । उदीच्यमिति । 'उद ईत्' इतीकारः । प्राक्तनमिति । प्राक्शब्दाद् दिक्शब्देभ्यः 'सप्तमीपञ्चमीप्रथमाभ्यो दिक्' इत्यादिनाऽस्तातिः, तस्य 'अञ्चेर्लुक्' इति लुक्, ततोऽनेन यति प्राप्ते 'सायञ्चिरम्' इत्यादिना ट्युट्युलौ भवतः । यतस्तु—यश्च कालवाची सोऽवकाशः ॥

कन्थायाष्ठक् ॥ अणपवादोऽयं योगः ॥

वर्णौ वुक् ॥ वर्णुरिति । नदोऽभिधीयते । स्रोतसि च कन्था न सम्भवतीति सामीपिकमधिकरणं विज्ञायते, अत आह—तत्समीपो देशो वर्णुरिति । वर्णुशब्दाद् 'अदूरभवश्च' इत्यत्रार्थे 'सुवास्त्वादिभ्योऽण्' इत्यण्, तस्य 'जनपदे लुप्' इति लुपि कृते वर्णुरिति भवति । ननु च प्रतिपदविधानात् प्रत्ययस्य लुब्न भवति ? नैषम्; सुवास्त्वादिपाठो हि जनपदादन्यस्मिन् प्रत्ययार्थे कृतार्थः—वार्णवो ग्रामो वार्णवं नगरमिति, न तु जनपदे । तत्र तु परत्वाल्लोपेन भवितव्यम् । तद्विषयार्थेति । विषयग्रहणेन वर्णाविति

## अव्ययात्त्यप् ॥ १०४ ॥

अव्ययात् त्यप् प्रत्ययो भवति शैषिकः।

अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः।
निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा[1] ॥

अमात्यः। इहत्यः। क्वत्यः। इतस्त्यः। तत्रत्यः। यत्रत्यः।

परिगणनं किम्? औपरिष्टः। पौरस्तः। पारस्तः[2]। वृद्धात्तु छो भवति – आरातीयः।

पदमञ्जरी

वर्णुदेशो विषयो यस्यार्थस्य तद्वाचिन इत्यर्थः। विषयग्रहणेन वर्णाविति विषयसप्तमीं दर्शयति॥

*अव्ययात्त्यप्* ॥ *अमेहेति*। योऽव्ययात्त्यब्विहितः सोऽमादिभ्य एव स्मृत इत्यर्थः।

अमाशब्दः समीपवाची स्वरादिः, अमा समीपे भवोऽमात्यः। *औपरिष्ट इति*। उपरिष्टाद्भव इत्यणि कृते 'अव्ययानां भमात्रे टिलोपः' इति टिलोपः। परतःशब्दः 'विभाषा परावराभ्याम्' इत्यतसुजन्तः, तत्र भवः। *आरातीय इति*। 'बहिषष्टिलोपश्च' इत्यनित्यत्वज्ञापनादत्र टिलोपाभावः।

न्यासः

सप्तम्या विषयसप्तमीत्वं दर्शयति। स वर्णुदेशो विषयो यस्य तद्विषयार्थः। सा पुनः कन्थैव ॥

अव्ययात्त्यप् ॥ अमेहेत्यादि। परिगणनम्। एतच्चोत्तरसूत्रस्थस्यान्यतरस्यांग्रहणस्योभयोर्योगयोः शेषभूतत्वाद्, व्यवस्थितविभाषाविज्ञानाच्च लभ्यते। अमाशब्दः समीपवाची, स्वरादिपाठादव्ययत्वम्। इहेत्यादीनाम् 'तद्धितश्चासर्वविभक्तिः' इति। अमा भवोऽमात्यः।

औपरिष्ट इति। उपरिष्टाद् भवतीत्यणि कृते 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' इति टिलोपः। परतो भावः पारस्तः। परतःशब्दः 'विभाषा परावराभ्याम्' इत्यतसुजन्तः। आरातीय इति। अत्र टिलोपो न भवति; 'बहिषष्टिलोपश्च' इत्यत्रानित्यत्वस्य ज्ञापितत्वात्।

---

१. इदं पद्यार्धं क्वचिन्नास्ति।

२. अत्र 'अव्ययानां भमात्रे टिलोपः' इत्यधिकःपाठ कस्मिन्पुस्तके।

❀ त्यब्नेर्ध्रुवे ❀ । नियतं ध्रुवम् – नित्यम् ।

❀ निसो गते ❀ । निर्गतो वर्णाश्रमेभ्यो निष्टयश्चण्डालादिः ।

❀ आविसश्छन्दसि ❀ । आविस्-शब्दाच्छन्दसि त्यप्प्रत्ययो भवति । आविष्ट्यो वर्द्धते ।

❀ अरण्याण्णो वक्तव्यः ❀ । आरण्याः सुमनसः ।

❀ दूरादेत्यः ❀ । दूरेत्यः पथिकः ।

❀ उत्तरादाहञ् । ❀ । औत्तराहम् ॥

ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ १०५ ॥

ऐषमस्, ह्यस्, श्वस् – इत्येतेभ्योऽन्यतरस्यां त्यप्प्रत्ययो भवति शैषिकः । ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम्, ह्यस्तनम् । श्वस्त्यम्, श्वस्तनम् । 'श्वसस्तुट् च' इति ठञपि तृतीयो भवति – शौवस्तिकम् ॥

पदमञ्जरी

*त्यब्नेर्ध्रुव इति* । निशब्दाद् ध्रुवे वाच्ये त्यब्भवति । नियतं सर्वकालं भवो नित्यः ।

*निसो गते इति* । निःशब्दाद् गते वाच्ये त्यब्भवति । *निष्ट्य इति* । 'ह्रस्वात्तादौ तद्धिते' इति षत्वम्, तकारस्य ष्टुत्वम् । एवमाविर्भूतमाविष्ट्यम् ।

*अरण्याण्ण इति* । अणि सति ङीप् स्यादिति णो विधीयते ।

*दूरेत्य इति* । 'तत आगतः' इत्यत्रार्थे एत्यः ।

*उत्तरादाहञिति* । आद्युदात्तार्थं वचनम् । *औत्तराहमिति* । 'उत्तराच्च' इत्याहिप्रत्ययः, उत्तराहिशब्दात्परिगणनेन त्यपोऽभावादणि सति सिद्धम् ॥

*ऐषमोह्यःश्वसोऽन्यतरस्याम्* ॥ *ठञपि तृतीयो भवतीति* । विधिवाक्यापेक्षं

न्यासः

त्यब्नेर्ध्रुव इति । निशब्दाद् ध्रुवे वाच्ये त्यब्भवति । नियते सर्वकाले भवो नित्यः ।

निसो गत इति । निःशब्दाद् गते वाच्ये त्यब्भवति । निष्ट्य इति । 'ह्रस्वात्तादौ तद्धिते' इति मूर्धन्यः । एवमाविष्ट्य इत्यत्रापि भवति ॥

ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ ऐषमःप्रभृतीनि कालवाचीनि प्रातिपदिकान्यव्ययानि । 'सायञ्चिरम्' इत्यादिना परत्वाट्ट्युट्युलोः प्राप्तयोरिदं वचनम् । शौवस्तिकमिति । 'द्वारादीनाञ्च' इत्यैजागमः ॥

## तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥

तीरोत्तरपदाद् रूप्योत्तरपदाच्च प्रातिपदिकाद् यथासंख्यमञ्, ञ—इत्येतौ प्रत्ययौ भवतः शैषिकौ। अणोऽपवादौ। काकतीरम्। पाल्वलतीरम्। रूप्योत्तरपदात्—वार्करूप्यम्। शैवरूप्यम्। तीररूप्यान्तादिति नोक्तम्, बह्वच्प्रत्ययपूर्वाद् मा भूदिति। बाहुरूप्यम्। अणेव भवति[1] ॥

## दिक्पूर्वपदादसंज्ञायां ञः ॥ १०७ ॥

असंज्ञायामिति प्रकृतिविशेषणम्। दिक्पूर्वपदात्प्रातिपदिकादसंज्ञाविषयाद् ञः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पौर्वशालः। दाक्षिणशालः। आपरशालः।

असंज्ञायामिति किम्? पूर्वैषुकामशमः। अपरैषुकामशमः।

पदमञ्जरी

तृतीयत्वम्, प्रत्ययापेक्षया तु ठञ् चतुर्थः, 'श्वसस्तुट् च' इत्यत्र विकल्पाधिकारात् ट्युट्युलावपि भवतः॥

*तीररूप्योत्तरपदादञ्ञौ*॥ अञ्ञपोः स्त्रियां विशेषः—काकतीरी, चाणाररूप्या। *बह्वच्पूर्वान्मा भूदिति*। अन्यथा बहुतीरशब्दादपि स्यात्, उत्तरपदशब्दस्य तु समासविषये नियतत्वान्नास्ति बह्वच्पूर्वात्प्रसङ्गः॥

*दिक्पूर्वपदादसंज्ञायां ञः* ॥ *असंज्ञायामिति*। न चैवमसंज्ञाया इति पञ्चम्या

न्यासः

तीररूप्योत्तरपदादञ्ञौ ॥ अथ तीररूप्योत्तरादित्येवं कस्मान्नोक्तम्, एवं हि लघु सूत्रं भवतीति? अत आह—तीररूप्यान्तादित्यादि। यदीह तीररूप्यान्तादित्युच्येत, बह्वच्पूर्वादपि स्यात्—बहुतीरे जात इति, भवति ह्येतत् तीरान्तम्। उत्तरपदग्रहणे त्वेषोऽतिप्रसङ्गो न भवति, न ह्येतत् तीरोत्तरपदम्, यस्मात् समासे सत्येतद्भवति। पूर्वपदमुत्तरपदमिति न्यायेन नायं समासः॥

दिक्पूर्वपदादसंज्ञायां ञः ॥ पौर्वशाल इति। पूर्वस्यां शालायां भवः पौर्वशालः। 'तद्धितार्थ' इत्यादिना तद्धितार्थे समासः, ततः प्रत्ययः।

---

१. 'स्वरे विशेषः' इत्यधिकं पुस्तकान्तरे।

'दिक्संख्ये संज्ञायाम्' इति समासः। 'प्राचां ग्रामनगराणाम्' इत्युत्तरपदवृद्धिः। पदग्रहणं स्वरूपविधिनिरासार्थम् ॥

मद्रेभ्योऽञ् ॥ १०८ ॥

'दिक्पूर्वपदात्' इत्येव। दिक्पूर्वपदान्मद्रशब्दादञ् प्रत्ययो भवति शैषिकः। पौर्वमद्रः। आपरमद्रः। 'दिशो मद्राणाम्' इति पर्युदासादादिवृद्धिरेव ॥

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ १०९ ॥

दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचोऽन्तोदात्ताद् अञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। शैवपुरम्। माण्डवपुरम्।

पदमञ्जरी

निर्देशः, विषयसप्तम्यापि तदर्थलाभादित्याह—*संज्ञाविषयादिति*। *पौर्वशाल इति*। पूर्वस्यां शालायां भव इति तद्धितार्थे समासः, ततः प्रत्ययः। *पदग्रहणमित्यादि*। 'दिक्पूर्वाद्' इत्युच्यमाने स्वरूपं स्यात्, ततश्च दिग्गज इत्यादेरेव स्यात्। पदग्रहणे तु सति दिग्विशेषवाचिनां ग्रहणं भवति, कथम्? व्यधिकरणपदो बहुव्रीहिः—दिशः पूर्वपदमस्मिन्निति, 'दिशः' इति वाचकापेक्षया षष्ठी, दिशो वाचकं पूर्वपदमस्मिन्नित्यर्थः ॥

*मद्रेभ्योऽञ्* ॥ मद्रशब्दो जनपदवचनः, बहुवचननिर्देशो जनपदवाचिनः परिग्रहार्थः, तेन मद्रपर्यायो न गृह्यते। *पौर्वमद्र इति*। मद्रैकदेशे मद्रशब्दस्य वृत्तेर्दिक्शब्देन सामानाधिकरण्ये सति 'तद्धितार्थ' इति समासः ॥

*उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्* ॥ *शैवपुरमिति*। 'प्रस्थपुरवहान्तात्'

न्यासः

अथ पदग्रहणं किमर्थम्? न 'दिक्पूर्वाद्' इत्येवोच्येत? इत्यत आह—पदग्रहणमित्यादि। असति हि पदग्रहणे स्वरूपग्रहणं स्यात्। तथा च दिग्गजः, दिग्नागः, दिग्भागः, दिग्दाहः—इत्येवमादिः प्रकृतिर्विज्ञायते। पदग्रहणे तु सति दिग्विशेषो गृह्यते, कथम्? पदग्रहणसामर्थ्याद् व्यधिकरणे बहुव्रीहिर्विज्ञायते—दिशः पूर्वपदं यस्य। दिश इति च वाचकापेक्षया षष्ठी विज्ञायते। तेनेह तदभिधायी पूर्वादिदिक्शब्दो गृह्यते ॥

मद्रेभ्योऽञ् ॥ पौर्वमद्र इति। पूर्ववत् तद्धितार्थे समासः, ततोऽणि प्राप्ते, 'अवृद्धादपि बहुवचनविषयाद्' इति च वुञि, 'मद्रवृज्योः कन्' इति कन्यञ् विधीयते ॥

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ शैवपुरम्, माहानगरमिति। शिवपुरमहानगरशब्दो समासस्वरेणान्तोदात्तौ।

उदीच्यग्रामादिति किम्? माथुरम्[1]। बह्वच इति किम्? ध्वजी। ध्वाजम्। अन्तोदात्तादिति किम्? शार्करीधानम्। शार्करीधानशब्दे लित्स्वरेण धानशब्द उदात्तः॥

प्रस्थोत्तरपदलद्यादिकोपधादण् ॥ ११० ॥

प्रस्थोत्तरपदात् पलद्यादिभ्यः ककारोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। उदीच्यग्रामलक्षणस्याञोऽपवादः। माद्रीप्रस्थः। माहकीप्रस्थः। पलद्यादिभ्यः – पालदः। पारिषदः। ककारोपधात् – नैलीनकः। चैयातकः[2]। पलद्यादिषु यो वाहीकग्रामस्ततष्ठञ्ञिठयोरपवादः, यथा – गौष्ठी, नैतकीति[3]।

पदमञ्जरी

इति वुञ् न भवति; 'वृद्धात्' इति तत्र वर्तते॥

*प्रस्थोत्तरपदपलद्यादिकोपधादण्॥ उदीच्यग्रामलक्षणस्याञोऽपवाद इति।* ततोऽन्यत्र व्रीहिप्रस्थ-गिरिप्रस्थ-करिकादावौत्सर्गिक एवाण्, कैलासप्रस्थ-काकशाकादिषु वृद्धेषु 'वृद्धाच्छः' भवति, देशवाचिनि तु मालाप्रस्थादौ 'प्रस्थपुरवहान्ताच्च' इति वुञ्, इक्ष्वाकुप्रभृतिषु जनपदवुञोऽपवादः 'कोपधादण्' इत्यणवक्ष्यते,

न्यासः

माथुरमिति। मथुराशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। मध्यदेशग्रामस्तु, तेनाणेव भवति। ध्वाजमिति। ध्वजीशब्दः पिप्पल्यादित्वान् ङीषन्तः। गौरादिषु हि पिप्पल्यादयः पठ्यन्ते, तेनासौ प्रत्ययस्वरेणान्तोदात्तः। उदीच्यग्रामश्च बह्वजन्तो भवति। धानशब्द उदात्त इति। 'गतिकारकोपपदात्' इति धानशब्दस्य ल्युडन्तस्य प्रकृतिभावात्॥

प्रस्थोत्तरपदपलद्यादिकोपधादण्॥ उदीच्यग्रामलक्षणस्याञोऽपवाद इति। प्रस्थोत्तरपदादीनामुदीच्यग्रामत्वात्। माद्रीप्रस्थः, माहकीप्रस्थ इति। अत्र प्रकृतिः समासस्वरेणान्तोदात्ता। अथोत्तरपदग्रहणं किमर्थम्, न प्रस्थान्तादित्येवोच्येत? नैवं शक्यम्; तदिहापि प्रसज्येत—उत्तमकर्णीप्रस्थः। तत्राप्युत्तरपदग्रहणान्न भवति। न ह्यत्र प्रस्थशब्द उत्तरपदम्, किं तर्हि? कर्णीप्रस्थशब्दः। ततष्ठञ्ञिठयोरपवाद इति।

---

१. 'माधुरम्'—इति पाठा०।

२. 'वैयतकः'—इति पाठा०।

३. 'नैकेतीति', 'नैधिकीति'—इति पाठा०।

गोमतीशब्दः पठ्यते, ततः 'रोपधेतोः प्राचाम्' इति वुञोऽपवादः। वाहीकशब्दः कोपधोऽपि पुनः पठ्यते परं छं बाधितुम्। अण्ग्रहणं बाधकबाधनार्थम्।

पलदी। परिषत्। यकृल्लोमन्। रोमक। कालकूट। पटच्चर। वाहीक। कलकीट। मलकीट। कमलकीट। कमलभिदा। कमलकीर। बाहुकीट। नैतकी। परिखा। शूरसेन। गोमती। उदयान[1]। पलद्यादिः॥

पदमञ्जरी

अरीहणकादौ च 'वृद्धादकेकान्त' इति छो भवति, तस्माद्ञोऽपवाद इति सुष्ठूक्तम्। उत्तरपदग्रहणादिह न भवति—उत्तरो माहकिप्रस्थ उत्तरमाहकिप्रस्थः, तत्र भव इति। 'प्रस्थान्तात्' इति तूच्यमानेऽत्रापि स्यात्।

*अण्ग्रहणं बाधकबाधनार्थमिति*। यद्यण्ग्रहणं न क्रियेत, तदा यदत्र वृद्धं वाहीकग्रामवाचि तस्मात् 'प्राग्दीव्यतोऽण्' इत्यणि प्राप्ते 'वृद्धाच्छः' प्राप्तः, तस्मिन् 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठाभ्यां बाधिते पुनर्विधानाच्छ एव स्यात्। तस्माद्बाधकमपि तं छं बाधित्वा अण्ग्रहणादणेव भवति।

न्यासः

'वाहीकग्रामेभ्यश्च' इति प्राप्तयोः। अथ वाहीकशब्दः किमर्थमिह पठ्यते, यावता कोपधत्वादेवाण् सिद्धः? अत्राह—वाहीकशब्द इत्यादि। यदि वाहीकशब्द इह न पठ्यते, परत्वाद् 'वृद्धाच्छः' इति च्छः स्यात्। कोपधस्य तु निलीक इत्यत्रावृद्धमवकाशः। तस्मात् परमपि च्छं बाधित्वाऽण् यथा स्यादिति कोपधोऽपि वाहीकशब्दः पठ्यते।

अथाण्ग्रहणं किमर्थम्, न यावता यथाविहितमेवोच्येत? न; पुनर्विधानादणेव भवतीति विज्ञायते। अपवादस्य विधाने पुनर्विधानमनर्थकमित्याह—अण्ग्रहणमित्यादि। यदत्र वृद्धं वाहीकग्रामः, तस्मात् 'प्राग्दीव्यतोऽण्' इत्यतोऽणि प्राप्ते 'वृद्धाच्छः' प्राप्नोति, तस्मिन् 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ, तौ परत्वात् बाधित्वा यद्यत्राण्ग्रहणं न क्रियेत तदा पुनर्विधानाच्छ एव स्यात्। अण्ग्रहणादणेव भवति—गोष्ठ्यां भवं गौष्ठमिति। तस्मात् बाधकमपि बाधित्वाऽणेव यथा स्यादित्येवमर्थमण्ग्रहणम्। कोपधग्रहणमिहाजनपदार्थम्। जनपदतदवधिः 'कोपधादण्' इत्यनेन सिद्धः। यकृल्लोमशब्दः

---

1. अत्र—पक्ष, कललकीट, कललकीकटा, गोष्ठी, नैधिकी, नैकेती, सकृल्लोमन्—एतेऽधिकाः शब्दः क्वचित्।

## कण्वादिभ्यो गोत्रे ॥ १११ ॥

गोत्रमिह न प्रत्ययार्थः, न च प्रकृतिविशेषणम् । तर्ह्येवं संबध्यते – कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्य एवाण् प्रत्ययो भवति शैषिकः । छस्यापवादः । काण्वाश्छात्त्राः । गौकक्षाः[1] ॥

पदमञ्जरी

यक्कल्लोमशब्दः पठ्यते, यक्कल्लोम्नि भवः याक्कल्लोमः, 'अन्' इति प्रकृतिभावो न भवति, गणे नलोपनिपातनादित्याहुः ॥

*कण्वादिभ्यो गोत्रे* ॥ *गोत्रमिह न प्रत्ययार्थ इति* । शेषाधिकारस्य बाधप्रसङ्गात् । *न च प्रकृतिविशेषणमिति* । कण्वादीनामगोत्रप्रत्ययान्तानां गोत्रे वृत्त्यसम्भवात् । *कण्वादिभ्यो गोत्रे यः प्रत्ययो विहित इति* । प्रतिपदविहितो यञेव गृह्यते । एवं च कृत्वा गोत्रमपि पारिभाषिकं गृह्यते, न त्वपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्यपत्यमात्रस्य ग्रहणम्—कण्वो देवताऽस्येति । ननु 'कण्वादिभ्यः' इत्युच्यमाने कथमणन्तात्प्रसङ्गः ? कथं वा यञन्तेभ्यः स्याद् येनेष्टं तावत्सिध्यति ? एवं मन्यते—केवलेभ्यः कण्वादिभ्य औत्सर्गिक एवाण् सिध्यति, छापवादत्वाद्योगस्य कण्वाद्यवयवे तद्धितान्ते कण्वादिशब्दो वर्तिष्यत इति ॥

न्यासः

पलद्यादिषु पठ्यते, तस्य नलोपो निपात्यते, अन्यथा 'अन्' इति प्रकृतिभावे सति यक्कल्लोम्नि भवः याक्कल्लोम इति न सिध्येत् ॥

कण्वादिभ्यो गोत्रे ॥ गोत्रग्रहणमिह न प्रत्ययार्थमिति । शेषाधिकारात् । यदि हि प्रत्ययार्थः स्यात् , शेषाधिकारो बाध्येत । न प्रकृतिविशेषणम् । असम्भवात् । न हि कण्वादीनाम् परमप्रकृतिरूपाणामेव गोत्रार्थत्वं सम्भवति । तर्हि गोत्रग्रहणं सम्बध्येतेत्येवमर्थं पृच्छति । एवमित्यादिना प्रत्ययविधिविशेषणं गोत्रग्रहणमिति दर्शयित्वा तेन गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्योऽण् भवतीति दर्शयति । छस्यापवाद इति । गोत्रप्रत्ययान्तानां कण्वादीनां वृद्धत्वात् । काण्वाः, गौकक्षा इति । कण्वगोकक्षशब्दाभ्यां गोत्रापत्ये गर्गादित्वाद् यञ् , तदन्तादण् , 'आपत्यस्य' इत्यादिना यलोपः । काण्व इति । 'सास्य देवता' इत्यण् ।

---

1. 'गोत्र इति किम् ? कण्वो देवताऽस्य काण्वः, तस्येदं काण्वीयम् । कण्वादिर्गर्गाद्यन्तर्गणः'—इत्यधिकं पुस्तकान्तरे ।

## इञश्च ॥ ११२ ॥

'गोत्रे' इत्येव । गोत्रे य इञ्विहितस्तदन्तात्प्रातिपदिकादण्प्रत्ययो भवति शैषिकः । छस्यापवादः । दाक्षाः । प्लाक्षाः । माहकाः ।

गोत्र इत्येव – सौतङ्गमेरिदं सौतङ्गमीयम् ॥

## न द्व्यचः प्राच्यभरतेषु ॥ ११३ ॥

द्व्यचः प्रातिपदिकात्प्राच्यभरतगोत्रादिञन्तादण् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिद्धयते । पैङ्गीयाः । प्रौष्ठीयाः । चैदीयाः[1] । पौष्कीयाः । काशीयाः । पाशीयाः ।

द्व्यच इति किम्? पान्नागाराः । प्राच्यभरतेष्विति किम्? दाक्षाः ।

काशीया इति कथमुदाहृतम्, यावता काश्यादिभ्यष्ठञ्ञिठाभ्यां भवितव्यम्? नैतदस्ति; देशवाचिनः काशिशब्दस्य तत्र ग्रहणम्, चैदि[2]-शब्देन साहचर्यात् । गोत्रात्तु वृद्धाच्छ एव भवति ।

### पदमञ्जरी

इञश्च ॥ *गोत्र इत्येवेति* । पूर्वत्र पारिभाषिकस्य गोत्रस्य ग्रहणमित्युक्तम्, इहापि तदेवानुवर्तते, तेनात्रापि पारिभाषिकस्यैव ग्रहणादिह न भवति—पाणिनेर्यूनच्छात्राः पाणिनीया इति । *सौतङ्गमेरिदमिति* । सुतङ्गमशब्दाद् वुञ्छणादिसूत्रेण चातुरर्थिक इञ् । अत्रापत्यत्वमेव नास्तीति सुतरामगोत्रत्वाद्भवति प्रत्युदाहरणम् ॥

न द्व्यचः *प्राच्यभरतेषु* ॥ ननु च भरताः प्राच्या एव, तत्किमर्थं तेषां

### न्यासः

इञश्च ॥ दाक्ष्यादिभ्यः 'अत इञ्' इतीञन्तेभ्योऽण् । सौतङ्गमीयमिति । सुतङ्गमेन निर्वृत्तमिति 'वुञ्छण्' इत्यादिना सुतङ्गमशब्दाच्चातुरर्थिक इञ् ॥

न द्व्यचः प्राच्यभरतेषु ॥ पैङ्गीयाः, प्रौष्ठीया इति । प्राच्यगोत्रोदाहरणम् । काशीयाः, पाशीया इति । भरतगोत्रोदाहरणम् । कथमित्यादि चोद्यम् । नैतदस्तीति परिहारः । उभयञ्चैतत् तदुदाहरणम् । उभयञ्चैतदनुगतार्थम् । ननु च भरताः प्राच्या एव, ततः प्राच्यग्रहणेनैव तेषां ग्रहणं भविष्यति, तत् किमर्थं तेषां स्वशब्देनोपादानम्?

---

१. 'वैदीयाः'—इति पाठा० ।

२. 'वैदि'—इति पाठा० ।

ज्ञापकादन्यत्र प्राच्यग्रहणेन भरतग्रहणं न भवतीति स्वशब्देन भरतानामुपादानं कृतम् ॥

वृद्धाच्छः ॥ ११४ ॥

'गोत्रे' इति नानुवर्त्तते । सामान्येन विधानम् । वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । गार्गीयः । वात्सीयः । शालीयः । मालीयः ।

अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधींस्तु परत्वाद्बाधते ॥

पदमञ्जरी

स्वशब्देन ग्रहणम् ? तत्राह— ज्ञापकादन्यत्रेति । 'बह्वच इञः प्राच्यभरतेषु' इत्यत्रायमर्थो ज्ञापितः— 'अन्यत्र प्राच्यग्रहणे भरतानां ग्रहणं न भवति' इति ।

अपर आह— ज्ञापकादन्यत्रेत्यन्वयः, अन्यत्रास्यार्थस्य ज्ञापितत्वादित्यर्थः ॥

वृद्धाच्छः ॥ *अव्ययतीरेत्यादि* । अव्ययात्त्यब् भवतीत्यस्यावकाशः— अमात्यः, छस्यावकाशः— शालीयो मालीयः, आराच्छब्दाच्छो भवति— आरातीयः । 'अमेहक्वतसित्रेभ्यः' इति परिगणनमनपेक्ष्यायं विप्रतिषेधः । तीरोत्तरविधेरवकाशः— काश्यतीरः, छस्य स एव; वायसतीराच्छो भवति वायसतीरीयः । रूप्योत्तरविधेरवकाशः— चाररूप्यः, छस्य स एव; माणिरूप्याच्छः प्राप्तः, तं चापि योपधलक्षणो वुञ् बाधते— माणिरूप्यकः । प्राप्तिमात्राश्रयेण तु छस्य रूप्योत्तरपदलक्षणस्य च ञस्य विप्रतिषेध उक्तः । उदीच्यग्रामलक्षणस्य विधेरवकाशः— शिवपुर— शैवपुरः, वाडवकर्षाच्छो भवति— वाडवकर्षीयः । कोपधविधिः— 'प्रस्थोत्तरपदपलद्यादिकोपधादण्' इत्ययं विवक्षितः, स तस्माद्धि परस्थस्तस्यावकाशः— निलीनक— नैलीनकम्, उलूका अस्मिन्सन्ति 'तदस्मिन्नस्ति' इत्यण्, औलूको नाम ग्रामस्तत्र भवः, तस्माच्छो भवति— औलूकीयः । यस्तु

न्यासः

इत्यत आह— ज्ञापकादन्यत्रेत्यादि । कान्यत्र ? 'बह्वच इञः प्राच्यभरतेषु' इत्यत्र ॥

वृद्धाच्छः ॥ अव्ययतीरेत्यादि । तत्राव्ययविधिं बाधते— आराद् भव आरातीयः । तीरोत्तर एव विधिः, तं च— वायसतीरे भवो वायसतीरीयः । रूपोत्तरपदात् तु छं बाधित्वा 'धन्वयोपधाद् वुञ्' इति योपधलक्षणो वुञ् भवति— मणिरूप्ये भवो माणिरूप्यक इति । उदीच्यग्रामविधिं बाधते— वाडवाक्षे भवो वाडवाक्षीयः, साडलपुरे भवः साडलपुरीयः । कोपधलक्षणम्— औदके भव औदकीयः, चौल्लुके भवः चौल्लुकीयः । तेषां तु विधीनामवृद्धोऽवकाशः ॥

## भवतष्ठक्छसौ ॥ ११५ ॥

'वृद्धात्' इत्येव । भवच्छब्दाद् वृद्धात् ठक्, छस् – इत्येतौ प्रत्ययौ भवतः शैषिकौ छस्यापवादौ । सकारः पदसंज्ञार्थः । भवतस्त्यदादित्वाद् वृद्धसंज्ञा । भावत्कः । भवदीयम् ।

अवृद्धात्तु भवतः शतुरणेव भवति – भावतः ॥

## काश्यादिभ्यष्ठञ्ञिठौ ॥ ११६ ॥

'काशि' – इत्येवमादिभ्यः ठञ्, ञिठ – इत्येतौ प्रत्ययौ भवतः शैषिकौ। इकार उच्चारणार्थः । ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः । स्त्रीप्रत्यये विशेषः । काशिकी, काशिका । बैदिकी, बैदिका ।

'वृद्धात्' इत्यत्रानुवर्त्तते । ये त्ववृद्धाः पठ्यन्ते, वचनप्रामाण्यात्तेभ्यः प्रत्ययविधिः ।

### पदमञ्जरी

'कोपधादण्' इत्यण्, स जनपदवुञोऽपवादः, तस्यापि 'वृद्धादकेकान्त' इत्यत्र 'कोपधग्रहणं सौसुकाद्यर्थम्' इति विहितश्छो बाधको भवति ॥

*भवतष्ठक्छसौ* ॥ *ठक्छस् इत्येताविति* । सित्करणादवसीयते—छसोऽयं निर्देशः, न शस इति, शसि हि स्वादिपदत्वेनैव सिद्धम् । *सकारः पदसंज्ञार्थ इति* । तेन भवदीय इत्यत्र जश्त्वं भवति । *भावत्क इति* । 'इसुसुक्तान्तात्कः' । प्रक्रियालाघवार्थं ककि विधातव्ये ठग्विधानं स्त्रियां ङीबर्थम्—भावत्की ।

*अवृद्धात्तु भवत इति* । शत्रन्तात् । कचित्तु *भवतः शतुरित्येव* पाठः ॥

*काश्यादिभ्यष्ठञ्ञिठौ* ॥ *वृद्धादित्येवेति* । कथं तर्ह्यवृद्धेभ्यो युवराजादिभ्यः प्रत्यय इत्यत आह—*ये त्विति* ।

### न्यासः

भवतष्ठक्छसौ ॥ सकारःपदसंज्ञार्थ इति । 'सिति च' इति पदसंज्ञा यथा स्यात् । तस्याञ्च सत्यां भवदीयमित्यत्र 'झलां जशोऽन्ते' इति जश्त्वं भवति । भावत्क इति । 'इसुसुक्तान्तात् कः' । अवृद्धात्तु भवत इति । शत्रन्तादिति ॥

काश्यादिभ्यष्ठञ्ञिठौ ॥ काशि-चेदिशब्दाभ्यां जनपदलक्षणे वुञि प्राप्ते साबातेः 'इञश्च' इत्यणि सांवाहादिभ्यो वृद्धाच्छे हस्तिकर्षूशब्दाद् 'ओर्देशे ठञ्' इति ठञि परिशिष्टेभ्यः 'प्राग्दीव्यतोऽण्' इत्यणोदमारभ्यते । कथं पुनर्ञकार एव विपर्यस्तदेशेऽनुबन्धे क्रियमाणे विशेष इत्यत आह—स्त्रीप्रत्यये विशेष इति । अन्ते हि ञकारेऽनुबन्धे सति 'टिड्ढाणञ्' इति ङीब्भवति । आदौ हि सति टाबेव भवति ।

देवदत्तशब्दः पठ्यते, तस्य 'एङ् प्राचां देशे' इति वृद्धसंज्ञा – दैवदत्तिकः। वाहीकग्रामस्य तु नास्ति वृद्धसंज्ञा – दैवदत्तः। कथं भाष्य उदाहृतम् – 'वा नामधेयस्य वृद्धसंज्ञा वेदितव्या; देवदत्तीया, दैवदत्ताः' इति, यावता वृद्धसंज्ञापक्षे काश्यादित्वाट्ठञ्ञिठाभ्यां भवितव्यम् ? तत्रैवं वर्णयन्ति – 'वा नामधेयस्येति व्यवस्थितविभाषेयम्, सा छे कर्त्तव्ये भवति, ठञ्ञिठयोर्न भवति' इति।

काशि। चेदि[1]। संज्ञा। संवाह। अच्युत। मोहमान। शकुलाद। हस्तिकर्षू। कुदामन्[2]। हिरण्य। करण। गोधाशन। भौरिकि। भौलिङ्गि। अरिन्दम। सर्वमित्र। देवदत्त। साधुमित्र। दासमित्र। दासग्राम। सौधावतान। युवराज। उपराज। सिन्धुमित्र। देवराज। * आपदादिपूर्वपदात्कालात् *। आपत्कालिकी, आप-

पदमञ्जरी

यद्यवृद्धेभ्यो वचनप्रामाण्यात्प्रत्ययौ भवतः, किमर्थं तर्हि वृद्धाधिकारः ? इत्यत आह– *देवदत्तशब्द इत्यादि*। *कथं भाष्ये उदाहृतमिति*। यद्यपि तत्र स्वयमपि छप्रत्ययमुदाहरत्येव, तत्तु *भाष्यकार*प्रामाण्येन, न स्वातन्त्र्येणेति 'भाष्ये' इत्युक्तम्।

*आपदादिपूर्वपदादिति*। आपदादिराकृतिगणः। *कालादिति*। कालशब्दान्तादित्यर्थः॥

न्यासः

वृद्धादित्यनुवर्तत इति। यद्येवम्, अत्र ये वृद्धाः पठ्यन्ते तेभ्यः प्रत्ययो न प्राप्नोति ? इत्याह– ये त्ववृद्धा इत्यादि।

यदि तर्ह्यवृद्धेभ्योऽपि वचनप्रामाण्यात्प्रत्ययो भवति, वृद्धादित्यस्यानुवृत्तिरपार्थिकेत्यत आह– देवदत्तशब्द इत्यादि। देवदत्तशब्दस्य प्राग्देश एव हि वर्तमानेऽस्य वृद्धसंज्ञा, न वाहीकग्रामे। तत्र यदि वृद्धादिति नानुवर्तते, वाहीकग्रामवाचिनोऽपि ततष्ठञ्ञिठौ स्याताम्। तस्मात् तन्निवृत्त्यर्थं वृद्धाधिकारोऽर्थवान् भवतीति भावः। कथमित्यादिना वृद्धसंज्ञायां देवदत्तीया इति भाष्यकारस्योपन्यासे तदुदाहरणं विघटय्य तत्रैवं वर्णयन्तीत्यादिना समर्थयते।

आपदादिपूर्वपदात् कालादिति। आपच्छब्द आदिर्येषां तान्यापदादीनि। तानि

---

१. 'चैदि'–इति पाठा०।

२. 'कुनामन्'–इति पाठा०।

त्कालिका। और्ध्वंकालिकी, और्ध्वंकालिका। तात्कालिकी, तात्कालिका॥

वाहीकग्रामेभ्यश्च ॥ ११७ ॥

'वृद्धात्' इत्येव। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौप्रत्ययौ भवतः शैषिकौ छस्यापवादौ। शाकलिकी, शाकलिका। मान्थविकी, मान्थविका॥

विभाषोशीनरेषु ॥ ११८ ॥

'वृद्धात्' इति वर्तते, 'वाहीकग्रामेभ्यः' इति च। उशीनरेषु ये वाहीकग्रामास्तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यो विभाषा ठञ्ञिठौ प्रत्ययौ भवतः। आह्वजालिकी, आह्वजालिका, आह्वजालीया। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया॥

ओर्देशे ठञ् ॥ ११९ ॥

'वृद्धात्' इति नानुवर्त्तते। उत्तरसूत्रे पुनर्वृद्धग्रहणात्। उवर्णा-

पदमञ्जरी

*वाहीकग्रामेभ्यश्च* ॥ *छस्यापवादौ इति*। एवं च ये छेनैव बाधिता अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविषयास्तद्विषयेऽप्येतावेव भवतः, न चेदन्येन बाधः, तद्यथा—आरान्नाम वाहीकग्रामः आरात्की, आरात्का, 'इसुसुक्तान्तात्कः'। तथा कास्तीरं नाम वाहीकग्रामः कास्तीरिकी, कास्तीरिका। इह तु दाशरूप्यं नाम वाहीकग्रामः, 'धन्वयोपधात्' इति वुञ् ठञ्ञिठौ बाधते—दाशरूप्यकः। तथा शकलान्यस्मिन्सन्ति शाकलं नामोदीच्यग्रामः भूयो वाहीकग्रामः, ततष्ठञ्ञिठौ भवतः—शाकलिकी, शाकलिका। इह तु सौसुकं नाम वाहीकग्रामः प्रस्थोत्तरपदादिसूत्रेण प्राप्तं कोपधलक्षणमणं छो बाधते, परत्वात्तमप्यपवादत्वाद् 'वृद्धादकेकान्त' इत्यत्र 'कोपधग्रहणं सौसुकाद्यर्थम्' इति कोपधलक्षणश्छो बाधते, सौसुकीयः॥

*ओर्देशे ठञ्* ॥ *नैषादकर्षुकः, शाबरजम्बुक इति*। निषादकर्षू-शबरजम्बू-शब्दाभ्यां ठञ्, 'इसुसुक्तान्तात्कः', 'केऽणः' इति ह्रस्वः॥

न्यासः

पूर्वपदं यस्य तदापदादिपूर्वपदम्, ततः कालाट्ठञ्ञिठौ भवतः। आदिशब्देनोर्ध्वादयः शब्दा गृह्यन्ते॥

वाहीकग्रामेभ्यश्च॥ विभाषोशीनरेषु॥ ओर्देशे ठञ्॥ नैषादकर्षुकः।

न्ताद् देशवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः । नैषाद-कर्षुकः । शाबरजम्बुकः[1] ।

देश इति किम् ? पटोश्छात्राः पाटवाः ।

ठञ्ञिठयोः प्रकरणे ठञः केवलस्यानुवृत्तिर्न लभ्यत इति ठञ्ग्रहणं कृतम् ॥

## वृद्धात्प्राचाम् ॥ १२० ॥

'ओर्देशे' इत्येव । उवर्णान्ताद् वृद्धात्प्राग्देशवाचिनः प्रातिपदिकाट्ठञ् प्रत्ययो भवति शैषिकः । आढकजम्बुकः । शाकजम्बुकः[2] । नापितवास्तुकः । पूर्वेणैव ठञि सिद्धे नियमार्थं वचनम् – वृद्धादेव प्राचामवृद्धान्न भवतीति । मल्लवास्तु – माल्लवास्तवः ॥

## धन्वयोपधाद् वुञ् ॥ १२१ ॥

'वृद्धात्' इति वर्तते, देश इति च । धन्ववाचिनो यकारोपधाच्च

### पदमञ्जरी

वृद्धात्प्राचाम् ॥ वृद्धादेव प्राचामिति । विपरीतस्तु नियमो न भवति—प्राचामेव वृद्धादिति, अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याभावाद् यत्र पूर्वसूत्रस्यातिप्रसङ्गः स्यात् । आढकजम्बुक इति । पूर्ववत्कादेशह्रस्वत्वे ॥

धन्वयोपधाद् वुञ् ॥ धन्ववाचिन इति । धन्वविशेषवाचिन ऐरावतादेरित्यर्थः । स्वरूपस्य पर्यायाणां च ग्रहणं न भवति, वृद्धाधिकारात् । पारेधन्वक इति । 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः, 'अचश्च' इति टच् समासान्तः,

### न्यासः

शाबरजम्बुक इति । निषादकर्षू-शबरजम्बूशब्दाभ्यां ठञ्, 'इसुसुक्तान्तात् कः', 'केऽणः' इति ह्रस्वः । ननु च ठञ् प्रकृत एव, स एवेहानुकृष्यते, तत् किं ठञ्ग्रहणेन ? इत्यत आह—ठञ्ञिठयोरिति । यथैव हि ठञ् प्रकृतः, एवं ञिठोऽपि । तत्र द्वयोरपि प्रकरणे ठञ् चानुवर्तिष्यते, नेतर इत्येतन्न लभ्यते । तस्माद् ञिठस्य निवृत्तये पुनष्ठञ्ग्रहणं कृतम् । ननु चास्वरितत्वादेव ञिठो नानुवर्तिष्यते ? सत्यमेतत्; तदेवास्वरितत्वं ज्ञापयितुं ञिठस्य ठञ्ग्रहणं कृतम् । तच्चास्वरितत्वमाख्यायते मन्दबुद्धीनामनुग्रहाय ॥

वृद्धात् प्राचाम् । आढकजम्बुक इति । पूर्ववत् कादेशो ह्रस्वत्वञ्च ॥

धन्वयोपधाद् वुञ् ॥ धन्वनोऽर्थस्य ग्रहणम्, न स्वरूपस्य; वृद्धाधिकारात् ।

---

१. अत्र—'केऽण इति ह्रस्वः'—इत्यधिकः पाठोऽपि क्वचित् ।

२. 'शालजम्बुकः'—इति पाठा० ।

देशाभिधायिनो वृद्धात्प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। धन्वशब्दो मरुदेशवचनः। पारेधन्वकः। ऐरावतकः। योपधात्— साङ्काश्यकः। काम्पिल्यकः॥

प्रस्थपुरवहान्ताच्च ॥ १२२ ॥

'वृद्धात्' इत्येव', 'देशे' इति च; अन्तशब्दः प्रत्येकमभिसम्बध्यते। प्रस्थ, पुर, वह — इत्येवमन्तादेशवाचिनः प्रातिपदिकाद् वृद्धाद् वुञ्प्रत्ययो भवति शैषिकः। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः। कान्तीपुरकः। पैलुवहकः। फाल्गुनीवहकः।

पुरान्तो रोपधः, तत उत्तरसूत्रेणैव सिद्धमप्रागर्थमिह ग्रहणम्॥

रोपधेतोः प्राचाम् ॥ १२३ ॥

पदमञ्जरी

वुञि यस्येति लोपः। यदि तु धन्वशब्दो नपुंसकलिङ्गः, ततः 'नपुंसकादन्यतरस्याम्' इति टजभावपक्षे वुञि 'नस्तद्धिते' इति टिलोपः। साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ॥

*प्रस्थपुरवहान्ताच्च ॥ वृद्धादिति वर्तते इति*। यद्येवमन्तग्रहणमनर्थकं प्रस्थादीनामवृद्धत्वादेव तदन्तविधिर्भविष्यति ? नैतदस्ति; 'वा नामधेयस्य' इति प्रस्थादीनामेव पदानां वृद्धत्वसम्भवात्। अथाप्येवंनाम्नो देशस्याभावः, तथापि यथा पूर्वसूत्रे धन्वविशेषग्रहणं तथेहापि सम्भाव्येत— नादीपुरं नाम वाहीकेषु ग्रामः, तत्र वाहीकग्रामलक्षणौ ठञ्ञिठौ छस्यापवादौ, अयमपि वुञ् छस्यापवादः। इह त्वपवादविप्रतिषेधाद् वुञ् भवति। एवं च पातनप्रस्थकः, कौञ्जीवहक इत्यत्रापि वुञेव भवति॥

न्यासः

न हि धन्वशब्दो वृद्धः। पारेधन्वनि जातः पारेधन्वकः, 'नस्तद्धिते' इति टिलोपः। ऐरावते जात ऐरावतकः॥

प्रस्थपुरवहान्ताच्च ॥ वृद्धादित्येवेति। यदि तर्हि वृद्धादित्यनुवर्तते वृद्धाधिकारादेव स्वरूपग्रहणाभावात् कथं तदन्तविधिर्भविष्यति, न हि प्रस्थादेः केवलस्य वृद्धत्वं सम्भवति, किं तर्हि ? तदन्तस्य, तत् किमन्तग्रहणेन ? मैवम्; सत्यपि वृद्धाधिकारे यथा धन्वेति वृद्धग्रहणं हि देशस्य विशेषणं तथेहापि स्यात्, तन्निवृत्त्यर्थमन्तग्रहणं कृतम्॥

'वृद्धात्' इत्येव, 'देशे' इति च। तद्विशेषणं प्राग्ग्रहणम्। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। पाटलिपुत्रकाः। ऐकचक्रकाः। ईतः खल्वपि – काकन्दी, काकन्दकः। माकन्दी, माकन्दकः।

प्राचामिति किम्? दात्तामित्रीयः।

तपरकरणं विस्पष्टार्थम्॥

जनपदतदवध्योश्च॥ १२४॥

'वृद्धात्' इत्येव, 'देशे' इति च। तद्विशेषणं जनपदतदवधी। वृद्धाज्जनपदवाचिनस्तदवधिवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। आभिसारकः। आदर्शकः। जनपदावधेः खल्वपि – औपुष्टकः। श्यामायनकः।

तदवधेरपि जनपद एव गृह्यते, न ग्रामः। किमर्थं तर्हि

पदमञ्जरी

*रोपधेतोः प्राचाम्॥ ईकारान्ताच्चेति*। ह्रस्वस्य तु ग्रहणं न भवति, तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्। *ऐकचक्र इति*। एकचक्रा नाम प्राग्देशे नगरी, तत्र 'एङ् प्राचां देशे' इति वृद्धसंज्ञा, ककन्देन निर्वृत्ता नगरी काकन्दी, स्त्रीषु 'सौवीरसाल्वप्राक्षु' इत्यञ्। *तपरकरणं विस्पष्टार्थमिति*। न तु ह्रस्वप्लुतयोर्निवृत्त्यर्थम्; तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्, ईकारस्याणत्वेन तयोरग्रहणाच्च। असति तु तकारे 'रोपधयोः' इत्युच्यमाने किमत्र गृहीतमिति विस्पष्टं न ज्ञायेत। तकारे तु सति वर्णनिर्देशो निश्चीयते, तत्रैव तस्य प्रसिद्धत्वात्। 'ईकाररोपधयोः' इति निर्देशे गौरवप्रसङ्गः॥

*जनपदतदवध्योश्च॥ तदवधेरपि जनपद एव गृह्यते इति*। स चासाव-

न्यासः

रोपधेतोः प्राचाम्॥ ईकारान्ताच्चेति। कथं पुनर्ज्ञायते–दीर्घस्येदं ग्रहणम्, न ह्रस्वस्येति? सामर्थ्यात्। प्राग्ग्रहणं हि देशस्य विशेषणम्। वृद्धादिति वर्तते, न च वृद्धमिकारान्तं प्राग्देशवाच्यस्ति, तस्माद् दीर्घस्येदं ग्रहणमिति विज्ञायते। एकचक्राशब्दस्य तु 'एङ् प्राचाम्' इति वृद्धसंज्ञा।

अथ तपरकरणं किमर्थम्, नेह किञ्चित्तस्य व्यावर्त्यमस्तीत्यत आह–तपरकरणं विस्पष्टार्थम्। असति हि तस्मिन् रोपध इति स्थिते गुणे कृते विभक्तौ च रोपधयोरिति निर्देशः स्यात्। तत्रैवं सन्देहः स्यात्– किं रोपधस्येदं ग्रहणम्? उत रोपधस्येकारान्तस्येति? तपकरणे तु सति सन्देहो न भवति। ईरोपधादिति नोक्तम्, वैचित्र्यार्थम्॥

जनपदतदवध्योश्च॥ तदवधेरपीत्यादि। 'जनपदतदवध्योश्च' इत्यत्र तच्छब्देन

ग्रहणम् ? बाधकबाधनार्थम् । गर्त्तोत्तरपदाच्छं बाधित्वा वुञेव जनपदावधेर्भवति । त्रैगर्त्तकः ॥

## अवृद्धादपि बहुवचनविषयात् ॥ १२५ ॥

'जनपदतदवध्योः' इत्येव । अवृद्धाद्, वृद्धाच्च जनपदात्तदवधिवाचिनश्च बहुवचनविषयात्प्रातिपदिकाद् वुञ्प्रत्ययो भवति शैषिकः । अण्छयोरपवादः । अवृद्धाज्जनपदात्तावत् – अङ्गाः । वङ्गाः । कलिङ्गाः ।

पदमञ्जरी

वधिरिति कर्मधारय आश्रीयते, न तु तस्यावधिस्तदवधिरिति षष्ठीसमास इत्यर्थः । तथा हि सति मौञ्जी नामावधिभूतो ग्रामः, तत्र भवो मौञ्जीय इत्यत्रापि स्यात् । कस्य पुनरसाववधिरिति चेत् ? सन्निधानाज्जनपदस्यैवेति विज्ञायते ।

*गर्तोत्तरपदाच्छं बाधित्वेति* । अन्यथा तु गर्तोत्तरपदाच्छो भवतीत्यस्यावकाशः—वृकगर्तीयः, जनपदवुञोऽवकाशः– आङ्गकः; त्रिगर्तशब्दादुभयप्रसङ्गे परत्वाच्छः स्यात् , ततश्च गर्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् पूर्वविप्रतिषिद्ध इति पूर्वविप्रतिषेधः पठितव्यो भवति । *त्रैगर्तक इति* । उत्तरसूत्रेण वुञ् । एतेनोत्तरत्र तदवधिग्रहणस्योपयोगं दर्शयति ॥

*अवृद्धादपि बहुवचनविषयात्* ॥ *अण्छयोरपवाद इति* । अवृद्धादणोऽपवादो वृद्धाच्छस्य । इहावृद्धादपि बहुवचनादित्येव सिद्धम्; यौगिको बहुवचनशब्दः—

न्यासः

सन्निहितत्वाज्जनपद एव परामृश्यते । न चायं षष्ठीसमासः । षष्ठीसमासे ह्यजनपदोऽपि योऽवधिस्ततोऽपि वुञ् प्रसज्येत । छ एव तस्येष्यते—मौञ्जी नाम वाहीकानामवधिर्ग्रामः, तत्र भवो मौञ्जीय इति । तस्मात् समानाधिकरण एवायं समासः—स एव जनपदोऽवधिर्मर्यादा तदवधिरिति । तेन जनपदावधिरेव जनपदा एव गृह्यन्ते, न ग्रामः ।

किमर्थं तर्हि तदवधिग्रहणमिति । यदि तदवधिरपि जनपद एव गृह्यते, निरर्थकं तर्हि तस्य ग्रहणम् , 'जनपदाच्च' इत्येतावदेव वक्तव्यमित्यभिप्रायः । बाधकबाधनार्थमिति । गर्तोत्तरपदाद् वक्ष्यमाणश्छ एव परत्वाद् विशेषविहितत्वाच्च बाधकः, तस्य बाधनार्थं तदवधिग्रहणम् । तेन हि त्रिगर्तेषु भवस्त्रैगर्तक इत्यत्रोत्तरसूत्रेण गर्तोत्तरपदाच्छं बाधित्वा वुञेव भवति ॥

अवृद्धादपि बहुवचनविषयात् ॥ अण्छयोरपवाद इति । अवृद्धादणोऽपवादः, वृद्धाच्छस्य । अथ विषयग्रहणं किमर्थम् , विनापि तेन विशेषो लभ्यत एव । कथम् ?

आङ्गकः। वाङ्गकः। कालिङ्गकः। अवृद्धाज्जनपदावधेः – अजमीढाः। अजक्रन्दाः। आजमीढकः। आजक्रन्दकः। वृद्धाज्जनपदात् – दार्वाः। जाम्ब्वाः। दार्वकः। जाम्ब्वकः। वृद्धाज्जनपदावधेः – कालञ्जराः। वैकुलिशाः। कालञ्जरकः। वैकुलिशकः।

विषयग्रहणमनन्यत्र भावार्थम्। जनपदैकशेषबहुत्वे मा भूत्। वर्तन्यः। वार्तनः[1]।

अपिग्रहणं किम्, यावता वृद्धात्पूर्वेणैव सिद्धम्? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायीति समुच्चीयते॥

पदमञ्जरी

बहूनामर्थानां वचनो बहुवचन इति। यदि वा बहुवचनाद्बहुवचनान्तादित्यर्थः, नार्थो विषयग्रहणेन? तत्राह— *जनपदैकशेषबहुत्व इति*। जनपदस्यैकशेषवशेन यद्बहुत्वं तत्रेत्यर्थः। *वर्तन्य इति*। अवयवभेदेन भेदमाश्रित्य एकशेषः। नायं नित्यबहुवचनान्तः; द्व्येकयोरपि दर्शनात्। *तक्रकौण्डिन्यन्यायेनेति*। पूर्वसूत्रे हि जनपदसामान्ये वृद्धाद् वुञ् विहितः, यथा—ब्राह्मणसामान्ये दधिदानम्। इह तु बहुवचनविषये विशेषेऽवृद्धाद् वुञ्, यथा—कौण्डिन्ये तक्रदानम्, ततश्च

न्यासः

इह जनपदतदवधिशब्दाभ्यां समानाधिकरणत्वाद् बहुवचनशब्दो न पारिभाषिको विज्ञायते, किं तर्हि? अन्वर्थः— बहूनामर्थानां वचनो यो जनपदस्तदवधिश्चेति। यश्च बहूनामर्थानां वचनः सोऽर्थान् बहून् ब्रुवन् सामर्थ्यादेव बहुवचनविषयो भवति? इत्याह— विषयग्रहणमित्यादि। अनन्यत्रभावः कथं नाम लभ्यत इत्येवमर्थं विषयग्रहणम्। अनन्यत्रभावः किमर्थमिष्यत इत्याह—जनपदैकदेशः क्रियते। वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तद् बहूनां वाचको भवति। ततश्च यदि विषयग्रहणं न क्रियते ततो वर्तनीषु भव इति वुञ् स्यात्। विषयग्रहणे तु सति न भवति, अनन्यत्रभावो विषयः। तेनैवं विज्ञायते—बहुवचनं न यो व्यभिचरतीति। यश्चैकशेषः स बहुवचनं व्यभिचरति, तस्य हि विवक्षामात्रे बहुत्वात्। द्वयोरपि च कदाचिद् वृत्तेः।

अपिग्रहणमिति। अपिग्रहणं हि वृद्धादपि यथा स्यादित्येवमर्थं क्रियते। वृद्धात् पूर्वेणैव सिद्धः प्रत्ययः, तत् किमपिग्रहणेन? तक्रकौण्डिन्यन्यायेनेति। यथा 'ब्राह्मणेभ्यो

---

१. 'वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, वर्तनीषु भव इति वुञ् न भवति; सहविवक्षाया अभावे बहुवचनाभावात्। वर्तन्यः। वार्तनः'–इति पाठा०।

## कच्छाग्निवक्त्रगर्त्तोत्तरपदात् ॥ १२६ ॥

'देशे' इत्येव । उत्तरपदशब्दः प्रत्येकमभिसम्बद्धचते । कच्छाद्युत्तर-पदाद्देशवाचिनः प्रातिपदिकाच्च वृद्धादवृद्धाच्च वुञ् प्रत्ययो भवति शैषिकः । छाणोरपवादः । दारुकच्छकः । पैप्पलीकच्छकः । काण्डाग्नकः । वैभुजाग्नकः । ऐन्द्रवक्त्रकः । सैन्धुववक्त्रकः । बाहुगर्तकः । चाक्रगर्तकः ॥

## धूमादिभ्यश्च ॥ १२७ ॥

धूमादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति शैषिकः । अणादेरपवादः । धौमकः । खाण्डकः[1] ।

पदमञ्जरी

बहुवचनादपि वृद्धाद् वुञि प्राप्ते आरभ्यमाणोऽवृद्धाद् वुञ् वृद्धाद् वुञो बाधकः स्यादित्यपिशब्देन समुच्चीयत इत्यर्थः । इह बहुवचनविषयादित्येतावता सिद्धमवृद्धार्थोऽयमारम्भः । वृद्धाधिकारविच्छेदार्थं त्ववृद्धादपीति वचनम् ॥

*कच्छाग्निवक्त्रगर्तोत्तरपदात्* ॥ कच्छशब्दार्थमुत्तरपदग्रहणम् । स हि केवलोऽपि कूलाख्ये देशे वर्तते, इतरेषां तु केवलानां देशवृत्त्यसम्भवादेव तदन्त-विधिः सिद्धः । कच्छाद्यन्तादित्युच्यमाने बहुच्पूर्वादपि स्यादित्युत्तरपदग्रहणम् ॥

*धूमादिभ्यश्च* ॥ *अणादेरपवाद इति* । अवृद्धेभ्यो धूमादिभ्योऽणोऽपवादः,

न्यासः

दधि दीयतां तक्रं कौण्डिन्याय' इति सामान्येन वृत्तस्य दधिदानस्य विशेषे वर्तमानेन तक्र-दानेन बाधा क्रियते, तथेहापि बहुवचनविषये च सामान्येन प्रवृत्तस्य पूर्वयोगस्य बहुवचनविषये वर्तमानेनानेन योगेन बाधा विज्ञायते । तस्माद् वृद्धादपि यथा स्यादि-त्यपिशब्देन समुच्चीयते ॥

कच्छाग्निवक्त्रगर्तोत्तरपदात् । कच्छशब्दार्थमुत्तरपदग्रहणम्, स हि केवलोऽपि देशे वर्तते । इतरेषां तु केवलानां देशे वृत्त्यसम्भवात् सामर्थ्यादेव तदन्तविधिर्लभ्यत इतीतरान् प्रत्युत्तरपदग्रहणमनर्थकम् । 'कच्छाग्निवक्त्रगर्तान्तात्' इति नोक्तम्, बहुच्पूर्वान्मा भूत् । यदा हि कच्छदेशेन देशान्तरस्य गुणसाम्ये सतीवदसमासः कच्छदेश इति कच्छ-शब्दाद् बहुच् क्रियते तदा बहुकच्छशब्दो देशवचन इति । अन्तग्रहणे तु सति ततोऽपि प्रत्ययः स्यात्, उत्तरपदग्रहणान्न भवति । दारुकच्छक इति । कच्छशब्दस्योत्तरपदस्य वृद्धस्योदाहरणम् । पैप्पलीकच्छक इत्यवृद्धस्योदाहरणम् । एवमग्न्याद्युत्तरपदानामपि । एकमवृद्धस्योदाहरणम् । अपरं वृद्धस्य वेदितव्यम् ॥

---

1. 'खाडण्डकः'—इति पाठा० ।

पाथेयशब्दः पठ्यते, तस्य योपधात्वादेव वुञि सिद्धे सामर्थ्याद-देशार्थं ग्रहणम्।

तथा विदेहानर्तशब्दयोर्जनपदलक्षणे वुञि सिद्धेऽदेशार्थः पाठः। विदेहानां क्षत्रियाणां स्वं वैदेहकम्। आनर्तकम्।

समुद्रशब्दः पठ्यते, तस्य नावि मनुष्ये च वुञिष्यते – सामुद्रिका नौः। सामुद्रको मनुष्यः। अन्यत्र न भवति – सामुद्रं जलमिति।

धूम। खण्ड[1]। शशादन। आर्जुनाद। दाण्डायनस्थली। माहक-स्थली। घोषस्थली। माषस्थली। राजस्थली। राजगृह। सत्रासाह। भक्षास्थली। मद्रकूल। गर्त्तकूल। आञ्जीकूल। द्व्याहाव। त्र्याहाव। संहीय। वर्वर। वर्चगर्त। विदेह। आनर्त्त। माठर। पाथेय। घोष। शिष्य। मित्त्र। वल। आराज्ञी। धार्तराज्ञी। अवयात। तीर्थ। * कूलात्सौवीरेषु *। * समुद्रान्नावि मनुष्ये च *। कुक्षि। अन्तरीप। द्वीप। अरुण। उज्जयिनी। दक्षिणापथ। साकेत[2]।

## नगरात्कुत्सनप्रावीण्ययोः ॥ १२८ ॥

नगरशब्दाद् वुञ् प्रत्ययो भवति शैषिकः कुत्सने प्रावीण्ये च

पदमञ्जरी

वृद्धेभ्यश्छस्य, उदीच्यग्रामेभ्यस्त्वञः, वाहीकग्रामेभ्यष्ठञ्ञिठयोः। *कूलात्सौवीरेष्विति*। कौलको भवति सौवीरेषु, कौलमन्यत्र॥

न्यासः

धूमादिभ्यश्च॥ अणादेरपवाद इति। आदिशब्देन कच्छादीनां ग्रहणम्। तत्र देशवचना अवृद्धा ये धूमादयस्तेभ्योऽणोऽपवादः। ये तु वृद्धास्तेभ्यश्छस्य। य उदीच्यग्रामास्तेभ्योऽणः। ये वाहीकग्रामास्तेभ्यष्ठञ्ञिठयोः। तस्य योपधत्वादेव वुञि सिद्ध इति। 'धन्वयोपधाद् वुञ्' इत्यनेन। जनपदलक्षणे वुञि सिद्ध इति। 'अवृद्धादपि' इत्यादिना। कूलात् सौवीरेषु इति। कुलशब्दाद वुञ् भवति सौवीरेषु। कौलको भवति सौवीरश्चेत्, कौलोऽन्यत्॥

---

1. 'खडण्ड'–इति पाठा०।
2. मानवल्ली, वल्ली, सुराज्ञी– एतेऽत्र गणेऽधिका शब्दाः क्वचित्।

गम्यमाने । प्रत्ययार्थविशेषणं चैतत् – कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति । कुत्सनम्=निन्दनम् । प्रावीण्यम् = नैपुण्यम् ॥

केनेदं मुषितः पन्था गात्रे पक्ष्मालिधूसरः ।

इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण । चौरा हि नागरका भवन्ति ।

केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत् ।

इह नगरे मनुष्येण सम्भाव्यत एतन्नागरकेण । प्रवीणा हि नागरका भवन्ति ।

कुत्सनप्रावीण्ययोरिति किम् ? नागरा ब्राह्मणाः । कत्त्र्यादिषु तु संज्ञाशब्देन साहचर्यात्संज्ञानगरं पठ्यते, तस्मिन् नागरेयकमिति प्रत्युदाहार्यम् ॥

अरण्यान्मनुष्ये ॥ १२९ ॥

अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैषिको मनुष्येऽभिधेये । औपसंख्यानिकस्य णस्यापवादः । आरण्यको मनुष्यः ।

पदमञ्जरी

*नगरात् कुत्सनप्रावीण्ययोः* ॥ केनेदं *मुषितमिति* प्रश्नः, इह नगरे मनुष्येणेत्युत्तरम् । *सम्भाव्यत एतदित्यादि* प्रष्टुर्वचनम् । *संज्ञानगरं पठ्यत इति* । माहिष्मतीशब्दसाहचर्यात् संज्ञानगरं संज्ञाभूतो नगरशब्द इत्यर्थः ॥

*अरण्यान्मनुष्ये* ॥ *औपसंख्यानिकस्येति* । 'अरण्याण्णो वक्तव्यः' इत्यौपसंख्यानप्राप्तस्य ।

न्यासः

नगरात् कुत्सनप्रावीण्ययोः ॥ नागरा ब्राह्मणा इति । अण् । ननु च 'नगरमाहिष्मती' इति नगरशब्दः कत्त्र्यादिषु पठ्यते, ततो ढकञा भवितव्यम्, तत् कथं नागरा इति प्रत्युदाहृयत इत्याह—कत्त्र्यादिष्वित्यादि । द्विविधो नगरशब्दः—जातिवचनः, संज्ञाशब्दश्च । तयोः कत्त्र्यादिषु माहिष्मतीशब्देन साहचर्यात् संज्ञाशब्दः पठ्यते । तत्र जातिशब्दान्नागरा इति प्रत्युदाहृतम् । संज्ञाशब्दे तु नागरेयक इति प्रत्युदाहर्तव्यम् ॥

अरण्यान् मनुष्ये ॥ औपसंख्यानिकस्य णस्यापवाद इति । 'अरण्याण्णः' इत्युपसंख्यानात् प्राप्तस्य ।

* पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् *। आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती।

* वा गोमयेषु *। आरण्याः, आरण्यका गोमयाः। एतेष्विति किम्? आरण्याः पशवः॥

**विभाषा कुरुयुगन्धराभ्याम्॥ १३०॥**

कुरु, युगन्धर – इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः। कौरवकः, कौरवः। यौगन्धरकः, यौगन्धरः। जनपदशब्दावेतौ, ताभ्याम् 'अवृद्धादपि' इति नित्ये वुञि प्राप्ते विकल्प उच्यते।

कुरुशब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति। सैषा युगन्धरार्था विभाषा[1]। मनुष्यतस्थयोस्तु कुरुशब्दान्नित्य

पदमञ्जरी

'मनुष्ये' इत्यल्पमिदमुच्यते, इत्याह—*पथ्यध्यायेति*। *आरण्यकोऽध्याय इति*। योऽरण्येऽधीयते उपनिषद्भागः स उच्यते। विहारः=क्रीडा॥

*विभाषा कुरुयुगन्धराभ्याम्॥ कुरुशब्दः कच्छादिषु पठ्यते इति*। कथं तर्हि कुरुशब्दाद् वुञः प्राप्तिरुक्ता, ताभ्यामवृद्धादपीति नित्यं वुञि प्राप्त इति? आद्यप्राप्त्यभिप्रायेण तदुक्तम्, न पुनर्योऽनेन विकल्पेन बाध्यते तदभिप्रायेण। येऽपि पठन्ति–वुञि सिद्ध इति, प्राप्त इत्यर्थः। यथा सिद्धे सत्यारम्भो नियमार्थ इति कुरुशब्दार्थं विभाषाग्रहणं न कर्तव्यमिति प्रतिपादयिष्यन्नाह—*कुरुशब्दः कच्छादिषु पठ्यत इति*। ततः किमित्यत्राह—*तत्रेति*। किमर्थं तर्हि विभाषा-

न्यासः

पथ्यध्यायन्यायेत्यादि। एषु पथ्यादिषु वुञ्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'धूमादिभ्यश्च' इत्यतश्चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेन पथ्यादिषु वुञ्भवति।

वा गोमयेष्विति। गोमयेषु वाच्येषु वा वुञ्भवतीति। स तु तस्यैव चकारस्यानुक्तसमुच्चयार्थस्यानुवृत्तेर्वक्ष्यमाणस्य विभाषाग्रहणस्योभयोः शेषभूतत्वाल्लभ्यते। यदि तर्हि वक्ष्यमाणं विभाषाग्रहणमुभयोर्योगयोः शेषभूतं पथ्यादिष्वपि विकल्पेन विधिः स्यात्? नैष दोषः; व्यवस्थितविभाषा हि सा, तेन गोमयाद् विकल्पेन विधिर्भवति, पथ्यादिषु नित्यमिति॥

विभाषा कुरुयुगन्धराभ्याम्॥ सैषा युगन्धरार्था विभाषेति। न कुरु-

---

1. 'पारिशेष्याद्युगन्धरार्था विभाषा'–इति पाठा०।
काशि० 3 : ४०

एव वुञ्प्रत्ययो भवति । कौरवको मनुष्यः, कौरवकमस्य हसितमिति ॥

मद्रवृज्योः कन् ॥ १३१ ॥

मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । मद्रेषु जातः मद्रकः । वृजिकः ॥

कोपधादण् ॥ १३२ ॥

'देशे' इत्येव । ककारोपधात्प्रातिपदिकादणप्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । अन्यत्र जनपदं मुक्त्वा पूर्वेणैव कोपधादणि सिद्धम् ।

पदमञ्जरी

ग्रहणमित्याह-*सैषेति* । ननु युगन्धरशब्दादपि 'अवृद्धादपि' इति नित्ये वुञि सिद्धेऽन्तरेणापि विभाषाग्रहणं पुनर्वचनाद्विकल्पो विज्ञास्यते ? नैवं शक्यम्; विपर्ययोऽपि स्यात् । युगन्धरशब्दान्नित्यो वुञ्, 'अवृद्धादपि' इत्यनेन तु विभाषित इति पुनरारम्भो ह्येवमप्युपपद्यते । *मनुष्यतत्स्थयोस्त्विति* । एतच्च कच्छादिषु पाठसामर्थ्याल्लभ्यते, अन्यथाऽनयैव विभाषया वुञणोः सिद्धत्वात्तत्रास्य पाठोऽनर्थकः स्यात् ॥

*मद्रवृज्योः कन्* ॥ मद्रशब्दः 'स्फायितञ्चि' इति रक्प्रत्ययान्तः, 'वृजी वर्जने' 'इगुपधात्किः' इति किप्रत्ययान्तो वृजिशब्दः । *जनपदवुञोऽपवाद इति* । 'अवृद्धादपि' इति ॥

*कोपधादण्* ॥ किं पुनरदेशवाचिनोऽयं नेष्यते यतो देशग्रहणमनुवर्तते ? इत्यत आह—*अन्यत्रेति* । पूर्वेण, प्रस्थोत्तरपदादिसूत्रेण, एवं चोत्तरार्थं देशानु-

न्यासः

शब्दार्था । तत्र कच्छादिपाठाद् विनापि विभाषाग्रहणेनाणा भवितव्यम् । ननु युगन्धरशब्दादप्यणि 'अवृद्धादपि बहुवचनविषयात्' इति नित्य एव वुञि प्राप्ते वचनमनित्यार्थं भविष्यति, नित्ये हि वुञि पुनरारम्भोऽनर्थकः स्यात्, तस्माद् युगन्धरार्थोऽपि विभाषा न प्रसज्येत ? नैतत्, पुनरारम्भो विपर्ययेणापि शक्यते समर्थयितुम् । जनपदलक्षणो यो वुञ् स विभाषा, अयं तु नित्य इति । अस्मात् तु युगन्धरार्थं विभाषाग्रहणं कर्तव्यम् । मनुष्यतत्स्थयोस्तु कुरुशब्दान्नित्य एव वुञ्भवति, कच्छादिषु पाठसामर्थ्यात् । अन्यथानयैव विभाषया वुञणोः सिद्धत्वात् कच्छादिपाठोऽनर्थकः स्यात्; अनवकाशत्वात् ॥

मद्रवृज्योः कन् ॥ जनपदवुञोऽपवाद इति । 'अवृद्धादपि' इत्यादिप्राप्तस्य । मद्रवृज्योः कन्निति घ्यन्तस्य परनिपातः 'द्वन्द्वे घि' इत्यस्य विधेरनित्यत्वज्ञापनार्थम् । तेन धूमाग्नी इत्येवमादि सिद्धं भवति ॥

कोपधादण् ॥ जनपदवुञोऽपवाद इति । पूर्ववत् प्राप्तस्य । किं पुनर्देशादन्यत्र

ऋषिकेषु जातः आर्षिकः । माहिषिकः ।

अण्ग्रहणमुवर्णान्तादपि स्यात् – इक्ष्वाकुषु जातः ऐक्ष्वाकः ॥

कच्छादिभ्यश्च ॥ १३३ ॥

'देशे' इत्येव । 'कच्छ' – इत्येवमादिभ्यो देशवाचिभ्योऽण्प्रत्ययो भवति शैषिकः। वुञादेरपवादः । काच्छः । सैन्धवः । वार्णवः ।

पदमञ्जरी

वृत्तिः न त्वदेशनिवृत्त्यर्था । नन्वदेशवाचिनः प्राग्दीव्यतीय एवाण् सिद्धः, प्रस्थोत्तरपदादिसूत्रं तु उदीच्यग्रामलक्षणाञो बाधनार्थम्, तत्किमुच्यते—अन्यत्र पूर्वेणैवेति, सत्यम् ; सति त्वेवमर्थे तस्यारम्भे प्रतिपदविधानात्तेनैव सर्वत्राण्विधिर्युक्तः, अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमित्येवोच्येत, आरम्भसामर्थ्याद्धि यो विहितो न च प्राप्नोति स एव भविष्यति ? इत्यत आह—*अण्ग्रहणमिति* । इक्ष्वाकुशब्दाद् 'ओर्देशे ठञ्' प्राप्तः, तस्मिन् जनपदवुञा बाधिते यद्यण्ग्रहणं न क्रियेत पुनर्वचनाद् वुञेव स्याद्, अण्ग्रहणे त्वणेव भवति । *ऐक्ष्वाक इति* । दाण्डिनायनादिसूत्रेण टिलोपः, एवं चाण्ग्रहणादेवायमोर्देशे ठञो बाधको न परत्वात् ।

कच्छादिभ्यश्च ॥ *वुञादेरपवाद इति* । ये जनपदवाचिनो बहुवचनविषयाः, तेभ्यो वुञोऽपवादः, सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः । साल्वशब्दः पठ्यते—जनपदलक्षणो वुञ्मा भूदिति । 'अपदातौ साल्वात्' 'गोयवाग्वोश्च' इति नियमार्थं भविष्यति—अपदातावेव गोयवाग्वोरेवेति, वृद्धत्वाच्छः प्राप्नोति ॥

न्यासः

वर्तमानो नेष्यते, यो देशे न वर्तते ? इत्याह—अन्यत्रेत्यादि पूर्वेणेति । 'प्रस्थोत्तरपदात्' इति सूत्रेण ।

अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमेवोच्येत, यथाविहितमुच्यमानेऽणपवादो वुञ् स्यादिति चेत् ? न; वुञ्विधाने हि वचनमनर्थकं स्यात्, तेन विना वुञः सिद्धत्वात् । तस्माद् वचनसामर्थ्याद् विहितोऽणेव प्राप्नोति । अन्येन बाधित्वा अत एवाण् भविष्यतीति । स हि 'प्राग्दीव्यतोऽण्' इति विहितो बाधितश्च वुञेवेत्यत आह—अण्ग्रहणमित्यादि । इक्ष्वाकुषु जात इति । इक्ष्वाकुशब्दादोर्देशे ठञ् प्राप्तः, तस्मिन् जनपदवुञा बाधिते यदीहाण्ग्रहणं न क्रियते तदा पुनर्वचनाद् वुञेव भवति, अण्ग्रहणादणेव भवति । ऐक्ष्वाक इति । 'दाण्डिनायनहास्तिनायन' इत्यादाविक्ष्वाकुशब्दस्योकारस्य लोपो निपातितः ॥

कच्छादिभ्यश्च ॥ वुञादेरपवाद इति । आदिशब्देन ठञः । तत्र ये जनपदबहुवचनविषयास्तेभ्यो वुञः प्राप्तस्यापवादः । सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः कच्छशब्दः,

एव वुञ्प्रत्ययो भवति । कौरवको मनुष्यः, कौरवकमस्य हसितमिति ॥

## मद्रवृज्योः कन् ॥ १३१ ॥

मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । मद्रेषु जातः मद्रकः । वृजिकः ॥

## कोपधादण् ॥ १३२ ॥

'देशे' इत्येव । ककारोपधात्प्रातिपदिकादण्प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । अन्यत्र जनपदं मुक्त्वा पूर्वेणैव कोपधादणि सिद्धम् ।

### पदमञ्जरी

ग्रहणमित्याह–*सैषेति* । ननु युगन्धरशब्दादपि 'अवृद्धादपि' इति नित्ये वुञि सिद्धेऽन्तरेणापि विभाषाग्रहणं पुनर्वचनाद्विकल्पो विज्ञास्यते ? नैवं शक्यम्; विपर्ययोऽपि स्यात् । युगन्धरशब्दान्नित्यो वुञ्, 'अवृद्धादपि' इत्यनेन तु विभाषित इति पुनरारम्भो ह्येवमप्युपपद्यते । *मनुष्यतत्स्थयोस्त्विति* । एतच्च कच्छादिषु पाठसामर्थ्याल्लभ्यते, अन्यथाऽनयैव विभाषया वुञणोः सिद्धत्वात्तत्रास्य पाठोऽनर्थकः स्यात् ॥

*मद्रवृज्योः कन्* ॥ मद्रशब्दः 'स्फायितञ्चि' इति रक्प्रत्ययान्तः, 'वृजी वर्जने' 'इगुपधात्किः' इति किप्रत्ययान्तो वृजिशब्दः । *जनपदवुञोऽपवाद इति* । 'अवृद्धादपि' इति ॥

*कोपधादण्* ॥ किं पुनरदेशवाचिनोऽयं नेष्यते यतो देशग्रहणमनुवर्तते ? इत्यत आह—*अन्यत्रेति* । पूर्वेण, प्रस्थोत्तरपदादिसूत्रेण, एवं चोत्तरार्थं देशानु-

### न्यासः

शब्दार्था । तत्र कच्छादिपाठाद् विनापि विभाषाग्रहणेनाणा भवितव्यम् । ननु युगन्धरशब्दादप्यणि 'अवृद्धादपि बहुवचनविषयात्' इति नित्य एव वुञि प्राप्ते वचनमनित्यार्थं भविष्यति, नित्ये हि वुञि पुनरारम्भोऽनर्थकः स्यात्, तस्माद् युगन्धरार्थाऽपि विभाषा न प्रसज्येत ? नैतत्, पुनरारम्भो विपर्ययेणापि शक्यते समर्थयितुम् । जनपदलक्षणो यो वुञ् स विभाषा, अयं तु नित्य इति । अस्मात् तु युगन्धरार्थं विभाषाग्रहणं कर्तव्यम् । मनुष्यतत्स्थयोस्तु कुरुशब्दान्नित्य एव वुञ्भवति, कच्छादिषु पाठसामर्थ्यात् । अन्यथानयैव विभाषया वुञणोः सिद्धत्वात् कच्छादिपाठोऽनर्थकः स्यात् ; अनवकाशत्वात् ॥

मद्रवृज्योः कन् ॥ जनपदवुञोऽपवाद इति । 'अवृद्धादपि' इत्यादिप्राप्तस्य । मद्रवृज्योः कन्निति घ्यन्तस्य परनिपातः 'द्वन्द्वे घि' इत्यस्य विधेरनित्यत्वज्ञापनार्थम् । तेन धूमाग्नी इत्येवमादि सिद्धं भवति ॥

कोपधादण् ॥ जनपदवुञोऽपवाद इति । पूर्ववत् प्राप्तस्य । किं पुनर्देशादन्यत्र

ऋषिकेषु जातः आर्षिकः। माहिषिकः।

अण्ग्रहणमुवर्णान्तादपि स्यात् – इक्ष्वाकुषु जातः ऐक्ष्वाकः ॥

कच्छादिभ्यश्च ॥ १३३ ॥

'देशे' इत्येव। 'कच्छ' – इत्येवमादिभ्यो देशवाचिभ्योऽण्प्रत्ययो भवति शैषिकः। वुञादेरपवादः। काच्छः। सैन्धवः। वार्णवः।

पदमञ्जरी

वृत्तिः न त्वदेशनिवृत्त्यर्था। नन्वदेशवाचिनः प्राग्दीव्यतीय एवाण् सिद्धः, प्रस्थोत्तरपदादिसूत्रं तु उदीच्यग्रामलक्षणाञो बाधनार्थम्, तत्किमुच्यते—अन्यत्र पूर्वेणैवेति, सत्यम्; सति त्वेवमर्थे तस्यारम्भे प्रतिपदविधानात्तेनैव सर्वत्राण्विधिर्युक्तः, अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमित्येवोच्येत, आरम्भसामर्थ्याद्धि यो विहितो न च प्राप्नोति स एव भविष्यति? इत्यत आह–*अण्ग्रहणमिति*। इक्ष्वाकुशब्दाद् 'ओर्देशे ठञ्' प्राप्तः, तस्मिन् जनपदवुञा बाधिते यद्यण्ग्रहणं न क्रियेत पुनर्वचनाद् वुञेव स्याद्, अण्ग्रहणे त्वणेव भवति। *ऐक्ष्वाक इति*। दाण्डिनायनादिसूत्रेण टिलोपः, एवं चाण्ग्रहणादेवायमोर्देशे ठञो बाधको न परत्वात्।

*कच्छादिभ्यश्च* ॥ *वुञादेरपवाद इति*। ये जनपदवाचिनो बहुवचनविषयाः, तेभ्यो वुञोऽपवादः, सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः। साल्वशब्दः पठ्यते—जनपदलक्षणो वुञ्मा भूदिति। 'अपदातौ साल्वात्' 'गोयवाग्वोश्च' इति नियमार्थं भविष्यति—अपदातावेव गोयवाग्वोरेवेति, वृद्धत्वाच्छः प्राप्नोति ॥

न्यासः

वर्तमानो नेष्यते, यो देशे न वर्तते? इत्याह—अन्यत्रेत्यादि पूर्वेणेति। 'प्रस्थोत्तरपदात्' इति सूत्रेण।

अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमेवोच्येत, यथाविहितमुच्यमानेऽणपवादो वुञ् स्यादिति चेत्? न; वुञ्विधाने हि वचनमनर्थकं स्यात्, तेन विना वुञः सिद्धत्वात्। तस्माद् वचनसामर्थ्याद् विहितोऽणेव प्राप्नोति। अन्येन बाधित्वा अतएवाण् भविष्यतीति। स हि 'प्राग्दीव्यतोऽण्' इति विहितो बाधितश्च वुञैवेत्यत आह—अण्ग्रहणमित्यादि। इक्ष्वाकुषु जात इति। इक्ष्वाकुशब्दादोर्देशे ठञ् प्राप्तः, तस्मिन् जनपदवुञा बाधिते यदीहाण्ग्रहणं न क्रियते तदा पुनर्वचनाद् वुञेव भवति, अण्ग्रहणादणेव भवति। ऐक्ष्वाक इति। 'दाण्डिनायनहास्तिनायन' इत्यादाविक्ष्वाकुशब्दस्योकारस्य लोपो निपातितः ॥

कच्छादिभ्यश्च ॥ वुञादेरपवाद इति। आदिशब्देन ठञः। तत्र ये जनपदबहुवचनविषयास्तेभ्यो वुञः प्राप्तस्यापवादः। सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः कच्छशब्दः,

कच्छशब्दो न बहुवचनविषयः, तस्य मनुष्यतत्स्थयोर्वुञर्थः पाठः। विजापकशब्दः पठ्यते, तस्य कोपधत्वादेवाण्सिद्धे इह ग्रहणमुत्तरार्थम्।

कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। कुरु। रङ्कु। अणु[1]। खण्ड। द्वीप। अनूप। अजवाह। विजापक। कुलून। कच्छादिः॥

मनुष्यतत्स्थयोर्वुञ्॥ १३४॥

'कच्छादिभ्यः' इत्येव। मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ् प्रत्ययो भवति। अणोऽपवादः। काच्छको मनुष्यः। काच्छकमस्य हसितं जल्पितम्। काच्छिका चूडा। सैन्धवको मनुष्यः। सैन्धवकमस्य हसितं जल्पितम्। सैन्धविका चूडा।

मनुष्यतत्स्थयोरिति किम्? काच्छो गौः। सैन्धवो वार्णवः॥

अपदातौ साल्वात्॥ १३५॥

साल्वशब्दः कच्छादिषु पठ्यते, ततः पूर्वेणैव मनुष्यतत्स्थयोर्वुञि सिद्धे नियमार्थं वचनम्। अपदातावेव मनुष्ये मनुष्यस्थे च साल्वशब्दाद् वुञ्प्रत्ययो भवति। साल्वको मनुष्यः। साल्वकमस्य हसितं जल्पितम्।

अपदाताविति किम्? साल्वः पदातिर्व्रजति॥

पदमञ्जरी

*अपदातौ साल्वात्*॥ पादाभ्यामततीति 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः, न पदातिरपदातिः। अपदातिः = अश्वरोहादिः। *अपदातावेव मनुष्ये तत्स्थे चेति*। द्वन्द्वनिर्दिष्टत्वेन तत्स्थे चेत्युक्तम्, न तु तत्स्थस्य पदातेः सम्भ-

न्यासः

न बहुवचनविषय इति। तेन 'अवृद्धादपि' इत्यादिना बाधकस्य वुञोऽप्राप्तावेव सामान्येनाण्सिद्ध एवेति दर्शयति। यद्येवम्, किमर्थं तस्य पाठः? इत्याह—तस्येत्यादि। उत्तरसूत्रेण वुञ् मनुष्यतत्स्थयोर्यथा स्यादित्येवमर्थः। कच्छस्येह पाठः, न त्वनर्थकः। कोपधादेवाण् सिद्ध इति। पूर्वसूत्रेणेति। इह ग्रहणमुत्तरार्थमिति। उत्तरसूत्रे वुञ् यथा स्यात्॥

मनुष्यतत्स्थयोर्वुञ्॥ अपदातौ साल्वात्॥ साल्व इति। कच्छादिपाठादण॥

---

१. 'अण्ड' इति पाठ०।

गोयवाग्वोश्च ॥ १३६ ॥

गवि यवाग्वां च जातादौ प्रत्ययार्थे साल्वशब्दाद् वुञ्प्रत्ययो भवति शैषिकः । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् ॥

गर्त्तोत्तरपदाच्छः ॥ १३७ ॥

'देशे' इत्येव । गर्त्तोत्तरपदाद्देशवाचिनः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । वाहीकग्रामलक्षणं च प्रत्ययं परत्वाद् बाधते । वृकगर्त्तीयम् । शृगालगर्त्तीयम् । श्वाविद्गर्त्तीयम् ।

उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् — बाहुगर्तम् ॥

गहादिभ्यश्च ॥ १३८ ॥

'गह' इत्येवमादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति शैषिकः । अणादेरपवादः[1] । गहीयः । अन्तःस्थीयः । देशाधिकारेऽपि सम्भवापेक्षं

पदमञ्जरी

वोऽस्ति । अपवादौ साल्वादेवेत्येष तु विपरीतनियमो न भवति; 'गोयवाग्वोश्च' इत्यारम्भात् ॥

*गर्तोत्तरपदाच्छः* ॥ *वाहीकग्रामलक्षणमिति* । यद्यपि 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ विहितौ, तथाप्युत्सृष्टानुबन्धयोस्तयोष्ठरूपाविशेषाद्वाहीकग्रामलक्षण-मित्येकवचननिर्देशः । *श्वाविद्गर्तीयमिति* । श्वानं विध्यतीति व्यधेः क्विप्, सम्प्रसारणम्, 'नहिवृति' इति दीर्घः, श्वाविधां गर्तः श्वाविद्गर्तः ॥

*गहादिभ्यश्च* ॥ *अणादेरपवाद इति* । तत्र माहकिप्रस्थशब्दात् 'प्रस्थपुर-

न्यासः

गोयवाग्वोश्च ॥ गर्तोत्तरपदाच्छः ॥ अवृद्धार्थं वचनम् । वृद्धात्तु 'वृद्धाच्छः' इत्यनेनैव सिद्धमिति । सति तु वृद्धादपि परत्वादनेनैव भवितव्यम् । अणोऽपवाद इति । नाप्राप्ते तस्मिन्नस्यारम्भात् । वाहीकग्रामलक्षणञ्चेत्यादि । यद् गर्तोत्तरपदं वाहीकवाचि ततो वाहीकग्रामलक्षणौ ठञ्ञिठौ बाधितत्वात् परत्वाच्छ एवं भवति, तस्य गर्तोत्तरपदमवकाश इति । अथोत्तरपदग्रहणं किमर्थम्, न गर्तान्तादित्येवोच्येत ? इत्याह—उत्तरपदग्रहणमित्यादि । यदि गर्तान्तादित्युच्येत तदा बहुगर्त इत्येतस्मादपि

---

1. 'अणञो रपवादः'—इति पाठा० ।

विशेषणम् , न सर्वेषाम् । 'मध्यमध्यमं चाण् चरणे' इति पठ्यते, तस्याय-मर्थः मध्यशब्दः प्रत्ययसन्नियोगेन मध्यममापद्यते । मध्यमीयाः । चरणे तु प्रत्ययार्थेऽण् भवति – माध्यमा इति । तदेतद्विशेष एव स्मर्यते पृथिवीमध्यस्य मध्यमभावः । चरणसम्बन्धेन निवासलक्षणोऽणिति च ।

पदमञ्जरी

वहान्ताच्च' इति वुञोऽपवादः, वाल्मीकिप्रभृतिभ्य इञन्तेभ्यः 'इञश्च' इत्यणः, शेषेभ्य औत्सर्गिकस्याणः । *सम्भवापेक्षमिति* । येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेव विशेषणम्, न त्वन्तस्थपूर्वपदादीनामित्यर्थः । *पृथिवीमध्यस्येति* । पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यः, न मध्यान्तरवाचीत्यर्थः । *चरणसम्बन्धेन निवासलक्षणोऽणिति* । चरणसम्बन्धेन योऽण्विधीयतेऽण् चरण इत्यनेन स निवासलक्षणो द्रष्टव्यः । 'सोऽयं निवासः' इत्यत्रैवार्थे भवतीत्यर्थः, तेन पृथिवीमध्यं निवास एषां कठादीनां चरणानामित्यत्रार्थे मध्यमा इति भवति ।

न्यासः

बहुच्पूर्वात् स्यात् , भवति ह्येतद् गर्तान्तम् । उत्तरपदग्रहणे तु सति न भवति, न ह्येतद् गर्तोत्तरपदम् । समासे हि सत्येतद् भवति —पूर्वपदमुत्तरपदमिति ॥

गहादिभ्यश्च ॥ अणादेरपवाद इति । आदिशब्देन वुञः । तत्र कामप्रस्थ-शब्दात् 'प्रस्थपुरवहान्ताच्च' इति प्राप्तस्य वुञोऽपवादः, शेषेभ्यस्त्वौत्सर्गिकस्याणः । सम्भवापेक्षं विशेषणमिति । सम्भवमपेक्षत इति सम्भवापेक्षम् । येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेवेदं विशेषणमिति । एतदुभयमपि विशेषणमेवा-चार्यैः स्मर्यते । पृथिवीमध्यस्येत्यादिना तद्विशेषं दर्शयति । चरणसम्बन्धेनेत्यादि । चरणेनार्थेन सम्बन्धश्चरणसम्बन्धः, तेन हेतुना करणेन वाण् भवति । किंविशिष्टः ? निवासलक्षणः । निवासो लक्षणं यस्य स तथोक्तः । कथं निवासलक्षणः ? यः पृथिवीमध्ये निवासभूते वर्तमानात् मध्यशब्दाद् भवति, स हि निवासेन लक्ष्यते । तदेतदुक्तं भवति—पृथिवीमध्यनिवासोऽस्य चरणस्येति । यदायमर्थो विज्ञायते तदाण्भवति, नान्यत्रेति । तेन यदा पृथिवीमध्याद् गतं चरणमिति विवक्ष्यते तदा च्छ एव भवति— मध्यमीय इति । कथं पुनः सामान्योक्तावेष विशेषो लभ्यत इति ? सामान्याभिधानेऽपि विशेषोपस्थानदर्शनात् । घृतक्षरणवच्च स ह्यविशेषेणोपदिष्टो घृतादिष्वेवावतिष्ठते । तस्मात् सामान्योक्तावपि पृथिवीमध्य एव वर्तमानो मध्यशब्दो मध्यमभावमापद्यते । चरणे च प्रत्ययार्थे निवासलक्षण एवाण् भवति, न हि सर्वेषु जातादिष्वर्थेषु ।

❀ मुखपार्श्वतसोर्लोपश्च ❀। मुखतीयम्। पार्श्वतीयम्।

❀ कुग्जनस्य परस्य च ❀। जनकीयम्। परकीयम्।

❀ देवस्य चेति वक्तव्यम् ❀। देवकीयम्।

❀ वेणुकादिभ्यश्छण् वक्तव्यः ❀। आकृतिगणोऽयम्। वैणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्। प्रास्थकीयम्[1]। माध्यमकीयम्।

गह। अन्तःस्थ। सम। विषम। ❀ मध्यमध्यमं चाण्चरणे ❀। उत्तम। अङ्ग। वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। उत्तमशाख। समानशाख। एकग्राम। एकवृक्ष। एकपलाश। इष्वग्र। इष्वनी[2]। अवस्यन्दी[3]। कामप्रस्थ। खाडायनि[4]। कावेरणि[5]। शैशिरि। शौङ्गि। आसुरि। आहिंसि। आमित्रि। व्याडि। वैदजि। भौजि। आढ्यश्वि। आनृशंसि। सौवि। पारकि। अग्निशर्मन्। देवशर्मन्। श्रौति। आरटकि। वाल्मीकि। क्षेमवृद्धिन। उत्तर।

पदमञ्जरी

*मुखपार्श्वतसोर्लोप इति*। मुखपार्श्वशब्दयोस्तसन्तयोः प्रत्ययसन्नियोगेन लोपो भवति, स च 'अलोऽन्त्यस्य', तत्र कृते यस्येति लोपः, लोपवचनम् 'अव्ययानां भमात्रे टिलोपः' इत्यस्यानित्यत्वज्ञापनार्थम्, तेनारातीय इति सिद्धं भवति ॥

न्यासः

मुखपार्श्वतसोर्लोप इति। मुखपार्श्वशब्दयोस्तसन्तयोः प्रत्ययसन्नियोगेन लोपो भवति। स च 'अलोऽन्त्यस्य' इति वचनादन्त्यस्य। लोपवचनम् 'अव्ययानां भमात्रे टिलोपः' इत्यस्यानित्यत्वज्ञापनार्थम्, तेनारातीय इत्यत्र न भवति। मुखतीयम्, पार्श्वतीयम्। 'अपादाने चाहीयरुहोः' इति मुखपार्श्वशब्दाभ्यां तसिः। 'आद्यादिभ्य उपसंख्यानम्' इत्यौपसंख्यानिके सकारस्य लोपे कृतेऽकारस्यापि 'यस्येति च' इति लोपः।

देवस्य चेति वक्तव्यमिति। देवशब्दस्य कुग् भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'कुग्जनस्य परस्य' इत्यत्र चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेन देवशब्दादपि भविष्यति ॥

---

१. 'प्रास्थीयम्'—इति पाठा०।
२. 'इष्वनीक'—इति पाठा०।
३. 'अवस्कन्द'—इति पाठा०।
४. 'खाण्डायनी'—इति पाठा०।
५. 'कामवेरणि'—इति पाठा०।

अन्तर । * मुखपार्श्वतसोर्लोपः * । * जनपरयोः कुक्च * । * देवस्य च * । * वेणुकादिभ्यश्छण् * । गहादिः ॥

प्राचां कटादेः ॥ १३९ ॥

'देशे' इत्येव । तद्विशेषणं प्राग्ग्रहणम् । प्राग्देशवाचिनः कटादेः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् ॥

राज्ञः क च ॥ १४० ॥

असम्भवाद्देशाधिकारः, न विशेषणम् । राज्ञः ककारश्चान्तादेशो भवति छश्च प्रत्ययः । राजकीयम् । आदेशमात्रमिह विधेयम्, प्रत्ययस्तु 'वृद्धाच्छः' इत्येव सिद्धः ॥

वृद्धादकेकान्तखोपधात् ॥ १४१ ॥

'देशे' इत्येव । वृद्धाद्देशवाचिनोऽक, इक — इत्येवमन्तात् खकारोपधाच्च प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । कोपधलक्षणस्याणोऽपवादः । वाहीकग्रामलक्षणस्य च प्रत्ययस्य, 'रोपधेतोः प्राचाम्' इति च । अकान्तात्तावत् — आरीहणकीयम् । द्रौघणकीयम् । इकान्तात् — आश्वपथिकीयम् । शाल्मलिकीयम् । खोपधात् — कौटिशिखीयम् । आयोमुखीयम् ॥

पदमञ्जरी

वृद्धादकेकान्तखोपधात् ॥ *आरीहणकीयम्, द्रौहणकीयमिति* । 'तेन निर्वृत्तम्' इत्यत्रार्थे वुञ्छणादिसूत्रेण यो वुञ् तदन्ताभ्यां प्रत्ययः, उदाहरणदिक्चेयमकान्तस्य दर्शिता । 'वृद्धाच्छः' इत्येव ह्यत्र छः सिद्धः, न ह्येतौ जनपदवाचिनौ, येन कोपधादणः प्रसङ्गः स्यात् । इदं त्वत्रोदाहरणं द्रष्टव्यम्—ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनः 'ब्राह्मणकोष्णिके संज्ञायाम्' इति निपातनात्

न्यासः

प्राचां कटादेः ॥ राज्ञः क च ॥ वृद्धादकेकान्तखोपधात् ॥ कोपधलक्षणस्य चेत्यादि । अकेकान्तात् 'कोपधादण्' इत्यणि प्राप्तेऽणोऽपवादः । कोपधादपि वाहीकग्रामलक्षणस्य ठञो ञिठस्य च । रोपधेतोः प्राचामिति

* अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् *। सौसुकीयम्। मौसुकीयम्। ऐन्द्रवेणुकीयम् ॥

### कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४२ ॥

'देशे' इत्येव, 'वृद्धात्' इति च। कन्थाद्युत्तरपदाद्देशवाचिनो वृद्धात्प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। वाहीकग्रामादिलक्षणस्य प्रत्ययस्यापवादः। दाक्षिकन्थीयम्। माहकिकन्थीयम्। दाक्षिपलदीयम्। माहकिपलदीयम्। दाक्षिनगरीयम्। माहकिनगरीयम्। दाक्षिग्रामीयम्। माहकिग्रामीयम्। दाक्षिह्रदीयम्। माहकिह्रदीयम् ॥

### पर्वताच्च ॥ १४३ ॥

पर्वतशब्दाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पर्वतीयो राजा। पर्वतीयः पुरुषः ॥

### विभाषाऽमनुष्ये ॥ १४४ ॥

पर्वतशब्दाच्छः प्रत्ययो भवति वा, अमनुष्ये वाच्ये। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते – पर्वतीयानि फलानि, पार्वतानि फलानि। पर्वतीयमुदकम्, पार्वतमुदकम्।

पदमञ्जरी

साधुः, तत्र जातो ब्राह्मणकीय इति। *अकेकान्तग्रहणे कोपधग्रहणमिति*। सूत्रेऽकेकान्तग्रहणमपनीय कोपधादिति वक्तव्यम्, व्यापकत्वाल्लघुत्वाच्चेत्यर्थः ॥

*कन्थापलदनगरग्रामह्रदोत्तरपदात्* ॥ अन्तग्रहणेनैव सिद्धम्, नार्थ उत्तरपदग्रहणेन। न च बह्वच्पूर्वे प्रसङ्गः, 'प्राचां देशे' इत्यधिकारात् ॥

*विभाषाऽमनुष्ये* ॥ यद्यत्र नञः प्रश्लेषो न स्यादसन्देहार्थम् 'मनुष्ये विभाषा-

न्यासः

अकेकान्तग्रहणे कोपधग्रहणमिति। इह सूत्रेऽकेकान्तग्रहणमपनीय कोपधग्रहणं कर्तव्यम्। कोपधादित्येवं वक्तव्यमित्यर्थः।

कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ वाहीकग्रामलक्षणस्येति। ठञ्ञिठयोश्च। अन्तग्रहणेनैव सिद्धे सत्युत्तरपदग्रहणं वैचित्र्यार्थम् ॥

पर्वताच्च ॥ विभाषाऽमनुष्ये ॥ पार्वतीयानि फलानीति। ननु चामनुष्य-

अमनुष्ये इति किम्? पर्वतीयो मनुष्यः ॥

कृकणपर्णाद्भारद्वाजे ॥ १४५ ॥

'देशे' इत्येव। भारद्वाजब्दोऽपि देशवचन एव, न गोत्रशब्दः। प्रकृतिविशेषणं चैतन्न प्रत्ययार्थः। कृकणपर्णशब्दाभ्यां भारद्वाजदेशवाचिभ्यां छः प्रत्ययो भवति शैषिकः[1]। कृकणीयम्। पर्णीयम्।

भारद्वाज इति किम्? कार्कणम्। पार्णम् ॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ चतुर्थाध्यायस्य
द्वितीयः पादः

पदमञ्जरी

इत्येव ब्रूयात्, लाघवे विशेषाभावादिति मत्वाऽऽह—*अमनुष्येऽभिधेय इति*। अमनुष्यशब्दो यौगिकोऽत्र गृह्यते, न तु रक्षःपिशाचादिषु रूढ इति दर्शयत्युदाहरणेन। *पर्वतीयानि फलानीति* ॥

*कृकणपर्णाद् भारद्वाजे* ॥ *न गोत्रशब्द इति*। कुत इत्याह—*प्रकृतिविशेषणं चैतदिति*। चशब्दो हिशब्दार्थे ॥

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां*
*चतुर्थस्याध्यायस्य द्वितीयः पादः*

न्यासः

शब्दो रक्षःपिशाचादिष्वेव रूढः, तथा हि 'सभाराजाऽमनुष्यपूर्वा' इत्यत्रेह कस्मान्न भवति—काष्ठसभेति, तत्रेदमुक्तम्—'अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्तते' इति, तत् कथम् 'अमनुष्ये' इत्युच्यमाने फलादिष्वभिधेयेषु भवति? नैष दोषः; द्वौ ह्यमनुष्यशब्दौ—रूढः, व्युत्पन्नश्च। तत्र 'सभाराजाऽमनुष्यपूर्वा' इत्यत्र रूढिशब्दस्य ग्रहणम्, इह त्वितरस्य मनुष्यादन्यत्र वर्तमानस्य ॥

कृकणपर्णाद् भारद्वाजे ॥ भारद्वाजशब्दोऽपि देशवचन एव, न गोत्रशब्द इति। देश एव भारद्वाजे कृकणपर्णशब्दवृत्तेः सम्भवात् ॥

बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य
द्वितीयः पादः समाप्तः

---

१. अत्र 'अणोऽपवादः'—इत्यधिकं क्वचित्।

# अथ चतुर्थाध्याये तृतीयः पादः

## युष्मदस्मदोरन्यतरस्यां खञ्च ॥ १ ॥

देशाधिकारो निवृत्तः। युष्मदस्मदोः खञ् प्रत्ययो भवति शैषिकः। चकाराच्छश्च। अन्यतरस्यांग्रहणाद् यथाप्राप्तम्। तदेते त्रयः प्रत्यया भवन्ति, तत्र वैषम्याद्यथासंख्यं न भवति। त्यदादित्वाद् वृद्धसंज्ञकयोर्युष्मदस्मदोश्छे प्राप्ते प्रत्येकं प्रत्ययत्रयं विधीयते — यौष्माकीणः, आस्माकीनः। युष्मदीयः, अस्मदीयः। यौष्माकः, आस्माकः ॥

पदमञ्जरी

*युष्मदस्मदोरन्यतरस्यां खञ्च* ॥ षष्ठीनिर्देश उत्तरार्थः। *एते त्रयः प्रत्यया भवन्तीति*। ननु चान्यतरस्यांग्रहणेन खञ्छयोः पक्षेऽनुत्पत्तिः प्रतिपाद्यते, तदनुत्पत्तावपवादाभावात्स्वशास्त्रेण 'प्राग्दीव्यतः' इत्यनेनैवाण् भवति, तत्कुतोऽनेन प्रत्ययत्रयस्य विधानम्, छोऽपि तर्हि नैवानेन विधीयते, तस्यापि हि चकारोऽभ्यनुज्ञापक एव — यद्यन्योऽपि कश्चित्प्राप्नोति सोऽपि भवतीति, ततश्छोऽपि स्वशास्त्रेण 'वृद्धाच्छः' इत्यनेनैव भवति, एक एव त्वपूर्वः खञ् विधीयते। अथ यस्य प्रवृत्तावस्य तात्पर्यं स सर्वोऽनेन विधीयत इति छस्यानेन विधानम्। यद्येवम्, अणोऽप्यनेनैव विधानम्, न खञ्छयोरनुत्पत्तिमात्रेऽन्यतरस्यांग्रहणस्य तात्पर्यम्, तस्य महाविभाषयैव सिद्धत्वात्, किं तर्हि? अणः प्रवृत्तावपि। तस्मात्तात्पर्यतस्त्रय एते प्रत्यया भवन्तीत्युक्तम्, प्रत्येकं प्रत्ययत्रयं विधीयत इति च। तत्र खञ्प्रत्ययो भवतीत्यनेन खञ एवापूर्वस्य विधानमिति दर्शितम्। अन्यतरस्यांग्रहणाद्यथाप्राप्तं चेत्यनेनाणोऽभ्यनुज्ञानम्। त्यदादित्वाद्युष्मदस्मदोश्छे प्राप्त इत्यनेनापि छस्याभ्यनुज्ञानम्। भाष्ये तु योगविभागेन यथासंख्याभावः प्रतिपादितः—'युष्मदस्मदोः' इत्येको योगः, अत्र 'गर्तोत्तरपदाच्छः' इत्यतश्छोऽनुवर्तते; ततः 'खञ्च' इति द्वितीयो योगः ॥

न्यासः

युष्मदस्मदोरन्यतरस्यां खञ्च ॥ तत्र वैषम्याद् यथासंख्यं न भवतीति। द्वे हि प्रकृती, प्रत्ययाश्च त्रय इति वैषम्यम्। ननु च खञ्छावेवानेन विधीयेते, अण्प्रत्ययस्त्वन्यतरस्यांग्रहणेन यथाप्राप्तस्याभ्यनुज्ञाने कृते शास्त्रादेव भवति, तत् कुतो वैषम्यम्? सोऽपि छोऽपि तर्हि तेनैवानेन विधीयते, तस्यापि हि चकारोऽभ्यनुज्ञापक एव।

## तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥

तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते, न चकारानुकृष्टश्छः। तस्मिन्खञि अणि च युष्मदस्मदोर्यथासंख्यं युष्माक, अस्माक – इत्येतावादेशौ भवतः।

निमित्तयोरादेशौ प्रति यथासंख्यं कस्मान्न भवति ? योगविभागः करिष्यते – 'तस्मिन्', खञि युष्मदस्मदोर्युष्माकास्माकौ भवतः। ततः

पदमञ्जरी

*तस्मिन्नणि च युष्माकास्माकौ* ॥ *साक्षादिति*। प्रत्यक्षेण विहितः, स्वरूपोपादानेन विहित इत्यर्थः। हेतुगर्भं चेदं विशेषणम्—यतः साक्षाद्विहितः ततः खञेव निर्दिश्यत इति। तस्मिन्नियुक्ते तत्रैव झटिति प्रत्ययो भवति, न चानुकृष्टश्छ इति। चकारो हि समीपवर्तिनः खञः सहायतामात्रमभिधाय निवर्तते। तत्र सहायस्यानिर्देशात्प्रकृतान्वेषणम्, तत्र 'गर्तोत्तरपदाच्छः' इति यावदन्वेषणे छस्य प्रतीतिश्चिरेण भवति, तेन च नासौ प्रत्यवमर्शार्हः। यदा तु यथासंख्यनिरासाय पूर्वसूत्रे योगविभागस्तदा नैव चकारेण छस्यानुकर्षणमिति न तस्य परामर्शशङ्का।

*निमित्तयोरित्यादि*। द्वे हि निमित्ते—खञणौ, निमित्तिनावपि द्वावेव—आदेशौ, ततश्च साम्याद्यथासंख्येन भवितव्यमिति मत्वा प्रश्नः। *योगविभागः करिष्यत इति*। 'खञणोर्युष्माकास्माकौ' इति वक्तव्ये 'तस्मिन्नणि च' इति

न्यासः

स्वशास्त्रादेव 'वृद्धाच्छः' इत्येतस्माद् भवतीति? एवमपि वैषम्यम्। सर्वथा नास्ति यथासंख्यप्रसङ्गः।

तस्मिन्नणि च युष्माकास्माकौ ॥ तस्मिन्निति साक्षाद् विहितः खञ् निर्दिश्यत इति। तस्मिन्नियुक्ते प्रागेव तत्रैव प्रतीत्युत्पत्तेः। तत्र पुनः कारणं साक्षाद् विहितत्वम्, आनन्तर्याच्च खञः, तस्यैव निर्देशो युक्तः। ननु च पूर्वसूत्रे खञ्चेति चकारेण च्छोऽनुकृष्यते, वाचकदेशश्च वाच्य इति खञश्छ एवानन्तरो भवति। स्यादनन्तरो यदि चकारस्तस्य वाचकः स्यात्, न चासौ तस्य वाचकः, स हि समीपवर्तिनः पदार्थान्तरस्य सहायतामात्रमाचष्टे खञः सहायतामाख्याय निवृत्ते चकारे सा सहायता प्रकरणाच् छेनैव विज्ञायते। तस्माच्चकारश्छस्य वाचको न भवतीति नासौ तादृशः।

तत्कृतयोस्तस्यानन्तर्यनिमित्तयोरित्यादि। द्वे हि निमित्ते—खञणौ, निमित्तिनावपि

'अणि च' इति। यौष्माकीणः, आस्माकीनः। यौष्माकः, आस्माकः।

तस्मिन्नणि चेति किम्? युष्मदीयः। अस्मदीयः॥

तवकममकावेकवचने॥ ३॥

एकवचनपरयोर्युष्मदस्मदोस्तवक, ममक – इत्येतावादेशौ भवतो यथासंख्यं तस्मिन्खञि अणि च परतः। निमित्तयोस्तु यथासंख्यं पूर्ववदेव न भवति।

ननु च 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधादेकवचनपरता

पदमञ्जरी

वचनाच्चकारेण वाक्यभेदस्य सूचनादादेशयोर्निमित्ताभ्यां प्रत्येकमनभिसम्बन्ध इत्यर्थः॥

*तवकममकावेकवचने*॥ 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैकवचनस्य ग्रहणम्', तस्य च कृताकृतप्रसङ्गित्वेन 'सुपो धातुप्रातिपदिकयोः' इति लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलक्षणेन समर्थयितव्या। तदपि प्रत्ययलक्षणं विघटयन्नाह—ननु *चेति*। *वचनादिति*। यदि पुनरेकवचनपरत्वे-

न्यासः

द्वावेवादेशौ, ततः समानत्वाद् यथासंख्येनात्र भवितव्यमिति मन्यमानस्य प्रश्नः। योगविभाग इत्यादि परिहारः।

युष्मदीयः, अस्मदीय इति। 'यदि तस्मिन्नणि च' इति नोच्यते ततो यथा पूर्वसूत्रविहितयोः खञणोरिमावादेशौ भवतस्तथा च्छेऽपि स्याताम्। तस्मिंस्तु सति न भवतः॥

तवकममकावेकवचने॥ पूर्वेण युष्माकास्माकयोः प्राप्तयोः 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोरेकवचने तवकममकावादेशौ विधीयेते। एकवचनपरयोरिति। एकवचनं परं याभ्यां ते तयोक्ते। निमित्तयोस्त्वित्यादि। यथा पूर्व एव सूत्रे योगविभागान्निमित्तयोरादेशौ प्रति यथासंख्यत्वं न भवति, तथेहापि न भविष्यति। तस्य च यथासंख्याभावस्य पूर्वसूत्र एव योगविभागो हेतुः। तेन हि पूर्वत्र निमित्ते निवृत्ते यथासंख्ये कृते तस्मादिहाप्यनुवर्तते। ते निवृत्ते यथासंख्ये एवानुवर्तेते; अजहद्धर्मत्वादधिकाराणाम्। तस्मादिहापि पूर्वकयोगविभागाद् यथासंख्याभावः।

इह सर्वविधिभ्यो लुग्विधिर्बलवानित्येकवचनस्य लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलोपलक्षणेन समर्थयितव्या। तदपि प्रत्ययलोपलक्षणं प्रतिषेधयितुमाह—ननु चेत्यादि। वचनादित्यादि परिहारः। यदि हि प्रत्ययलोपलक्षणं

युष्मदस्मदोर्न संभवति ? वचनात्प्रत्ययलक्षणं भविष्यति[1]।

अथ वा – नैवेदं प्रत्ययलक्षणम्, किं तर्हि ? अन्वर्थग्रहणम्। एकवचने युष्मदस्मदी एकस्यार्थस्य वाचके तवकममकावादेशौ प्रतिपद्येते इति सूत्रार्थः। तावकीनः, मामकीनः। तावकः, मामकः।

तस्मिन्नणि चेत्येव – त्वदीयः, मदीयः॥

अर्धाद्यत्॥ ४॥

पदमञ्जरी

नाण्खञौ विशेष्येयाताम्, को दोषः ? इह च स्याताम्—युष्माकं छात्त्रो यौष्माकीणः, आस्माकीन इतिः, इह च न स्याताम्—तव छात्त्रास्तावकीनाः, मामकीना इति। तस्मात्पूर्वसूत्रे खञण्परतया विशेष्येते—युष्मदस्मदी, एकवचनपरतयापि ते एवात्र विशेष्येते, ततश्च वचनाद् आस्माकीनः—प्रत्ययलक्षणं भवतीत्येषैव गतिः।

*अन्वर्थग्रहणमिति*। एकोऽर्थ उच्यते येन तदेकवचनम्। अत्र च पक्षे 'एकवचने' इति प्रथमाद्विवचनान्तम्, न सप्तम्यन्तम्।

न्यासः

न स्यादिदं वचनमपार्थकं स्यादित्यभिप्रायः। ननु च यस्यैकवचनपरता संभवति तस्य विशेषणार्थमेकवचनं स्यात्, कस्यैकवचनपरता सम्भवति ? निमित्तस्य खञादेः। निमित्ते त्वेकवचनपरत्वेन विशेष्यमाणे सतीहैव स्याताम्—यौष्माकः पुत्र; आस्माकः पुत्रः; अत्र ह्येकवचनपरत्वम्, तद्धि तस्योपपद्यते; इह च न स्याताम्— तावकाः पुत्राः, मामकाः पुत्रा इति, न ह्यत्र निमित्तस्यैकवचनपरता सम्भवतीति ? नैतदस्ति; युष्मदस्मदी पूर्वसूत्रे विशेष्ये अभूताम्। तथा हि—खञ्यणि च परतो युष्मदस्मदोरिति खञण्परता तयोः, अत एव युष्मदस्मदी विशेष्येते। तदिहापि तथाभूते एवानुवर्तेते; अबद्धधर्मत्वादधिकाराणामिति तयोरेवैकवचनपरत्वं विशेषणं युक्तम्। अथ वा—तवकममकयोर्विधेयत्वेन प्राधान्यात् तयोरेवैतद् विशेषणं युक्तम्। तयोरेव तद् विशेषणं भवत् स्थानिद्वारकमेव भवति। यदि स्थानिनोरेकवचनपरता,एवमादेशौ स्थानिवत्त्वादेकवचनपरौ भवतः। तदनेनापि प्रकारेण युष्मदस्मदोरेकवचनविशेषणं युक्तम्, न तु कथञ्चिन्निमित्तस्य खञादेः।

अथ वेत्यादि। पूर्वं पारिभाषिकमेकवचनमाश्रित्य व्याख्यातम्, इदानीं त्वर्थमाश्रित्य व्याचष्टे—एकोऽर्थ उच्यते येन तदेकवचनम्। अत्र तु व्याख्याने 'एकवचने' इति नेदं सप्तम्येकवचनम्। किं तर्हि ? प्रथमाद्विवचनान्तम्॥

---

१. 'वचनात्प्रत्ययलक्षणप्रतिषेधो न संभवति'–इति पाठा०।

अर्द्धशब्दाद् यत् प्रत्ययो भवति शैषिकः। अणोऽपवादः। अर्द्ध्यम्।
* सपूर्वपदाट्ठञ्वक्तव्यः *। बालेयार्द्धिकम्। गौतमार्द्धिकम् ॥

परावराधमोत्तमपूर्वाच्च ॥ ५ ॥

पर, अवर, अधम, उत्तम – इत्येवम्पूर्वाच्चार्धाद्यत् प्रत्ययो भवति शैषिकः। परार्द्ध्यम्। अवरार्द्ध्यम्। अधमार्द्ध्यम्। उत्तमार्द्ध्यम्।

पूर्वग्रहणं किम्, 'परावराधमोत्तमेभ्यः' इत्येवोच्यते, अर्धादिति वर्त्तते, तस्य तत्पूर्वता विज्ञास्यते? परावरशब्दावदिग्ग्रहणावपि स्तः – परं सुखम्, अवरं सुखमिति। तत्र कृतार्थत्वाद् दिक्छब्दपक्षे परेण ठञ्यतौ स्याताम्। अस्मात्पूर्वग्रहणाद्यत्प्रत्ययो भवति–परार्द्ध्यम्, अवरार्द्ध्यमिति।

पदमञ्जरी

*अर्द्धाद्यत्* ॥ बल्यर्थं वस्तु बालेयम्, तस्यार्धम् = एकदेशः, तत्र भवं बालेयार्द्धिकम् ॥

*परावराधमोत्तमपूर्वाच्च* ॥ 'सपूर्वपदाट्ठञ् वक्तव्यः' इत्यौपसङ्ख्यानिके ठञि प्राप्ते वचनम्।

*अर्द्धादिति वर्तते इति*। ततश्च परावराधमोत्तमेभ्यः परो योऽर्द्धशब्द इत्येवं विशेषणसामर्थ्यादेवार्द्धशब्दस्य परावरादिपूर्वता विज्ञास्यते, तत्किं पूर्वग्रहणेनेति? एवमनन्तरोक्तस्य चोद्यस्यैवैतत्समर्थनं परिहृति—*परावरशब्दाविति*। *अस्मात्तु पूर्वग्रहणाद्यत्प्रत्यय एव भवतीति*। पूर्वविप्रतिषेधसूचनद्वारेणेति भावः।

न्यासः

अर्धाद् यत् ॥ परावराधमोत्तमपूर्वाच्च ॥ 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तदन्तविधिप्रतिषेधात् पूर्वेणाप्राप्तावयमारम्भः। तत्राधमोत्तमशब्दौ निन्दाप्रशंसावचनौ, तत्पूर्वादणि प्राप्ते सत्ययमारम्भः। परावरशब्दौ यावदिक्छब्दौ तत्पूर्वादप्यण्येव। यौ तु दिक्शब्दौ तत्पूर्वादुत्तरसूत्रेण ठञि यति च। कथं पुनः 'परावराधमोत्तमेभ्यः' इत्युच्यमाने परावरादिपूर्वता शक्या विज्ञातुम्? इत्याह—अर्धादिति वर्तत इत्यादि। इह हि पूर्वसूत्रादर्धादित्यनुवर्तते। तत्र परावराधमोत्तमेभ्यः परो योऽर्द्धशब्दः—इत्येवं विशेष्यमाणेऽर्द्धशब्दसामर्थ्यादेव तस्य परावरादिपूर्वता विज्ञास्यते, तत् किं पूर्वग्रहणेन? तत्रेति। परावरयोरदिक्शब्दयोः। परेणेति। उत्तरसूत्रेण ठञ्यतौ स्यातामिति। यदि पूर्वग्रहणं न क्रियेतेत्यभिप्रायः। अस्मादित्यादि। परावरादिपूर्वादेव यथा

## दिक्पूर्वपदाट्ठञ्च ॥ ६ ॥

दिक्पूर्वपदादर्धान्तात्प्रादिपदिकात् ठञ् प्रत्ययो भवति, चकाराद्यच्च शैषिकः। अणोऽपवादः। पूर्वार्द्धयम्, पौर्वार्द्धिकम्। दक्षिणार्द्धयम्, दाक्षिणार्द्धिकम्।

पदग्रहणं स्वरूपविधिनिवारणार्थम् ॥

## ग्रामजनपदैकदेशादञ्ठञौ ॥ ७ ॥

'दिक्पूर्वपदाद्' इत्येव। ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च प्रातिपदिकाद् दिक्पूर्वपदादर्द्धान्तादञ्ठञौ प्रत्ययौ भवतः, शैषिकौ यतोऽपवादौ। इमे खल्वस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः। दाक्षिणार्धाः, दाक्षिणार्धिकाः ॥

### पदमञ्जरी

*दिक्पूर्वपदाट्ठञ्च* ॥ *अणोऽपवाद इति*। सौत्रीं प्राप्तिमभिप्रेत्यैतदुक्तम्, 'सपूर्वपदाट्ठञ् वक्तव्यः' इत्युक्तत्वात्।

*पदग्रहणमित्यादि*। 'दिक्पूर्वात्' इत्युच्यमाने स्वरूपविधिः स्यात्, ततश्च दिगर्धे जात इत्यत्रैव स्यात्। पदग्रहणे तु सति—पद्यतेऽनेनेति पदम्, दिशः पदं पूर्वमस्मादिति निपातनात्समासः ॥

*ग्रामजनपदैकदेशादञ्ठञौ* ॥ *पौर्वार्द्धा इति*। ग्रामस्य पूर्वस्मिन्नर्द्धे भव इति तद्धितार्थे समासः, ततः प्रत्ययः। यद्यप्यर्द्धशब्दो ग्राममपेक्षते, तथाप्यस्य नित्यसापेक्षत्वात्प्रधानत्वाच्च वृत्तिद्वयमप्यविरुद्धम्—समासवृत्तिः, तद्धितवृत्तिश्च।

### न्यासः

स्यादित्येतदेव हि पूर्वग्रहणस्य प्रयोजनम्। तेन हि पूर्वं कार्यं भवति, न परमित्येषोऽर्थः सूच्यते। तस्मात् पूर्वग्रहणाद् दिक्शब्दपक्षेऽपि परावरपूर्वाद् यदेव भवति ॥

दिक्पूर्वपदाट् ठञ्च ॥ पौर्वार्द्धिकमिति। पूर्वस्मिन्नर्द्धे जातः। 'तद्धितार्थे' इत्यादिना समासः, ततस्तद्धितः।

अथ पदग्रहणं किमर्थम्, दिक्पूर्वादित्येवोच्येत? इत्याह—पदग्रहणमित्यादि। असति हि पदग्रहणे स्वरूपविधिः स्यात्, ततश्च दिगर्द्धे जात इत्यत्रैव स्यात्। पदग्रहणे तु सति यन्नाम किञ्चिद् दिक्सम्बन्धि पूर्वपदं तस्य ग्रहणमुपपन्नं भवति ॥

ग्रामजनपदैकदेशादञ्ठञौ ॥ यतोऽपवादाविति। पूर्वेण प्राप्तस्य। पौर्वार्धा इति। पूर्ववत् समासः। नन्वत्र पूर्वस्मिन्नर्द्धे ग्रामस्येति ग्राममपेक्षमाणस्यार्धशब्दस्या-

मध्यान्मः ॥ ८ ॥

मध्यशब्दान्मः प्रत्ययो भवति शैषिकः । अणोऽपवादः । मध्यमः ॥

* आदेश्चेति वक्तव्यम् * । आदिमः ।

* अवोऽधसोर्लोपश्च * । अवमम् । अधमम् ॥

अ सांप्रतिके ॥ ९ ॥

अकारः प्रत्ययो भवति मध्यशब्दात्सांप्रतिके जातादौ प्रत्ययार्थे । मस्यापवादः । सांप्रतिकम्=न्याय्यम्, युक्तम्, उचितम्, सममुच्यते । नातिदीर्घं नातिह्रस्वं मध्यं काष्ठम् । नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः । मध्या स्त्री ॥

द्वीपादनुसमुद्रं यञ् ॥ १० ॥

समुद्रसमीपे यो द्वीपस्तस्माद् यञ् प्रत्ययो भवति शैषिकः ।

पदमञ्जरी

ठञ्ग्रहणं किमर्थम्, नाञ्चेत्येवोच्येत ? न चैवमुच्यमाने यतोऽपि समुच्चयप्रसङ्गः; पूर्वसूत्रे चानुकृष्टत्वात् । तस्माद्विस्पष्टार्थं ठञ्ग्रहणम् ॥

अ साम्प्रतिके ॥ साम्प्रतिकं युक्तं न्याय्यमुचितं सममुच्यत इति । कस्यचित्कश्चित्प्रसिद्ध इत्यनेकशब्दोपादानम् । सम्प्रतिशब्द इदानीमित्यत्रार्थे प्रसिद्धोऽपि न्याय्येऽपि वर्तते । दृश्यते हि—'अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथ वा एष सम्प्रति यज्ञो यत्पञ्चरात्र इति', न न्यूनो नातिरिक्तः, सम इत्यर्थः । स च प्रज्ञादौ पठ्यते । तेन साम्प्रतम्, सम्प्रतीति च पर्यायौ ॥

न्यासः

सामर्थ्यात् समासो नोपपद्यते ? नैष दोष; प्रधानमत्राढं भवति । प्रधानस्य सापेक्षस्यापि समासः— इत्येतद् 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यत्र ज्ञापितम् ॥

मध्यान्मः ॥ मध्यशब्दो यो गहादिषु पृथिवीमध्यवचनः मध्यमध्यमञ्चाण् चरणे' इति पठ्यते, ततस्तु तत एव विधिर्भवति । यस्त्वन्यस्तस्येह ग्रहणं वेदितव्यम् ॥

अ साम्प्रतिके ॥ न्याय्यं युक्तमित्यादिभिः पर्यायैः साम्प्रतिकशब्दार्थमाचष्टे—साम्प्रतिकं न्याय्यमुच्यते । तथा हि प्रयोगो दृश्यते न बाह्यं प्राप्तमित्येवं वर्तितव्यमसाम्प्रतमिति । अत्र न्याय्यः प्रतिषेधः प्रतीयते । साम्प्रतमेव साम्प्रतिकम् विनयादेराकृतिगणत्वात् 'विनयादिभ्यश्च' इति ठक् ॥

काशि० ३ : ४१

कच्छादिपाठाद् अणो मनुष्यवुञश्चापवादः । द्वैप्यम् । द्वैप्यं भवन्तोऽनुचरन्ति चक्रम् ।

अनुसमुद्रमिति किम् ? द्वैपकम् । द्वैपमन्यत् ॥

## कालाट्ठञ् ॥ ११ ॥

कालविशेषवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः । अणोऽपवादः । वृद्धात् तु छं परत्वाद्बाधते । मासिकः । आर्द्धमासिकः । सांवत्सरिकः ।

यथाकथञ्चिद् गुणवृत्त्यापि काले वर्त्तमानात्प्रत्यय इष्यते । कादम्ब-

### पदमञ्जरी

*द्वीपादनुसमुद्रं यञ्* ॥ *अनुसमुद्रमिति* । 'अनुर्यत्समया' इत्यव्ययीभावः । सप्तम्यन्तं चैतद्, तद् द्वीपस्य विशेषणम्, तदाह—*समुद्रसमीपे यो द्वीप इति* ॥

*कालट्ठञ्* ॥ *कालविशेषवाचिन इति* । स्वरूपस्य च पर्यायाणां च ग्रहणं न भवति; सन्धिवेलादिसूत्रेण सन्धिवेलात्रयोदशीप्रभृतिभ्योऽवृद्धेभ्योऽण्विधानात् । तद्धि ठञो बाधनार्थं:, अर्थग्रहणे च तेभ्यष्ठञः प्रसङ्गः ।

इह 'गौणमुख्ययोर्मुख्ये सम्प्रत्ययः' इति न्यायान्मुख्यया वृत्त्या ये काले वर्तन्ते मासोऽर्द्धमास इति, तत एवायं प्रत्ययः स्याद्; न तु गौणवृत्त्या कालवृत्तेः, कदम्बपुष्पसाहचर्यात्कदम्ब कालः, व्रीहिपलालसाहचर्याद् व्रीहिपलालं काल इत्यादेरित्याशङ्क्याह—*यथाकथञ्चिदिति* । येन केनचित्प्रकारेण । एतदेव स्पष्टयति—*गुणवृत्त्यापीति* । परत्र परशब्दप्रवृत्तेर्यन्निबन्धनं स गुणः, तन्निबन्धना

### न्यासः

द्वीपादनुसमुद्रं यञ् ॥ अनुसमुद्रमिति । समुद्रं समयाऽनुसमुद्रम् । 'अनुर्यत्समया' इत्यव्ययीभावः । अणो मनुष्यवुञश्चापवाद इति । 'कच्छादिभ्यश्च' इति प्राप्तस्याणः । 'मनुष्यतत्स्थयोर्वुञ्' इति प्राप्तस्य वुञः ॥

कालाट् ठञ् ॥ कालविशेषवाचिन इति । अनेन कालादित्यर्थग्रहणम्, न स्वरूपस्येति । यदि हि स्वरूपग्रहणं स्यात् सन्धिवेलादिसूत्रेणाणो विधानमनर्थकं स्यात्; 'प्राग्दीव्यतोऽण्' इत्यनेनैव सिद्धत्वात् । इह त्वर्थग्रहणे ठञ्बाधनार्थत्वात् तस्यानर्थक्यं भवति । तस्मादर्थग्रहणमेतत् ।

इह केचिच्छब्दा मुख्यया वृत्त्या काले वर्तन्ते—मासोऽर्द्धमास इति, केचिद् गौण्या वृत्त्या—कदम्बपुष्पसाहचर्यात् कालः कदम्बपुष्पः, व्रीहिपलालेन साहचर्यात् कालो व्रीहिपलाल इति; तेषामिहोभयेषामपि ग्रहणम् । अत एवाह—यथा कथञ्चिदिति । येन केनचित् प्रकारेणेत्यर्थः । गुणवृत्त्यापीति । अनेन यथाकथञ्चिदित्यस्यार्थं विस्पष्टी-

पुष्पिकम् । व्रैहिपलालिकम् । 'तत्र जातः' इति प्रागतः कालाधिकारः ॥

श्राद्धे शरदः ॥ १२ ॥

शरच्छब्दात् ठञ् प्रत्ययो भवति श्राद्धेऽभिधेये शैषिकः । ऋत्वणोऽपवादः । 'श्राद्धे' इति च कर्म गृह्यते, न श्रद्धावान्पुरुषः; अनभिधानात् । शारदिकं श्राद्धम् । शारदमन्यत् ॥

विभाषा रोगातपयोः ॥ १३ ॥

'शरदः' इत्येव । रोगे, आतपे चाभिधेये शरच्छब्दाट्ठञ् प्रत्ययो वा भवति शैषिकः । ऋत्वणोऽपवादः । शारदिको रोगः । शारदिक आतपः । शारदो रोगः । शारद आतपः ।

रोगातपयोरिति किम् ? शारदं दधि ॥

पदमञ्जरी

वृत्तिर्गुणवृत्तिः । एतच्च सन्धिवेलादिसूत्रेऽनेन कालग्रहणेन नक्षत्राणि यद्विशिनष्टि ततो लभ्यते । न हि मुख्यार्थः कालशब्दोऽस्ति नक्षत्राणां सम्भवति । पुष्पादिसमीपस्थेन हि चन्द्रमसा योगाल्लक्षितलक्षणया पुष्पादिशब्दानां काले वृत्तिः । सैव च 'लुबविशेषे' इति लुब्विधानेनाप्यन्वाख्यायते पौषादिनिवृत्त्यर्थम्, न त्वेतावता कालस्तेषां मुख्योऽर्थः ॥

*श्राद्धे शरदः* ॥ *श्राद्ध इति कर्म गृह्यते इति* । श्रद्धास्मिन्विद्यत इति 'प्रज्ञाश्रद्धार्चा' इति मत्वर्थीयोऽणः, श्रद्धया सम्पाद्यं पित्र्यं कर्म श्राद्धशब्देन उच्यत इत्यर्थः । *न श्रद्धावान् पुरुष इति* । यदा स एव णः षष्ठ्यर्थे भवति तदा पुरुषवृत्तिः श्राद्धशब्दः । कथं पुनः शब्दसाधारण्येऽप्ययं विशेषो लभ्यते ? इत्याह—*अनभिधानादिति* । *शारदिकं श्राद्धमिति* । यद्यत्र विहितं तत्तत्र भवमिति भवे प्रत्ययः ॥

न्यासः

करोति । औपचारिकी वृत्तिः, अप्रधानभूता वृत्तिरित्यर्थः । अपिशब्दान्मुख्ययापि वृत्त्या । ननु च मुख्ये सति गौणस्य ग्रहणमयुक्तम्, गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययात् ? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—गौणस्यापि कालस्य ग्रहणमिति, यदयं सन्धिवेलादिसूत्रे प्रकृतेन कालग्रहणेन नक्षत्राणि विशिनष्टि । न हि मुख्यार्थः कालो नक्षत्राणां विशेषणमुपपद्यते; तेषु मुख्यस्य कालत्वस्यासम्भवात् ॥

*श्राद्धे शरदः* ॥ ऋत्वणोऽपवाद इति । सन्धिवेलादिसूत्रेण प्राप्तस्य श्राद्ध इति न कर्म गृह्यत इति । क्रियाविशेषः कश्चित् शास्त्रोक्तेन विधिना साध्यः श्राद्धग्रहणेन

## निशाप्रदोषाभ्यां च ॥ १४ ॥

निशाप्रदोषशब्दाभ्यां विभाषा ठञ् प्रत्ययो भवति शैषिकः। 'कालाट्ठञ्' इति नित्ये ठञि प्राप्ते विकल्प उच्यते। नैशम्, नैशिकम्। प्रादोषम्, प्रादोषिकम् ॥

## श्वसस्तुट् च ॥ १५ ॥

'विभाषा' इत्येव। श्वःशब्दाद्विभाषा ठञ् प्रत्ययो भवति, तस्य च तुडागमो भवति। त्यप्प्रत्ययोऽप्यतो विहितः 'ऐषमोह्यःश्वसोऽन्यतरस्याम्' इति; एताभ्यां मुक्ते ट्युट्युलावपि भवतः – शौवस्तिकः, श्वस्त्यः, श्वस्तनः ॥

पदमञ्जरी

श्वसस्तुट् च ॥ *तस्य चेति*। ठञः, न तु श्वःशब्दस्य। कुत एतत्? ठञो विधेयत्वेन प्राधान्यात्। स च तुडागम इकादेशे कृते भवतीति वेदितव्यम्। ननु चान्तरङ्गत्वादिकादेशात्प्राक् ठञस्तुट् प्राप्नोति, इकादेशस्त्वङ्गाधिकारे विधानादङ्गसंज्ञायामभिनिर्वृत्तायां पश्चाद् भवन्बहिरङ्गः,तुटि च कृते प्रत्ययादेष्ठस्येकादेशविधानाद्यथा कर्मठ इत्यत्र न भवति एवमत्रापि न स्यात्; यदि पुनरयं तुक् पूर्वान्तः क्रियते; नैवं शक्यम्, 'इसुसुक्तान्तात्कः' इति कादेशः स्यात्, तस्मादस्तु परादिरेव। कथमिकादेशः? ज्ञापकात्सिद्धम्, यदयं वुञ्छणादिषु ठचश्चित्करणं करोति, तज्ज्ञापयति—अन्तरङ्गेभ्योऽपि पूर्वमिकादेश एव भवतीति। यदि न स्यात्, प्रत्ययसंज्ञासन्नियोगशिष्टे प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वं स्यात्। *ट्युट्युलावपि भवत इति*। 'सायंचिरम्' इत्यादिना

न्यासः

गृह्यते, न तु श्रद्धावान् पुरुषः। कुत् एतत्? तस्य प्रत्ययेनानभिधानात्। शारदिकशब्देन ह्यभिधानशक्तिस्वाभाव्यात् कर्मण एवाभिधानम्, न पुरुषस्य ॥

विभाषा रोगातपयोः ॥ निशाप्रदोषाभ्याञ्च ॥ श्वसतुट् च ॥ तस्य चेति। ठञः। कुत एतत्? तस्य विधीयमानतया प्राधान्यात्, प्रधाने च कार्यसम्प्रत्ययात्। स च तुडागम इकादेशे कृते भवतीति वेदितव्यम्। ननु सन्नियोगशिष्टत्वात् तुटस्तेनैव तावद् भवितव्यम्, पश्चादङ्गसंज्ञायामभिनिर्वृत्तायामिकादेशेन? नैतदस्ति; उपदेशावस्थायामेव हीकादेशे कृते न भवितव्यम्, ज्ञापकात्। यदयम् 'वुञ्छण्कठच्' इति प्रत्ययस्वरार्थमनुबन्धं चकारं करोति। प्रत्ययसंज्ञायाः सन्नियोगाद्धि प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वम्, किञ्चित्करणेन? तस्माच्चित्करणाद् विज्ञायते—

## सन्धिवेलाधृतुनक्षत्रेभ्योऽण् ॥ १६ ॥

'कालात्' इत्येव सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण्प्रत्ययो भवति शैषिकः । ठञोऽपवादः । अण्ग्रहणं वृद्धाच्छस्य बाधनार्थम् । सन्धिवेलादिभ्यस्तावत् – सान्धिवेलम् । सान्ध्यम् । ऋतुभ्यः– ग्रैष्मम् । शैशिरम् । नक्षत्रेभ्यः – तैषम् । पौषम् ।

पदमञ्जरी

श्वःशब्दोऽव्ययम्, कालवाची चेति कृत्वा । *शौवस्तिकमिति* । द्वारादित्वाद् वृद्धिप्रतिषेधः, ऐजागमश्च ॥

*सन्धिवेलाधृतुनक्षत्रेभ्योऽण् ॥ अण्ग्रहणं वृद्धाच्छस्य बाधनार्थमिति* । असत्यण्ग्रहणे सन्धिवेलादिभ्यो यथाविहितमित्युच्यमाने यद्यप्यारम्भसामर्थ्यात्कालाट्ठञ् न भवति; तथापि सन्धिवेलादिषु पठितात्पौर्णमासीशब्दात्स्वात्यादेश्च वृद्धाच्छः स्याद्, वचनं तु कालाट्ठञो बाधनार्थं स्यात् । तस्मादण्ग्रहणं कर्तव्यं वृद्धाच्छस्य बाधनार्थम् । *सौवातमिति* । 'अत सातत्यगमने' सुपूर्वात् 'अज्यतिभ्यां च' इतीण् प्रत्ययः, स्वात्या युक्तः काल इत्यण्, तस्य 'लुबविशेषे' इति लुप्, ततो भवादावर्थेऽनेनाण्, 'न य्वाभ्याम्' इति वृद्धिप्रतिषेधः, ऐजागमश्च । जातार्थे तु 'श्रविष्ठाफल्गुनी' इति लुकि स्वातिरिति भवति । *तैषमिति* । अत्रापि जातार्थे पूर्ववल्लुका भवितव्यमिति भवादौ प्रत्ययः, 'तिष्यपुष्ययोर्नक्षत्राणि यलोपः'

न्यासः

सन्नियोगशिष्टेभ्योऽपि पूर्वमिकादेशो भवति । तेन ठग्ग्रहणान्यङ्गसंज्ञाभूतानीकमेव बोधयन्तीति तुडपि तस्यैव भविष्यतीति विज्ञायते । एताभ्यामित्यादि । श्वःशब्दोऽयमव्ययं कालवाची । तेन यदा ठञ्त्यपौ न भवतः, तदा 'सायञ्चिरम्' इत्यादिना ट्युट्युलौ अपि भवतः ॥

सन्धिवेलाधृतुनक्षत्रेभ्योऽण् ॥ ठञोऽपवाद इति । 'कालाट्ठञ्' इति प्राप्तस्य । अथाण्ग्रहणं किमर्थम्, यथाविहितमेवोच्येत, तेनैवमुच्यमाने न प्राप्नोतीत्याशङ्कनीयम्, यदि ठञ् स्यात् पुनर्वचनमनर्थकं स्यात्, तस्माद् वचनप्रामाण्याद् यो विहितो न स प्राप्नोति, ठञ्प्रत्ययेन बाधितत्वात् स एव भविष्यति, स चाण् ! इत्यत आह – अण्ग्रहणमित्यादि । सन्धिवेलादिषु पौर्णमासीशब्दो वृद्धः पठ्यते । स्वातिरिति नक्षत्रशब्दो वृद्धोऽस्ति । तत्र यद्यण्ग्रहणं न क्रियेत, ताभ्यां परत्वाट् ठञा छे बाधिते पुनर्वचनाच्छ एव स्यात् । तस्मात् तमपि बाधित्वा वृद्धादणेव यथा स्यादित्येवमर्थं पुनरण्ग्रहणम् । तैषम्, पौषमिति । तिष्यपुष्यशब्दाभ्यां 'नक्षत्रेण युक्तः कालः' इत्यण्, तस्याणो 'लुबविशेषे' इति लुप्, ततोऽनेनाण्, 'तिष्यपुष्ययोर्नक्षत्राणि' इति यलोपः ।

सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पञ्चदशी । पौर्णमासी । प्रतिपत् ॥

* संवत्सरात्फलपर्वणोः * । सांवत्सरं फलम् । सांवत्सरं पर्व ॥

प्रावृष एण्यः ॥ १७ ॥

प्रावृष्शब्दादेण्यः प्रत्ययो भवति शैषिकः । ऋत्वणोऽपवादः । प्रावृषेण्यो बलाहकः ॥

वर्षाभ्यष्ठक् ॥ १८ ॥

वर्षाशब्दाट्ठक् प्रत्ययो भवति शैषिकः । ऋत्वणोऽपवादः । वार्षिकं वासः । वार्षिकमनुलेपनम् ॥

छन्दसि ठञ् ॥ १९ ॥

पदमञ्जरी

इति यलोपः । *संवत्सरात्फलपर्वणोरिति* । सांवत्सरं फलं पर्व वा, सांवत्सरिकमन्यत् ॥

*प्रावृष एण्यः* ॥ प्रवर्षतीति प्रावृट्, क्विपि 'नहिवृति' इत्यादिना दीर्घः । *प्रावृषेण्य इति* । भवार्थे प्रत्ययः, जाते तु प्रावृषष्ठपं वक्ष्यति । 'रषाभ्याम्' इत्येव सिद्धे प्रत्यये णकारोच्चारणम्—प्रावृषेण्यमाचष्टे प्रावृषेण्ययतेः क्विप्, णिलोपः, 'लोपो व्योर्वलि' इति यलोपः, प्रावृषेणित्यत्र णत्वार्थम्; अन्यथा 'पदान्तस्य' इति प्रतिषेधः स्यात् ॥

*वर्षाभ्यष्ठक्* ॥ *वार्षिकं वास इति* । 'कालात्साधुपुष्प्यत्पच्यमानेषु' इति साध्वर्थे ठक् ॥

न्यासः

संवत्सरात्फलपर्वणोरिति । संवत्सरशब्दाण्भवति फले पर्वणि चाभिधेये । सांवत्सरं फलम्, सांवत्सरं पर्व वा । सांवत्सरिकमन्यत् ॥

प्रावृ एण्यः ॥ अथ किमर्थं प्रत्यये मूर्धन्यः पठ्यते, न 'रषाभ्याम्' इत्यनेनैव णत्वं भविष्यति ? नैवं शक्यम्, इह हि न स्यात्—प्रावृषेणिति, पदान्तत्वात् ॥

वर्षाभ्यष्ठक् ॥ अथ किमर्थं ठञ्विधानम्, कालाट् ठञैव सिद्धत्वात् उभयत्रापि तदेव रूपमिति ? नैवम्; ठकि सति प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्, ठञि तु सति 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् ॥

वर्षाशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ठको-ऽपवादः। स्वरे भेदः। नभश्च नभस्यश्च वार्षिकावृतू॥

वसन्ताच्च॥ २०॥

'छन्दसि' इत्येव। वसन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। मधुश्च माधवश्च वासन्तिकावृतू॥

हेमन्ताच्च॥ २१॥

'छन्दसि' इत्येव। हेमन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः। ऋत्वणोऽपवादः। सहश्च सहस्यश्च हैमन्तिकावृतू।

योगविभाग उत्तरार्थः॥

सर्वत्राण् च तलोपश्च॥ २२॥

हेमन्तशब्दादण् प्रत्ययो भवति, तत्सन्नियोगेन चास्य तकारलोपः। हैमनं वासः। हैमनमुपलेपनम्।

सर्वत्रग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्। छन्दसि भाषायां च सर्वत्रैतद्भवति।

पदमञ्जरी

*छन्दसि ठञ्*॥ *नभश्च नभस्यश्च वार्षिकावृतू इति*। 'तस्येदम्' इत्यत्रार्थे प्रत्ययः, ऋतुशब्दश्च ऋत्ववयवयोर्मासयोर्वर्तते, वर्षर्तोरेतौ मासाववयवावित्यर्थः॥

*सर्वत्राण् च तलोपश्च*॥ *हैमनमिति*। यदा तशब्दस्य समुदायस्य लोपस्तदा 'अन्' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न भवति। यदा तु तकारस्या-नेन लोपोऽकारस्य तु यस्येति लोपः, तदा तस्य 'असिद्धवदत्राभात्' इत्यसिद्ध-त्वात्स्थानिवद्भावाच्च टिलोपाभावः।

न्यासः

छन्दसि ठञ्॥ वसन्ताच्च॥ हेमन्ताच्च॥ योगविभाग उत्तरार्थ इति। 'सर्वत्राण् च तलोपश्च' इति वक्ष्यति, स हेमन्तशब्दस्यैव यथा स्यात्, वसन्तस्य मा भूत्। यदि 'हेमन्तवसन्ताभ्याम्' इत्येकयोगः क्रियेत, ततो वसन्तस्यापि स्यात्; तस्य ह्युत्तरत्रानुवृत्तेः॥

सर्वत्राण् च तलोपश्च॥ छन्दसि पूर्वेण ठञि प्राप्ते भाषायामपि ऋत्वणि चैत-दुच्यते। सर्वत्र ग्रहणमित्यादिना सर्वत्रग्रहणस्य प्रयोजनमाचष्टे। छन्दसि भाषाया-

ननु च छन्दसीति नानुवर्तिष्यते ? सैवाननुवृत्तिः शब्देनाख्यायते प्रयत्नाधिक्येन पूर्वसूत्रेऽपि सम्बन्धार्थम् । हैमन्तिकमिति हि भाषायामपि ठञं स्मरन्ति ।

अथ 'अण्च' इति चकारः किमर्थः ? अण्, यथाप्राप्तं च ऋत्वणिति । कः पुनरनयोरणोर्विशेषः ? ऋत्वणि हि तकारलोपो नास्ति—हैमन्ती पङ्क्ति-

पदमञ्जरी

*ननु च छन्दसीति नानुवर्तिष्यत इति* । अस्वरितत्वात् । *सैवेत्यादि* । यासावस्वरितत्वादनुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते, किमर्थम् ? इत्याह–*प्रयत्नाधिक्येनेति* । ननु च तत एवास्वरितत्वात्पूर्वसूत्रेऽपि छन्दसीति नानुवर्तिष्यते, तस्माद्विस्पष्टार्थमेव सर्वत्रग्रहणम् । *भाषायामपि ठञं स्मरन्तीति* । *भाष्ये* तु नैतदिष्यते, तथा हि—सूत्रमिदं प्रत्याख्यातम्, कथम् ? हेमन्तपर्यायो हेमन्शब्दोऽस्ति–'हेमन्नागनीगन्ति कर्णौ, तस्मादेतौ हेमन्नशुष्यतः, यदि हेमन् प्रमीयते हेमन्तो भवति' इति दर्शनात्, तत्र भाषायां हेमन्-हेमन्तशब्दयोर्ऋत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम्, छन्दसि तु हेम्नो हैमनम्, हेमन्तस्य 'हेमन्ताच्च' इति ठञि हैमन्तिकम्, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति हेमन्तशब्दादेवाणि हैमन्तमिति रूपत्रयं सिद्धमिति । *सूत्रकारेण* तु भाषायामेतद्वृत्तिविषयादन्यत्रर्तुवाचिनो हेमञ्छब्दस्य प्रयोगाभावान् नलोपो विहितः, यथाप्राप्तं च ऋत्वणिति, अनन्तरस्तु ठञ् सर्वत्रग्रहणस्य पूर्वत्रान्वयेनैव सर्वत्र सिद्धिरिति नासौ समुच्चीयते । *कः पुनरनयोर्विशेष इति* । न कश्चिदिति भावः । *त्रीणि*

न्यासः

ञ्चेत्यादिना छन्दोऽधिकारनिवृत्तेः फलं दर्शयति । ननु चेत्यादि । अस्वरितत्वादेव च्छन्दसीति नानुवर्तिष्यते, ततो नार्थश्छन्दोऽधिकारनिवृत्त्यर्थेन सर्वत्रग्रहणेनेत्यभिप्रायः । सैवेत्यादिना यासावस्वरितत्वादननुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते । किमर्थमित्याह—प्रयत्नाधिक्येनेत्यादि । प्रयत्नाधिक्यमेतदेव शब्देनाख्यातम् । तेन हेतुना पूर्वसूत्रेऽपि सर्वत्रशब्दस्य सम्बन्धो यथा स्यादित्येवमर्थः शब्देनाख्यायते । कस्मात् पुनः पूर्वसूत्रेऽपि सर्वत्रग्रहणस्य सम्बन्ध इष्यते ? इत्याह—हैमन्तिकमिति हीत्यादि । हिशब्दो हेतौ । आचार्या हि हैमन्तिकमिति भाषायां ठञं स्मरन्ति । स चैवं भाषायामपि सिध्यति, यदि पूर्वसूत्रेऽपि सर्वत्रग्रहणस्य सम्बन्धो भवति । तत्र हि सति पूर्वसूत्रस्यायमर्थो भवति – हेमन्ताच्च सर्वत्र च्छन्दसि भाषायामपि ठञ् भवतीति । कः पुनरनयोरणोर्विशेष इति । न कश्चिदिति भावः । ऋत्वणि हीत्यादिना विशेषं दर्शयति ।

रिति, तदेवं त्रीणि रूपाणि भवन्ति—हैमन्तिकम्, हैमन्तम्, हैमनमिति ॥

सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥

'कालाद्' इत्येव । सायम्, चिरम्, प्राह्णे, प्रगे – इत्येवमादिभ्यो-ऽव्ययेभ्यश्च ट्युट्युलौ प्रत्ययौ भवतः, तयोश्चादिष्टयोस्तुडागमो भवति । सायन्तनम् । चिरन्तनम् । प्राह्णेतनम् । अव्ययेभ्यः –

पदमञ्जरी

*रूपाणि भवन्तीति* । पूर्वेण ठञि एकम्, अनेनाण्तलोपयोर्द्वितीयम्, 'ऋत्वणि यस्येति'लोपे परमिति त्रीणि रूपाणि ॥

*सायञ्चिरम्प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च* ॥ इह 'युवोरनाकौ' इत्यङ्गाधिकारे विहितत्वादनादेशो बहिरङ्गः, तुडागमस्तु प्रत्ययसन्नियोगेन विधानादन्तरङ्ग इति तेनैव तावद्भवितव्यम्, तत्र कृतेऽनादेशो न प्राप्नोति, किं कारणम्? अङ्गस्य निमित्तं यो युस्तस्यानादेशः, तुटि त्वत्र सति त्युशब्दोऽङ्गस्य निमित्तं न युशब्दमात्रम्, ततश्च यथा मृत्युरित्यत्रानादेशो न भवति, तथात्रापि न स्यात् । यदि पुनरयं तुक् पूर्वान्तः क्रियते? नैवं शक्यम्; प्रातस्तनमित्यत्र हि विसर्जनीयो न स्यात्, अपदान्तत्वात् । तस्मात्परादिरेवायं कर्तव्यः, तत्र चानादेशो न प्राप्नोति? तत्राह—*तयोश्चादिष्टयोस्तुडागमो भवतीति* । आदिष्टयोरिति कृतादेशयोरित्यर्थः । एष चार्थ आदिष्टशब्दस्य अर्शआद्यच्प्रत्ययान्तत्वेन लभ्यते, आदिश्यत इत्यादिष्टः, स ययोरस्ति तावादिष्टौ, तयोरादिष्टयोरिति । एतच्च 'घकालतनेषु' इति निर्देशाल्लभ्यते, न ह्यनादिष्टयोस्तुड्विधाने तनशब्द उपपद्यते । प्रातस्तनमित्यत्र वृद्धाच्छं परत्वाद्बाधत इति नोक्तम्; छस्य बाधकमपि ठञं बाध-

न्यासः

हैमन्तीति । 'टिड्ढाणञ्' इति ङीप् । तदेवमित्यादि । यत एव पूर्वसूत्रेण ठञ् भवत्यनेनाण् तलोपसहितः, तेन त्रीणि रूपाणि भवन्ति ॥

सायञ्चिरम्प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ 'कालाट् ठञ्' इति ठञि प्राप्ते सायमादिभ्यः ट्युट्युलौ विधीयेते, तयोश्च तुडागमः । ठञपवादत्वाच्च ट्युट्युलोः । ठञैव च्छस्य बाधितत्वादेताभ्यां पुनश्छस्य सम्प्रधारणैव नास्ति । तेन वृद्धादपि ट्युट्युलावेव भवतः—प्राक्तनमिति । तयोश्चेत्यादि । यद्यनादिष्टयोस्तुट् स्यात् तदा युरूपौ प्रत्ययौ न भवत इत्यनादेशो न स्यात् । तस्मादादिष्टयोस्तयोः कृतादेशयोस्तुडागमः । एतच्च 'घकालतनेषु कालनाम्नः' इति निर्देशाल्लभ्यते । न ह्यनादिष्टयोस्तुड्विधानेन तनशब्द उपपद्यते । अथ प्रत्यययोष्टित्करणं किमर्थम्, न तुट एव टित्त्वेन प्रत्यययोरपि टित्त्वं विज्ञास्यत इति, यतस्तद्ग्रहणेन ग्रहणादागमानाम्? नैतदस्ति; युक्तं यत् प्रत्यय-

दोषातनम् । दिवातनम् । सायमिति मकारान्तं पदमव्ययम्, ततोऽव्ययत्वादेव सिद्धः प्रत्ययः । यस्तु स्यतेरन्तकर्मणो घञि सायशब्दः, तस्येदं मकारान्तत्वं प्रत्ययसन्नियोगेन निपात्यते । दिवसावसानम् = सायः । चिरशब्दस्यापि मकारान्तत्वं निपात्यते । प्राह्णे, प्रगे—इत्येकारान्तत्वम् ।

* चिरपरुत्परारिभ्यस्त्नो वक्तव्यः * । चिरत्नम् । परुत्नम् । परारित्नम् ।

पदमञ्जरी

मानयोष्ट्युट्युलोरुत्कृष्टबलयोर्दुर्बलेन छेन सह सम्प्रधारणाभावात् । *मकारान्तं पदमव्ययमिति* । स्वरादिषु पठितम् । *अन्तकर्मण इति* । अन्तक्रियस्य, 'षोऽन्तकर्मणि' इत्यस्येत्यर्थः । यद्यप्यसाववसानमात्रवाची, घञन्तस्तु सायशब्दो दिवसान्तवचन इति न कालाधिकारस्य बाधशङ्का । *प्रत्ययसन्नियोगेनेति* । अन्यत्र त्वकारान्त एव, यथा—सायाह्नः, सायतर इति । आह च–संख्याविसायपूर्वस्याह्नस्येति । *एकारान्तत्वमिति* । निपात्यत इत्यनुषङ्गः । यत्र सप्तम्यर्थो नास्ति—प्राह्णः सोढोऽस्येत्यादौ, तदर्थं निपातनम् । जातादिके त्वर्थे 'घकालतनेषु' इत्यलुका सिद्धम् ।

*चिरपरुत्परारिभ्य इति* । चिरशब्दस्य सूत्र उपादानात् ट्युट्युलावपि भवतः, न तु 'किंयत्तद्बहुषु कृञोऽज्विधानात्' इतिवत्सूत्रस्य बाधः । परुत् = पूर्वस्मिन् संवत्सरे, परारि = पूर्वतरे । प्रत्नशब्दः पुराणवचनः ।

न्यासः

धर्मा आगमे भवन्ति तस्य प्रत्ययभक्तत्वात्, न त्वागमधर्मा प्रत्यये । तस्माट्टित्कार्यार्थं प्रत्यययोरपि टित्त्वमासज्यते । स्यतेरन्तकर्मण इति । 'षोऽन्तकर्मणि' इत्यस्य । प्राह्णे प्रगे इत्येकारान्तत्वमिति । निपात्यत इति सम्बन्धः । ननु च 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुकैव सिद्धम्, तदपार्थकं निपातनम् ? यत्र तर्हि सप्तम्यर्थो नास्ति तदर्थं निपातनम्—प्राह्णः सोढोऽस्य प्राह्णेतनः, प्रगः सोढोऽस्य प्रगेतन इति । अत्र हि 'तदस्य सोढम्' इति प्रथमासमर्थात्प्रत्ययविधानात्सप्तम्यर्थो नास्ति । तदभावात्सप्तम्यपि नास्त्येव ।

चिरपरुत्परारिभ्यस्त्नो वक्तव्य इति । व्याख्येय इत्यर्थः । व्याख्यानं तु—'तद्धिताः' इत्यत्रैव कृतम् । एवमुत्तरत्रापि वेदितव्यम् । चिरशब्दस्य सूत्रे चोपादानाट् ट्युट्युलावपि भवतः ।

* प्रगस्य छन्दसि गलोपश्च * । प्रत्नम् ।
* अग्रपश्चाड्डिमच् * । अग्रिमम् । पश्चिमम् ।
* अन्ताच्चेति वक्तव्य * । अन्तिमम् ॥

विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ २४ ॥

पूर्वाह्णापराह्णशब्दाभ्यां विभाषा ट्युट्युलौ प्रत्ययौ भवतस्तुट् च तयोरागमः । 'कालाट्ठञ्' इति ठञि प्राप्ते वचनम्, पक्षे सोऽपि भवति । पूर्वाह्णेतनम् । अपराह्णेतनम् । पौर्वाह्णिकम् । आपराह्णिकम् । 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुक् । यदा तु न सप्तमी समर्थविभक्तिः पूर्वाह्णः सोढोऽस्येति, तदा पूर्वाह्णतन इति भवितव्यम् ॥

तत्र जातः ॥ २४ ॥

अणादयो घादयश्च प्रत्ययाः प्रकृताः, तेषामतः प्रभृत्यर्थाः समर्थ-

पदमञ्जरी

*अग्रपश्चाड्डिमजिति* । केचिदत्रादिशब्दमपि पठन्ति—अग्रादिपश्चादिति, ते 'मध्यान्मः' इत्यत्रादेश्चेति वक्तव्यमिति न पठन्ति । डित्करणं पश्चादित्यत्र टिलोपार्थम् । 'अव्ययानां भमात्रे टिलोपः' इत्यस्यैवायं प्रपञ्चार्थः ॥

*विभाषा पूर्वाह्णापराह्णाभ्याम्* ॥ *सप्तम्या अलुगिति* 'ङ्याप्प्रातिपदिकात्' इत्यत्र निरणायि—सुबन्तात्तद्धितोत्पत्तिरिति, तत्तत्रैव द्रष्टव्यम् । यदि सुबन्तात्तद्धित उत्पद्यते, कथं पूर्वाह्णतन इत्यत्र भवति ? तत्राह—*यदा त्विति* ॥

*तत्र जातः* ॥ *तेषामतः प्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्त इति* । तदिदमु-

न्यासः

प्रगस्य च्छन्दसि गलोपश्चेति । वक्तव्य इति सम्बन्धः । वक्तव्यशब्दस्य स एवार्थः । व्याख्यानात् त्विहापि 'प्रत्नपूर्वविश्वेमात् थाल् च्छन्दसि' इति निपातनमाश्रित्य कर्तव्यम् ।

अन्ताच्चेति वक्तव्यम् । अन्तशब्दाड्डिमज् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु कृतमेव । डिमचो डित्करणं पश्चादित्यस्य टिलोपार्थम् । ननु च 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' इत्यनेनैव सिद्धम् ? न सिध्यति; अनित्यत्वात् तस्य । यथा आरातीय इत्यत्र न भवति, तथेहापि न भवतीति कस्यचिद् भ्रान्तिः स्यात्, अतस्तन्निरासार्थं डित्करणम् ॥

विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ पूर्वाह्णे तन इति । अह्नः पूर्वो भाग इति पूर्वादिसूत्रेणैकदेशिसमासः । 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः, 'अह्नोऽह्नः' एतेभ्य इत्यह्नादेशः, 'अह्नोऽदन्तात्' इति णत्वम् । यदाऽसप्तम्यन्तात् प्रत्ययस्तदा पूर्वाह्णतन

विभक्तयश्च निर्दिश्यन्ते। तत्रेति सप्तमीसमर्थात् 'जातः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्ने जातः स्रौघ्नः। माथुरः। औत्सः। औदपानः। राष्ट्रियः। अवारपारीणः। शाकलिकः। माकलिकः। ग्राम्यः। ग्रामीणः। कात्त्रेयकः। औम्भेयकः॥

## प्रावृषष्ठप्॥ २६॥

प्रावृट्शब्दात्सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे ठप् प्रत्ययो भवति। एण्यस्यापवादः। पकारः स्वरार्थः। प्रावृषि जातः प्रावृषिकः॥

## संज्ञायां शरदो वुञ्॥ २७॥

### पदमञ्जरी

भयमनिर्देश्यम्, कथम्? 'शेष इति लक्षणं चाधिकारश्च' इत्युक्तम्, तत्र लक्षणतया चाक्षुषं रूपमित्यादाविव जातादिष्वप्यर्थेष्वणादयः सिद्धाः, अधिकारतया च घादय इत्यर्थास्तावन्न निर्देश्याः प्रत्ययार्थेन चाभिधानस्वाभाव्येन समर्थविभक्तयोऽपि लभ्यन्ते इति तन्निर्देशोऽपि न कर्तव्य एव। नियमार्थमिति चेन्न; अनिष्टत्वात्। तत्रैतत्स्यात्—जातादिष्वेव तद्धिता यथा स्युः, तत्रास्ते तत्र शेत इत्यादौ मा भूवन्निति जातादयोऽर्था अनुक्रम्यन्त इति? तच्च नैवम्; अनिष्टत्वात्। अन्यत्रापि हि तद्धिता इष्यन्ते—चाक्षुषं रूपम्, श्रावणः शब्दः, चातुर्दशं रक्षः, दार्षदाः सक्तव इति। यत्र तु नेष्यन्ते, तत्रास्त इत्यादौ—तत्रानभिधानान्न भविष्यन्ति, यथा—अङ्गुल्या खनतीत्यादौ। तस्मान्नार्थो जाताद्यनुक्रमणेन।

अपवादविधानार्थं तु, प्रावृषष्ठबादीनपवादाँस्तत्र तत्रासङ्करेण वक्ष्यामीति अवश्यानुक्रमितव्या अर्थाः, तेऽन्यार्थाः सन्तो योगविभागेनाणादीनामप्यर्था निर्दिश्यन्ते।

विस्पष्टार्थम्, यानि पुनरनपवादान्यर्थादर्शनानि, यथा—'कृतलब्धक्रीतकुशलाः' इति, तानि शक्यान्यवक्तुम्॥

### न्यासः

इति भवितव्यमिति; सप्तम्यभावात्। सप्तम्यभावस्तु प्रथमासमर्थात् तद्धितोत्पत्तेः॥

तत्र जातः॥ अणादयो घादयश्चेति। एकेनादिशब्देनाणादीनामिहोत्सर्गाणां ग्रहणम्, द्वितीयेन घादीनां शेषाधिकारविहितानाम्। स्रौघ्नः, माथुर इति। 'प्राग्दीव्यतोऽण्'। औत्सः, औदपान इति। 'उत्सादिभ्योऽञ्'। राष्ट्रियः, अवारपारीण इति। 'राष्ट्रावारपाराद् घखौ'। शाकलिकः, माकलिक इति। 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ। कात्त्रेयकः, औम्भेयक इति। 'कत्र्यादिभ्यो ढकञ्'॥

प्रावृषष्ठप्॥ एण्यस्यापवाद इति। 'प्रावृष एण्यः' इत्यनेन प्राप्तस्य॥

शरच्छब्दात्सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति, ऋत्वणोऽपवादः समुदायेन चेत्संज्ञा गम्यते। शारदका दर्भाः। शारदका मुद्गाः। दर्भविशेषस्य मुद्गविशेषस्य चेयं संज्ञा।

संज्ञायामिति किम्? शारदं सस्यम्।

संज्ञाधिकारं केचित् 'कृतलब्धक्रीतकुशलाः' इति यावदनुवर्त्तयन्ति॥

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन्॥ २८॥

पूर्वाह्णादिभ्यः शब्देभ्यो वुन् प्रत्ययो भवति 'तत्र जातः' इत्येतस्मिन्विषये संज्ञायां गम्यमानायाम्। पूर्वाह्णकः। अपराह्णकः। 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्यस्यापवादः। आर्द्रकः। मूलकः। नक्षत्राणोऽपवादः। प्रदोषकः। 'निशाप्रदोषाभ्यां च' इत्यस्यापवादः। अवस्करकः। औत्सर्गिकस्याणोऽपवादः। असंज्ञायां तु यथाप्राप्तं ठञादय एव भवन्ति॥

पदमञ्जरी

*संज्ञायां शरदो वुञ्॥ समुदायेन चेदिति*। प्रकृतिप्रत्ययसमुदायश्चेत्संज्ञा भवतीत्यर्थः। *कृतलब्धक्रीतकुशला इति यावदिति*। यावच्छब्दोऽवधिद्योतको निपातः॥

न्यासः

संज्ञायां शरदो वुञ्॥ समुदायेन चेत् संज्ञा गम्यत इति। अनेन समुदायोपाधित्वं संज्ञाया दर्शयति। प्रकृतिप्रत्ययसमुदायेन चेत् संज्ञा गम्यत इत्यर्थः। यद्येवम्, शारदका दर्भा इति दर्भशब्दस्य प्रयोगो न प्राप्नोति, प्रत्ययान्तेनाभिहितत्वात्? नैष दोषः; यथैव हि शारदकशब्दो दर्भविशेषस्य नामधेयं तथा मुद्गविशेषस्यापि। तत्रासति दर्भशब्दप्रयोगेऽनेकार्थसाधारणत्वात् कस्य नामधेयमिति सन्देहः स्यात्—कोऽर्थः शारदकशब्देन विवक्षित इति। तस्मादसन्देहार्थो दर्भशब्द उपादीयते। संज्ञाधिकारमित्यादि। केचिदिति वचनात् केचिन्नानुवर्तयन्तीत्युक्तं भवति॥

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन्॥ पूर्वाह्णकः, अपराह्णक इति। पूर्ववदेकदेशिसमासादिकं कार्यं विधेयम्—'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति, तत्र ट्युट्युलविधिश्च। आर्द्रकः, मूलक इति। 'नक्षत्रेण युक्तः कालः' इत्यागतस्याणः 'लुबविशेषे' इति लुप्, ततो वुन्। निशाप्रदोषाभ्यामिति। ठञ्विधेः। ठञादय एवेति। आदिशब्देन ट्युट्युलादयो गृह्यन्ते॥

पथः पन्थ च ॥ २९ ॥

पथिशब्दाद्वुन् प्रत्ययो भवति 'तत्र जातः' इत्येतस्मिन्विषये अणोऽपवादः । प्रत्ययसन्नियोगेन च पथः 'पन्थ' इत्ययमादेशो भवति । पथि जातः पन्थकः ॥

अमावास्याया वा ॥ ३० ॥

अमावास्याशब्दाद् वुन् प्रत्ययो भवति वा 'तत्र जातः' इत्येतस्मिन्विषये । सन्धिवेलादिषु पाठादणोऽपवादः । अमावास्यकः, आमावास्यः ।

एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि भवति । अमावस्यकः । आमावस्यः ।

अ च ॥ ३१ ॥

अमावास्याशब्दादकारः प्रत्ययो भवति 'तत्र जातः' इत्येतस्मिन्

पदमञ्जरी

*अमावास्याया वा* ॥ *एकदेशविकृतस्यानन्यत्वादिति* । 'अमावस्यदन्यतरस्याम्' इत्यत्र 'अमापूर्वस्य वसेर्ण्यति पक्षे वृद्ध्यभावो निपात्यते' इत्युक्तम् । ण्यति च 'अत उपधायाः' इति सामान्येन वृद्धिविधानात्, अमावास्याशब्दस्य न्याय्यत्वादवृद्ध्युपधस्तस्यैवैकदेशविकार इति भावः । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधमधीयते, तेषां दीर्घोपधस्य न स्यात्; अतद्विकारत्वात् ॥

*अ* च ॥ किमर्थो योगविभागः, न च 'अमावास्याया वा' इत्युच्येत, चकाराद् वुन्, वावचनादुभयोरभावेऽणपि भविष्यति ? सत्यम्; उत्तरत्र तु विकल्पा-

न्यासः

पथः पन्थ च ॥ अमावास्याया वा ॥ एकदेशविकृतस्येत्यादि । 'अमावस्यदन्यतरस्याम्' इत्यत्र ण्यत्यवृद्धिरेव निपात्यते । अवृद्धिस्तु वृद्धेरेकादेशभूततया विकारो भवतीत्येकदेशविकृतत्वममावस्याशब्दस्योपपद्यते । ये तु सन्धिवेलादिषु ह्रस्वोपधमधीयते, तेषां वृद्ध्युपधस्य ग्रहणं न प्राप्नोति, न हि विकृतिः प्रकृतिं गृह्णाति । तस्माद् दीर्घ एव पाठो युक्तः ॥

अ च ॥ अथ योगविभागः किमर्थः, न 'अमावास्याया अ च वा' इत्येवोच्येत, चकारो वुनोऽनुकर्षणार्थो भविष्यति, वावचनञ्चोभयोर्विकल्पार्थम्, तेन ताभ्यां मुक्तेऽणपि भविष्यति ? अस्त्येतत्; किन्त्वेकयोगे सति 'सिन्ध्वपकराभ्यां कन्' इति कन्नेव विकल्पेन

विषये । पूर्वेण वुञ्णोः प्राप्तयोरयं तृतीयः प्रत्ययो विधीयते । अमावास्यः । अमावास्यकः । आमावास्यः । अमावस्यः । अमावस्यकः । आमावस्यः ॥

सिन्ध्वपकाराभ्यां कन् ॥ ३२ ॥

सिन्धुशब्दादपकरशब्दाच्च कन् प्रत्ययो भवति 'तत्र जातः' इत्येतस्मिन्विषये । सिन्धुशब्दः कच्छादिः, ततोऽणि मनुष्यवुञि च प्राप्ते विधानम्, अपकरशब्दादप्यौत्सर्गिकेऽणि । सिन्धुकः । अपकरकः ॥

अणञौ च ॥ ३३ ॥

सिन्ध्वपकरशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः 'तत्र जातः' इत्येतस्मिन्विषये । पूर्वेण कनि प्राप्ते वचनम् । सैन्धवः । आपकरः ॥

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ३४ ॥

श्रविष्ठादिभ्यः शब्देभ्यो नक्षत्रेभ्य आगतस्य जातार्थे लुग्भवति ।

पदमञ्जरी

नुवृत्तिः शङ्क्येत । योगविभागे तु सन्धिवेलाद्यणोऽभ्यनुज्ञानायं पूर्वसूत्रे वाग्रहणसामर्थ्यादस्यापि विकल्पसिद्धेरिह वाग्रहणं नानुवर्त्यमिति व्यवधानादुत्तरत्र विकल्पस्य निवृत्तिः सिद्धा भवति ॥

अणञौ च ॥ योगविभागो यथासंख्यार्थः ॥

*श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥* कृत्तिकापर्यायस्य बहुलाशब्दस्यात्र द्वन्द्वैकवद्भावेन नपुंसकह्रस्वत्वेन निर्देशः, न

न्यासः

भवतीति कस्यचिद् भ्रान्तिः स्यात्, अतस्तन्निवृत्त्यर्थं योगविभागे हि सति व्यवधानतया विकल्पस्य कन् नित्यो विज्ञायते ॥

सिन्ध्वपकराभ्यां कन् ॥ अपकरशब्दादौत्सर्गिकेऽणीति । प्राप्ते विधानमिति सम्बन्धः ।

अणञौ च ॥ यथासंख्यार्थो योगविभागः यदि 'सिन्ध्वपकराभ्याञ्च कनणञः' इत्येकयोगः क्रियेत, ततो वैषम्यात्कैदकस्याः प्रकृतेः प्रत्ययास्त्रयः स्युः ॥

श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ नक्ष-

तस्मिन्स्त्रीप्रत्ययस्यापि 'लुक्तद्धितलुकि' इति भवति । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः ।

❀ लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ❀ । चित्रायां जाता चित्रा । रेवती । रोहिणी । स्त्रीप्रत्ययस्य लुकि कृते गौरादित्वान् ङीष् ।

❀ फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ❀ । फल्गुनी । अषाढा ।

❀ श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः ❀ । श्राविष्ठीयः । आषाढीयः ॥

पदमञ्जरी

बह्वर्थादाननिमित्तस्य बहुलाशब्दस्य; श्रविष्ठादिभिः साहचर्यात् । *चित्रेति* । 'लुक्तद्धितलुकि' इति लुकि कृते पुनष्टाप् ।

*गौरादिपाठान् ङीषिति* । 'रेवती नक्षत्रे, रोहिणी नक्षत्रे' इति तत्र पठ्यते, न चेमौ नक्षत्रवाचिनौ; जातार्थवृत्तित्वात् । तस्माद् 'गौरादिषु पिप्पल्यादयश्च' इति पाठात्तेषां चावृत्कृतत्वादत्र ङीषित्यर्थः ।

*टानौ वक्तव्याविति* । स्त्रियामित्यपेक्ष्यते, टकारो ङीबर्थः, नकारः स्वरार्थः, विधानसामर्थ्याच्चानयोर्लुग्न भवति ।

*छणपि वक्तव्य इति* । अत्र च 'स्त्रियाम्' इति नापेक्ष्यते ॥

न्यासः

त्राणः श्रवणे प्राप्ते लुगुच्यते । ननु च 'नक्षत्रेभ्यो बहुलम्' इत्यनेनैव लुग् भविष्यति ? सत्यमेतत्; तस्यैवायं प्रपञ्चः । उत्तरावपि योगौ प्रपञ्चौ तस्यैव वेदितव्यौ । श्रविष्ठादयश्चैते 'नक्षत्रेण युक्तः कालः' इत्यनेनागतस्याणः 'लुबविशेषे' इति कृते लुबन्ता वेदितव्याः । स्त्रीप्रत्ययस्यापि 'लुक् तद्धितलुकि' इति लुग् भवतीति । ये स्त्रीप्रत्ययान्तास्तेषामुपसंख्यानमिति प्रतिपादनमित्यर्थः । तच्चोपरिष्टात् करिष्यते । चित्रायाष्टापो लुकि कृते पुनष्टाप् क्रियते ।

गौरादित्वान् ङीषिति । रेवतीरोहिणीत्यत्र ।

फल्गुन्यषाढाभ्यां टानौ वक्तव्याविति । स्त्रियामित्यपेक्ष्यते । तयोस्तु विधानसामर्थ्यान्न लुग् भवति । टस्य टकारो ङीबर्थः, अनो नकार आद्युदात्तार्थः । वक्तव्यशब्दो व्याख्येये वर्तते । व्याख्यानं तु कृतमेव च ।

श्रविष्ठाषाढाभ्यां छणपि वक्तव्य इति । अत्र स्त्रियामिति नोपपद्यते । णकारो

स्थानान्तगोशालखरशालाच्च ॥ ३५ ॥

स्थानान्तात् प्रातिपदिकाद् गोशालशब्दात् खरशालशब्दाज्जातार्थे प्रत्ययस्य लुग्भवति। गोस्थाने जातः गोस्थानः। अश्वस्थानः। गोशालः। खरशालः॥

वत्सशालाभिजिदश्वयुक्छतभिषजो वा ॥ ३६ ॥

वत्सशालादिभ्यः परस्य जातार्थे प्रत्ययस्य लुग् वा भवति। वत्सशालायां जातः वत्सशालः, वात्सशालः। अभिजित्, आभिजितः। अश्वयुक्, आश्वयुजः। शतभिषक्, शातभिषजः।

बहुलग्रहणस्यायं प्रपञ्चः॥

पदमञ्जरी

*स्थानान्तगोशालखरशालाच्च* ॥ *गोशालेति*। 'विभाषा सेना' इति नपुंसकत्वे ह्रस्वत्वम्। तत्साहचर्यात्खरशालस्यापि नपुंसकस्य ग्रहणम्, न तु द्वन्द्वैकवद्भावेन ह्रस्वत्वम्। एकादेशस्य पूर्वं प्रत्यन्तवद्भावाल्लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गाभ्यामपि लुग्भवत्येव। यद्यपि टाबन्तयोरपि पाठे एकदेशविकृतस्यानन्यत्वान्नपुंसकाभ्यामपि लुक् सिद्ध्यति, लाघवार्थं तु ह्रस्वस्य पाठः॥

*वत्सशालाभिजिदश्वयुक्छतभिषजो वा* ॥ *वत्सशालेति*। ह्रस्वान्तस्य दीर्घान्तस्य वा ग्रहणम्। *बहुलग्रहणस्यैवायं प्रपञ्च इति*। अश्वयुक्शतभिषक्शब्दावभिप्रेत्यैतदुक्तम्; अन्ययोरनक्षत्रवाचित्वात्। *अभिजिदिति*। यद्यपि नक्षत्रमप्यस्ति— 'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामिति', मुहूर्तमप्यस्ति॥

न्यासः

वृद्ध्यर्थः। वक्तव्यशब्दस्य स एवार्थः। व्याख्यानमपि करिष्यते च। कृतमेव॥

स्थानान्तगोशालखरशालाच्च ॥ गोशालखरशालयोर्ह्रस्वान्तयोः पाठान्नपुंसकयोर्ग्रहणं विज्ञायते। नपुंसकलिङ्गता तु 'विभाषा सेनासुरा' इत्यादिना। यद्यपि नपुंसकयोर्ग्रहणम्, तथापि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भविष्यति इति स्त्रीलिङ्गाभ्यामपि लुग्भवत्येव। उदाहरणेऽप्यौत्सर्गिकस्याणो लुक्॥

वत्सशालाभिजिदश्वयुक्शतभिषजो वा ॥ वत्सशालशब्दो नपुंसकलिङ्गो गृह्यते। कुत एतत्? न्यासेन्न्यायात्; नपुंसकलिङ्गस्य हि ग्रहणे लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि लुग्न सिध्यति; न तु स्त्रीलिङ्गस्य ग्रहणे नपुंसकात्।

बहुलग्रहणस्यायं प्रपञ्च इति। वत्सशालशब्दो यद्यपि नक्षत्रवचनो न भवति, तथापि बहुलवचनात् ततोऽपि लुग्भविष्यतीत्यभिप्रायः॥

काशि० 3 : ४२

## नक्षत्रेभ्यो बहुलम् ॥ ३७ ॥

नक्षत्रेभ्य उत्तरस्य जातार्थे प्रत्ययस्य बहुलं लुग्भवति । रोहिणः, रौहिणः । मृगशिराः, मार्गशीर्षः ॥

## कृतलब्धक्रीतकुशलाः ॥ ३८ ॥

'तत्र' इत्येव । सप्तमीसमर्थात् कृतादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा कुशलो वा स्रौघ्नः । माथुरः । राष्ट्रियः ।

ननु च यद्यत्र कृतं जातमपि तत्तत्र भवति, यच्च यत्र क्रीतं लब्धमपि तत्तत्रैव भवति, किमर्थं भेदेनोपादानं क्रियते ? शब्दार्थस्याभिन्नत्वात् ।

### पदमञ्जरी

नक्षत्रेभ्यो बहुलम् ॥ वाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लुग्व्यवस्थायां सिद्धायाम्, बहुलवचनं क्वचिदन्यदेवेत्येतदर्थम्, तेन टानौ वक्तव्यावित्यादि सिद्धं भवति । *रोहिण इति* । 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम्' इत्येतत्तु स्त्रियां नियमेन लुगर्थे, न तु स्त्रियामेव लुगर्थम् ।

*कृतलब्धक्रीतकुशलाः* ॥ *यद्यत्र कृतं जातमपि तत्तत्र भवतीति* । यद्यपि जातं सर्वं कृतं न भवति, स्वयं जातस्यापि भावात्; कृतं तु सर्वं जातं भवति, न ह्यजननस्वभावं क्रियते, यथा—व्योमेति भावः । *यच्च क्रीतं लब्धमपि तत्तत्र भवतीति* । अत्रापि लब्धं सर्वं क्रीतं न भवति; दानादिनापि लाभसम्भवात् । क्रीतं तु लब्धमेव; क्रयस्यापि लाभहेतुत्वादित्यर्थः । *तत्किमर्थं भेदेनोपादानं क्रियत इति* । जातलब्धाभ्यामेव गतमिति प्रश्नः । *शब्दार्थस्याभिन्नत्वादिति* । परव्यापारोपहितं

### न्यासः

नक्षत्रेभ्यो बहुलम् ॥ रोहिण इत्यादौ नक्षत्राणः पक्षे लुक् । मृगशिरा इति । 'अत्वसन्तस्य चाधातोः' इति दीर्घः । मार्गशीर्ष इति । 'ये च तद्धिते' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाच् शिरसः शीर्षभावः । अथ बहुलग्रहणं किमर्थम् ? न पूर्वसूत्रादेव वाग्रहणमनुवर्तिष्यते ? इदं प्रयोजनम्—न क्वचिदन्यदेव यथा स्यात्, तेन फल्गुन्यषाढाभ्यां टानौ सिद्धौ भवतः । श्रविष्ठाषाढाभ्याञ्छाणपीति ॥

कृतलब्धक्रीतकुशलाः ॥ ननु चेत्यादि । जन्मवद्वस्तु जातशब्दस्यार्थः, कृतस्यापि जन्मास्त्येव, तस्माद् यद् यत्र कृतं जातमपि तत् तत्र भवति । यच्च क्रीतमित्यादि । प्राप्तं लब्धमप्युच्यते । यदपि क्रीतं प्राप्तमपि तद् भवत्येव, तस्मात् क्रीतं लब्धमपि भवति । शब्दस्यार्थस्याभिन्नत्वादिति । स्वजन्मन्यनुभूतकर्तृभावो जातशब्दस्यार्थः ।

वस्तुमात्रेण क्रीतं लब्धं भवति, शब्दार्थस्तु भिद्यत एव ॥

प्रायभवः ॥ ३९ ॥

'तत्र' इत्येव। सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकात् 'प्रायभवः' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। प्रायशब्दः साकल्यस्य किञ्चिन्न्यूनतामाह। स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः। माथुरः। राष्ट्रियः।

प्रायभवग्रहणमनर्थकम्, तत्रभवेन कृतार्थत्वात्।

पदमञ्जरी

रूपं कृतमित्युच्यते, तद्रहितं तु जातमिति; तथा मूल्यप्रदानरूपो यः स्वीकर्तुर्व्यापारस्तदुपहितं रूपं क्रीतमित्युच्यते, तद्रहितं तु लब्धमिति। तत्र यथा—विक्लिन्न ओदनः, पक्व ओदन इति शब्दार्थभेदः, तथात्रापीत्यर्थः। एतदेव स्पष्टयति—*वस्तुमात्रेणेति*। वस्तुत इत्यर्थः। एतदुक्तं भवति—क्रीतं वस्तुतो लब्धं भवतीत्येतावत्, शब्देन तु रूपान्तरमभिधीयते। एवं कृतमपि वस्तुतो जातं भवति, शब्देन तु रूपान्तरमभिधीयत इति द्रष्टव्यम्। उपसंहरति—*शब्दार्थस्तु भिद्यत एवेति*। तत्राक्रियमाणे कृतक्रीतयोरुपादाने यथा—कायं घटः कृतः, क्रीतो वा इति पृष्टे स्रुघ्ने जातो लब्ध इति चोत्तरं न प्रयुज्यते; तथा तद्धितोऽपि न स्यात्। तस्मात्कृतक्रीतयोस्तद्धितेनाभिधनाय भेदेनोपादानमिति॥

*प्रायभवः* ॥ प्रायेण भवः, 'कर्तृकरणे कृता बहुलम्' इति समासः।

*तत्र भवेन कृतत्वादिति*। यत्प्रायभव इत्यस्य साध्यम्, तस्य 'तत्र भवः' इत्य-

न्यासः

जातशब्दस्यैव विशेषोपलक्षितपरव्यापारो स्वजन्मनिष्पत्तौ कृतशब्दस्यार्थः। प्राप्तिसामान्यं लब्धशब्दस्यार्थः। प्राप्तिविशेषो यस्य मूल्यहेतुका प्राप्तिः स क्रीतशब्दस्यार्थः। न च सामान्यविशेषयोरेकार्थता युक्ता। मा भूत्पर्यायप्रसङ्ग इति भिद्यते शब्दार्थः। वस्तुमात्रेणेति। क्रीतलब्धयोर्यदाधारभूतं वस्तुमात्रं तस्याभिन्नरूपत्वात् क्रीतं लब्धं भवति। मात्रग्रहणं शब्दार्थव्यवच्छेदार्थम्। अत एवाह—शब्दार्थस्तु भिद्यत एव। न हि येन रूपेण क्रीतशब्देन तत्प्रत्याय्यते तेनैव लब्धशब्देन। एवं जातकृतशब्दयोर्वस्तुत्वेनाभिन्नत्वम्। शब्दार्थद्वारेण तु भिन्नार्थत्वमेव। अन्येनैव हि रूपेण जातशब्देन तद्वस्तु प्रत्याय्यते, अन्येन कृतशब्देन॥

प्रायभवः॥ प्रायभवग्रहणमनर्थकमिति। वैचित्र्यादन्यस्यार्थस्याभावादनर्थकमित्युच्यते। वैचित्र्येण तु सार्थकमेव। कस्मात् पुनरनर्थकमिति? तत्र भवेन कृतार्थत्वादिति। यत् 'प्रायभवः' इत्यस्य साध्यम्, तस्य 'तत्र भवः' इत्यनेनैव साधित-

अनित्यभवः प्रायभव इति चेद् ? मुक्तसंशयेन तुल्यम् ॥

पदमञ्जरी

नेनैव साधितत्वादित्यर्थः । यो हि राष्ट्रे प्रायेण भवति तत्रैवासौ भवतीति 'तत्र भवः' इत्येव सिद्धम् । शङ्कते—*अनित्यभवः प्रायभव इति चेदिति* । यस्तत्र कदाचिद्भवति कदाचिन्न स प्रायभवः, यस्य तु नियत आधाराधेयभावः स 'तत्र भवः' इति पृथगुपादानसामर्थ्याद्भेद आश्रीयत इति यद्युच्येतेत्यर्थः । निराकरोति—*मुक्तसंशयेन तुल्यमिति* । यं भवान्मुक्तसंशयं न्याय्यं तत्रभव उदाहरणं मन्यते—स्रौघ्नो देवदत्त इति, तेनैव तुल्यम् । सोऽपि हि कदाचित्तस्मादुदक्देशादभिनिष्क्रामति । तत्र चेद्युक्ता तत्र भवता, इहापि युक्ता दृश्यताम् । अथैतदपि प्रायभवस्योदाहरणम्—स्रौघ्नो देवदत्त इति । तत्रभवनस्य किमुदाहरणम् ? तत्र नित्यभवः स्रौघ्नः प्राकार इति । यद्येवम्, 'तत्र भवः' इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते स तस्मिन्दृष्टापचारे न स्यात्, दृश्यते च—

वानरोऽहं महाभागे दूतो रामस्य धर्मतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ इति ।

तस्मात्तत्रभवे सामान्ये प्रायभवस्य विशेषस्यान्तर्भावादनर्थकं प्रायग्रहणम् ? इदं तर्हि प्रयोजनम्—'उपजानूपकर्णोपनीवेष्ठक्' प्रायभवे यथा स्यान्नित्यभवे मा भूत्—उपजानु भवं गड्विति । अथेदानीं जानुसमीपस्थशरीरावयववाचिन उपजानुशब्दात्तत्र भव इति प्रकृत्य 'शरीरावयवाद्यत्' इति यत्कस्मान्न भवति ? अनभिधानात् । ठगपि तर्ह्यनभिधानादेव न भविष्यति ? तदेवं स्थितम्—एतत्प्रायग्रहणमनर्थकम्, तत्र भवेन कृतत्वादिति ॥

न्यासः

त्वादिति भावः । यो हि राज्ये प्रायेण भवति तत्रासौ भवत्येव । ततश्च तत्र भवे तस्यान्तर्भावात् 'तत्र भवः' इत्यनेनैव कृतं सम्पादनमिति किं प्रायभवग्रहणेन ? अनित्यभव इत्यादिना परस्योत्तरमाशङ्कते । स्यादेतत्—अनित्यभवः प्रायभवो नित्यभवस्तत्र भव इति, तस्मात् तत्र भवेन प्रायभवस्यासंग्रहान्न सिध्यति ? इत्याशङ्क्याह—मुक्तसंशयेन तुल्यमिति । मुक्तस्त्यक्तः संशयो येन तत् मुक्तसंशयम् । न्याय्यस्तत्र भवोऽयमिति यो निश्चितस्तेन तुल्यं भवति । तथा हि—स्रुघ्ने भवो देवदत्तः स्रौघ्न इत्युच्यते, न चासौ स्रुघ्ने सदा भवति, अवश्यं हि कदाचिदुदग्देशादीनपक्रामति, अथ च तत्रभवप्रत्ययो भवति । यदि च नित्यभवस्तत्र भवः ? जिह्वामूले भवो वर्णः जिह्वामूलीय इत्यत्र 'तत्र भवः' इत्यधिकारे 'जिह्वामूलाङ्गुलेश्छः' इति च्छो न स्यात्, न हि वर्णो नित्यं जिह्वामूले भवति । तस्मात् प्रायभवस्य तत्रभवान्तर्भावात् ततो न व्यतिरिच्यत इत्यनर्थकं प्रायभवग्रहणम् ॥

## उपजानूपकर्णोपनीवेष्ठक् ॥ ४० ॥

उपजान्वादिभ्यः शब्देभ्यः सप्तमीसमर्थेभ्यः 'प्रायभवः' इत्येतस्मिन् विषये ठक् प्रत्ययो भवति । अणोऽपवादः । औपजानुकः । औपकर्णिकः । औपनीविकः ॥

## सम्भूते ॥ ४१ ॥

'तत्र' इत्येव । सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकात् 'सम्भूते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । अवक्लृप्तिः प्रमाणानतिरेकश्च सम्भवत्यर्थं इह गृह्यते, नोत्पत्तिः, सत्ता वा; जातभवाभ्यां गतत्वात् । स्रुघ्ने सम्भवति स्रौघ्नः । माथुरः । राष्ट्रियः ।

## कोशाड्ढञ् ॥ ४२ ॥

कोशशब्दाद् ढञ् प्रत्ययो भवति 'तत्र सम्भूते' इत्यस्मिन्विषये ।

पदमञ्जरी

*उपजानूपकर्णोपनीवेष्ठक्* ॥ उपजान्वादयः सामीप्येऽव्ययीभावाः, समाहारद्वन्द्वस्य सौत्रः पुंल्लिङ्गनिर्देशः ॥

*सम्भूते* ॥ *अवक्लृप्तिः प्रमाणानतिरेकश्चेति* । सकृत्प्रयुक्तस्याप्यनेकार्थत्वमविरुद्धम्, तन्त्राद्याश्रयणादिति भावः । तत्रावक्लृप्तिः = सम्भावना, इदमेवं भवेदिति बुद्धिः; प्रमाणानतिरेकः = आधारपरिमाणादाधेयपरिमाणस्यानतिरेकता, यस्यां सत्यां सर्वमाधेयमाधारेऽनुप्रविशति । *स्रौघ्न इति* । देवदत्त इदानीं स्रुघ्ने सम्भाव्यत इत्यर्थः, स्रुघ्नप्रमाणाद्वाऽनतिरिच्यते सेनादिकोऽर्थ इत्यर्थः ॥

*कोशाड्ढञ्* ॥ *कौशेयं वस्त्रमिति* । ननु च न वस्त्रं कोशे सम्भवति, वस्त्र-

न्यासः

उपजानूपकर्णोपनीवेष्ठक् ॥ जानुनः समीपम्, कर्णस्य समीपम्, नीव्याः समीपमिति—'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावः । उपजानुक इति । 'इसुसुक्तान्तात् कः' ॥

सम्भूते ॥ अवक्लृप्तिरित्यादि । अवक्लृप्तिः = सम्भावना । प्रमाणानतिरेकः = आधारप्रमाणादाधेयप्रमाणस्यानतिरिक्तता, यस्यां सत्यां सर्वमाधेयमाधारमनुप्रविशति । स्रुघ्ने सम्भवति । यस्तु स्रुघ्ने सम्भाव्यते, स्रुघ्नप्रमाणान्नातिरिच्यते, तदनुप्रवेशात् स सेनादिकोऽर्थ एवमुच्यते ॥

कोशाड्ढञ् ॥ कौशेयं वस्त्रमिति । ननु च वस्त्रं कौशेयं न सम्भवति, किन्तु कृमिः, ततश्च कृमावेव स्यात्, न वस्त्रे; अपि च विशेषानभिधानात् खड्गसम्बन्धिनोऽपि

अणोऽपवादः। कोशे सम्भूतं कौशेयं वस्त्रम्। रूढिरेषा, तेन क्रिमौ न भवति, खड्गकोशाच्च ॥

## कालात्साधुपुष्प्यत्पच्यमानेषु ॥ ४३ ॥

'तत्र' इत्येव। कालविशेषवाचिभ्यः सप्तमीसमर्थेभ्यः साध्वादिष्व-

पदमञ्जरी

दशायां तत्कारणस्य कोशस्य परावृत्तत्वात्, न च कोशान्तरे वस्त्रस्य सम्भवः, न च तत्रेष्यते, तस्माद्विकारे कोशाड्ढञ् सम्भूते ह्यर्थानुपपत्तिरिति वार्त्तिकमेव शरणम्। 'तस्य विकारः' इत्यत्र प्रकरणे 'एण्या ढञ्' इत्यस्यानन्तरम् 'कोशाच्चेति वक्तव्यम्' इत्यर्थः। *अर्थानुपपत्तिरिति*। कौशेयशब्दस्य योऽर्थो लौकिकः सूत्रवस्त्रलक्षणस्तस्यानुपपत्तिः स्यात्, लौकिकोऽर्थः शास्त्रेण नानुसृतः स्यात्। कृमिरेव त्वभिधेयः प्राप्नोति स हि कोशे सम्भवति। किञ्चाविशेषाभिधानात्खड्गकोशादपि प्रत्ययः प्रसज्येत, इत्यत आह—*रूढिरेषेति*। रूढिशब्देषु नावश्यमवयवार्थोऽन्वेष्यः, यथा तैलपायिकादिष्विति मन्यते। *सूत्रकारेण* तु सत्कार्यवादाश्रयेण सम्भूते प्रत्ययो विहितः, तत्र हि कारणदशायामपि कार्यस्य सत्त्वात् तत्र तत्सम्भवति तदनुपपन्नम्। कार्यकारणयोर्हि तादात्म्यमभिसम्बन्धः, न त्वाधाराधेयभावः ॥

*कालात्साधुपुष्प्यत्पच्यमानेषु* ॥ *कालविशेषवाचिभ्य इति*। स्वरूपग्रहणं तु न

न्यासः

कोशात् प्रत्ययः प्रसज्येतेत्याह—रूढिरेषेत्यादि। रूढिशब्दो हि यथाकथञ्चिदुत्पाद्यते, न तत्रावश्यमवयवार्थोऽपेक्ष्यः; क्वचिदवयवार्थसम्भवात्। तथा हि तैलं पिबतीत्येवं तैलपायिकाशब्दो व्युत्पाद्यते, स च तैलपानक्रियारहित एव क्वचित् प्राणिविशेषे वर्तते। तस्माद् यद्यपि कोशे सम्भूतमित्येवं विगृह्य कोशशब्दात् प्रत्यय उत्पाद्यते, तथापि वस्त्रे सूत्रे वा कौशेयशब्दः साधुभावमनुभवति, न कृमौ। अथ खड्गकोशादुत्पत्तौ को दोषः, येन ततः प्रत्ययो नेष्यते ? खड्गस्याभिधानं प्राप्नोति। स हि तत्र सम्भवतीति चेत् ? इतरस्मादपि तर्हि कोशात् प्रत्ययोत्पत्तौ च कृमेरभिधानं प्राप्नोति, स हि तत्र सम्भवति। अथ तत्रापि रूढिवशाद् वस्त्रस्याभिधानम्, न कृमेः। इतरस्मादपि तर्हि कोशादुत्पत्तौ वस्त्रस्याभिधानं न खड्गस्य ? एवं मन्यते—यद्यपि सम्भूताधिकारे कोशाड् ढञ् विधीयते, तथापि कौशेयशब्दान्न सम्भवोऽर्थः प्रतीयते, अपि तु विकारोऽर्थः; रूढिवशात्। कौशेयं वस्त्रमिति कोशविकारो वस्त्रमित्यर्थः। तथा च वार्त्तिककारेणोक्तम्—'विकारे कोशाड् ढञ् सम्भूतार्थानुपपत्तेः' इति। विकारश्च कौशेयशब्दात् कृमिकोशस्य प्रतीयते, न खड्गकोशस्य; रूढिवशात्। तस्माद् यस्य विकारः प्रतीयते तदभिधायिन एव कोशशब्दाद् युक्तः प्रत्ययः; नेतरस्मात् ॥

र्थेषु यथाविहितं प्रत्ययो भवति। हेमन्ते साधुः हैमनः प्राकारः। शैशिरमनुलेपनम्। वसन्ते पुष्यन्ति वासन्त्यः कुन्दलताः। ग्रैष्म्यः पाटलाः। शरदि पच्यन्ते शारदाः शालयः। ग्रैष्मा यवाः॥

## उप्ते च॥ ४४॥

"तत्र' इत्येव, 'कालात्' इति च। सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकादुप्ते यथाविहितं प्रत्ययो भवति। हेमन्ते उप्यन्ते हैमन्ता यवाः। ग्रैष्मा व्रीहयः। योगविभाग उत्तरार्थः॥

## आश्वयुज्या वुञ्॥ ४५॥

आश्वयुजीशब्दाद्वुञ् प्रत्ययो भवति उप्तेऽर्थे। ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः। अश्विनीभ्यां युक्ता पौर्णमासी आश्वयुजी। अश्विनीपर्यायोऽश्वयुक्शब्दः॥

### पदमञ्जरी

भवति; उत्तरत्राश्वयुज्यादीनामनेन कालशब्देन विशेषणात्॥

उप्ते च॥ सूत्रे भूतकालस्याविवक्षां दर्शयति। *हेमन्ते उप्यन्ते इति*। *योगविभाग उत्तरार्थ इति*। उत्तरयोगयोरुक्त एव प्रत्ययो यथा स्यात्, साध्वादिषु मा भूत्॥

*आश्वयुज्या वुञ्*॥ वुञो ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च, अश्वयुग्भ्यां युक्तेति पाठः, अश्वयुजोर्द्वित्वात् 'नमोऽश्विभ्यामश्वयुग्भ्याम्' इति दर्शनात्। *अश्वनीपर्याय* *अश्विनीपर्याय* इति पाठः। 'तारा अश्वयुगश्विनी' इत्यमरसिंहः। *अश्वनीपर्याय*

### न्यासः

कालात् साधुपुष्प्यत्पच्यमानेषु॥ कालादिति स्वर्यते, प्रकृतीरुत्तरा विशेषयितुम्। न च स्वरूपग्रहणे सत्युत्तराः प्रकृतयः शक्या विशेषयितुम्; स्वरूपस्यासाधारणत्वात्। तस्मादर्थग्रहणमेवैतत्। तेन कालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह—कालविशेषवाचिभ्य इत्यादि। हैमन इति 'सर्वत्राण् च तलोपश्च'। शैशिर इत्यादौ सन्धिवेलादिसूत्रेण ऋत्वण्।

उप्ते च॥ योगविभाग उत्तरार्थ इति। उत्तरत्र वुञ् उप्त एव यथा स्यात्; साध्वादिषु मा भूत्।

आश्वयुज्या वुञ्॥ ठञोऽपवाद इति। 'कालाट् ठञ्' इति प्राप्तस्य। ननु च कालाट् ठञ् विहितः। न चाश्वयुजीशब्दः कालवाची, ततः कुतष्ठञ्? इत्याशङ्क्य कालवाचित्वमाश्वयुजीशब्दस्य प्रतिपादयितुमाह—अश्विनीभ्यां युक्तेत्यादि॥

## ग्रीष्मवसन्तादन्यतरस्याम् ॥ ४६ ॥

ग्रीष्मवसन्तशब्दाभ्यामन्यतरस्यां वुञ् प्रत्ययो भवति उप्तेऽर्थे। ऋत्वणोऽपवादः। ग्रैष्मं सस्यम्, ग्रैष्मकम्। वासन्तकम्, वासन्तम् ॥

## देयमृणे ॥ ४७ ॥

'तत्र' इत्येव, 'कालात्' इति च। सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकाद्देयमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद् देयमृणं चेत्तद्भवति। मासे देयमृणं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्।

ऋण इति किम्? मासे देया भिक्षा ॥

## कलाप्यश्वत्थयवबुसाद् वुन् ॥ ४८ ॥

'कालात्' इत्येव। कलापि, अश्वत्थ, यवबुस — इत्येतेभ्यः कालवाचिभ्यः सप्तमीसमर्थेभ्यः 'देयमृणम्' इत्येतस्मिन्नर्थे वुन्प्रत्ययो भवति।

कलाप्यादयः शब्दाः साहचर्यात्काले वर्त्तन्ते। यस्मिन्काले मयूराः कलापिनो भवन्ति स कलापी। यस्मिन्नश्वत्थाः फलन्ति सोऽ-

पदमञ्जरी

इति प्रसिद्धः पाठः, तत्राशुपूर्वादनेरौणादिक इन्प्रत्ययः, पृषोदरादित्वादादेर्ह्रस्वः ॥

*कलाप्यश्वत्थव्यवबुसाद् वुन्* ॥ मयूरादिषु प्रसिद्धानां कलाप्यादीनां शब्दानां काले वृत्तिर्न सम्भवति, तत्कथम् 'कालविशेषवाचिभ्यः' इत्युक्तम्? अत आह— *कलाप्यादयः शब्दा इति*। अश्वत्थेन वृक्षेण कालस्य सम्बन्धोऽव्यभिचारादविशेषणमिति 'फले लुक्' इति लुगन्तोऽश्वत्थशब्द इत्याह—*यस्मिन्नश्वत्थाः फल-*

न्यासः

ग्रीष्मवसन्तादन्यतरस्याम् ॥ देयमृणे ॥ कलाप्यश्वत्थयवबुसाद् वुन् ॥ कथं पुनः कलापादयः शब्दाः काले वर्तन्ते, यावता मयूरादिषु तेषां वृत्तिः प्रसिद्धेत्यत आह—कलाप्यादयः शब्दा इत्यादि। एतदेव विषयं स्पष्टीकरोति—यस्मिन् काल इत्यादि। अश्वत्थशब्दोऽत्र वृक्षविशेषे रूढः। तेन सर्व एव कालः सम्बध्यत इति तद्द्वारेण कालविशेषो न संज्ञायते। तस्मादश्वत्थफलसहचारिणि कालेऽश्वत्थशब्दो वर्तत इति दर्शयितुमाह—यस्मिन्नश्वत्थाः फलन्तीत्यादि। अश्वत्थशब्दो यद्यपि वृक्षे वर्तते, तथापि फले वर्तत एव ॥

श्वत्थः। यस्मिन्यवबुसं सम्पद्यते स यवबुसशब्देनोच्यते।

कलापिनि काले देयमृणं कलापकम्। अश्वत्थकम्। यवबुसकम्॥

## ग्रीष्मावरसमाद् वुञ्॥ ४९॥

ग्रीष्मावर-समशब्दाभ्यां वुञ् प्रत्ययो भवति 'देयमृणम्' इत्येतस्मिन्नर्थे। अणठञोरपवादः। ग्रीष्मे देयमृणं ग्रैष्मकम्। आवरसमकम्।

प्रत्ययान्तरकरणं वृद्ध्यर्थम्। समाशब्दो वर्षपर्यायः॥

## संवत्सराग्रहायणीभ्यां ठञ्च॥ ५०॥

संवत्सराग्रहायणीशब्दाभ्यां ठञ् प्रत्ययो भवति, चकाराद् वुञ्च 'देयमृणम्' इत्येतस्मिन्नर्थे। संवत्सरे देयमृणं सांवत्सरिकम्, सांवत्सरकम्। आग्रहायणिकम्, आग्रहायणकम्।

वेति वक्तव्ये ठञ्ग्रहणं सन्धिवेलादिषु 'संवत्सरात्फलपर्वणोः' इति पठ्यते, तत्र फले ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यादिति॥

पदमञ्जरी

*न्तीति*। अपकृष्टो यवो यवबुसं जात्यन्तरं वा यवादिवत्, यवानामेव वा बुसं यवबुसम्॥

*ग्रीष्मावरसमाद्वुञ्*॥ *अवरसममिति* विशेषणसमासः। न चावरशब्दो दिग्वाची, येन 'दिक्सङ्ख्ये संज्ञायाम्' इति नियमात्समासो न स्यात्। *आवरसमकमिति*। आगामिनां संवत्सराणामाद्यवत्सरे देयमित्यर्थः। अपर आह—अतीते वत्सरे देयं यदद्यापि न दत्तं तदावरसमकमिति॥

*संवत्सराग्रहायणीभ्यां ठञ्च*॥ *वेति वक्तव्ये इति*। वुञि विकल्पिते पक्षे यथा प्राप्तष्ठञेव भविष्यतीति मन्यते। *ठञ्ग्रहणमित्यादि*। असति ठञ्ग्रहणे सन्धि-

न्यासः

ग्रीष्मावरसमाद् वुञ्॥ अणठञोरपवाद इति। ग्रीष्मशब्दादृत्वणोरपवादः। अवरसमाशब्दात् कालाट् ठञः। अवरा चासौ समा चेत्यवरसमा॥

संवत्सराग्रहायणीभ्यां ठञ् च॥ कालाट् ठञि प्राप्ते वचनम्। तेन ठञ् न वक्तव्य इति। वुञि विकल्पिते विनापि ठञ्ग्रहणेन पक्षे यथाप्राप्तं ठञेव भवतीत्यभिप्रायः। ठञ्ग्रहणमित्यादि। तत्र यद्यत्र ठञ्ग्रहणं न क्रियेत 'सन्धिवेला' इत्यादिषु

## व्याहरति मृगः ॥ ५१ ॥

'तत्र' इत्येव, 'कालात्' इति च । कालवाचिनः सप्तमीसमर्थात् प्रातिपदिकाद् 'व्याहरति मृगः' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति । निशायां व्याहरति मृगः नैशः, नैशिकः । प्रादोषः, प्रादोषिकः ।

मृग इति किम् ? निशायां व्याहरत्युलूकः ॥

## तदस्य सोढम् ॥ ५२ ॥

'कालात्' इत्येव । तदिति प्रथमासमर्थात्कालवाचिनः प्रातिपदिकात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं चेत्तद्भवति । सोढम् = जितम् , अभ्यस्तमित्यर्थः । निशासहचरितसोढमध्ययनं निशा, तत्सोढमस्य छात्रस्य नैशः, नैशिकः । प्रादोषः, प्रादोषिकः ॥

## तत्र भवः ॥ ५३ ॥

'कालात्' इति निवृत्तम् । तत्रेति सप्तमीसमर्थाद् ङ्याप्प्रातिपदि-

पदमञ्जरी

वेलादिषु 'संवत्सरात्फलपर्वणोः' इति पाठात्फले ऋणत्वेन विवक्षिते वुञा मुक्तेऽणेव स्यात् , ठञ्ग्रहणात्तु ठञेव भवति ॥

*व्याहरति मृगः* ॥ *व्याहरति* = शब्दायते ॥

*तदस्य सोढम्* ॥ *अस्येति* । नेयं सोढापेक्षया कर्त्तरि षष्ठी, 'न लोकाव्यय' इति प्रतिषेधात्, किं तर्हि ? कर्तुरेव सम्बन्धित्वमात्रविवक्षया शेषलक्षणा षष्ठी । *निशासहचरितमध्ययनमिति* । कालस्य स्वरूपेणासोढत्वात्तत्सहचरितवृत्तेरत्र सूत्रे ग्रहणमिति दर्शयति ॥

*तत्र भवः* ॥ *कालादिति निवृत्तमिति* । 'तत्र जातः' इति प्रकृतं तत्रग्रहणं

न्यासः

'संवत्सरात्फलपर्वणः' इति पाठात् सन्धिवेलाद्यणष्ठञपवादत्वादण्त्वेन काले विवक्षिते वुञा मुक्तेऽणेव स्यात् । ठञ्ग्रहणादणमपि बाधित्वा ठञेव भवति ।

व्याहरति मृगः ॥ नैशिकः, नैशः । प्रादोषिकः, प्रादोष इति । निशाप्रदोषाभ्यां ठञ् । तेन मुक्ते पक्षे ऋत्वणेव भवति ।

तदस्य सोढम् ॥ कालादिति वर्तते, न च कालो जीयते, तस्मान्निशासहचरितमिहाध्ययनं गौण्या वृत्त्या निशेत्येवमादिभिरभिधीयत इति विज्ञायते । अत एवाह— निशासहचरितमध्ययनं निशेति ॥

काद् 'भवः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सत्ता भवत्यर्थो गृह्यते, न जन्म; 'तत्र जातः' इति गतार्थत्वात् । स्रुघ्ने भवः स्रौघ्नः । माथुरः । राष्ट्रियः । पुनस्तत्रग्रहणम् 'तदस्य' इति निवृत्त्यर्थम् ॥

## दिगादिभ्यो यत् ॥ ५४ ॥

'दिश्' इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत्प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणश्छस्य चापवादः । दिशि भवं दिश्यम् । वर्ग्यम् ।

मुख-जघनशब्दयोरशरीरावयवार्थः पाठः – सेनामुख्यम्, सेनाजघन्यमिति[1] ।

दिश् । वर्ग । पूग । गण । पक्ष । धाय्या । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि । अन्त । मुख । जघन । मेघ । यूथ । ❀ उदकात्संज्ञायाम्[2] ❀ ॥ न्याय । वंश । अनुवंश । विश । काल । अप् । आकाश । दिगादिः ॥

### पदमञ्जरी

कालाधिकारेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह तत्रग्रहणं कृतम् 'सप्तम्यर्थमात्रं यथा गृह्येत कालसम्बन्धविशिष्टः सप्तम्यर्थो मा ग्राहि' इत्येवमर्थमिति भावः । ननु च प्रकृतं तत्रग्रहणं पूर्वसूत्रे तदिति प्रथमया समर्थविभक्त्या व्यवहितम्? नेत्याह, शक्यं हि तदन्यत्रापि पठितुम् ॥

*दिगादिभ्यो यत्* ॥ *सेनामुख्यमिति* । यदन्तस्य सेनाशब्देन षष्ठीसमासः, न तु सेनामुख्यशब्दात्प्रत्ययः; तदन्तविध्यभावात् ॥

### न्यासः

तत्र भवः ॥ दिगादिभ्यो यत् ॥ अणश्छस्य चापवाद इति । यद् दिगादिषु वृद्धं वाप्यादि ततश्छस्यापवादः, शेषेभ्यस्त्वणः प्राग्दीव्यतीयस्य ।

अथ मुखजघनयोश्च किमर्थः पाठो दिगादिषु, यावता शरीरावयवात् ताभ्यामुत्तरसूत्रेणैव भविष्यति? इत्याह–मुखजघनयोरिति । सेनावयववाचिनौ हि यौ मुखजघनशब्दौ

---

1. 'मुखजघनाभ्यां सेनाया अग्रभागपश्चाद्भागावुच्येते' इत्यधिकः पाठः क्वचित्पुस्तके ।
2. इतोऽग्रे 'उदक्या रजस्वला । संज्ञायामिति किम् ? औदको मत्स्यः'—इत्यधिकं पुस्तकान्तरे, वस्तुतस्तु तन्न्यासस्थव्याख्यानम् ।

## व्याहरति मृगः ॥ ५१ ॥

'तत्र' इत्येव, 'कालात्' इति च। कालवाचिनः सप्तमीसमर्थात् प्रातिपदिकाद् 'व्याहरति मृगः' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। निशायां व्याहरति मृगः नैशः, नैशिकः। प्रादोषः, प्रादोषिकः।

मृग इति किम्? निशायां व्याहरत्युलूकः ॥

## तदस्य सोढम् ॥ ५२ ॥

'कालात्' इत्येव। तदिति प्रथमासमर्थात्कालवाचिनः प्रातिपदिकात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं श्चेत्तद्भवति। सोढम् = जितम्, अभ्यस्तमित्यर्थः। निशासहचरितसोढमध्ययनं निशा, तत्सोढमस्य छात्रस्य नैशः, नैशिकः। प्रादोषः, प्रादोषिकः ॥

## तत्र भवः ॥ ५३ ॥

'कालात्' इति निवृत्तम्। तत्रेति सप्तमीसमर्थाद् ङ्याप्प्रातिपदि-

पदमञ्जरी

वेलादिषु 'संवत्सरात्फलपर्वणोः' इति पाठात्फले ऋणत्वेन विवक्षिते वुञा मुक्तेऽणेव स्यात्, ठञ्ग्रहणात्तु ठञेव भवति ॥

*व्याहरति मृगः* ॥ *व्याहरति* = शब्दायते ॥

*तदस्य सोढम्* ॥ *अस्येति*। नेयं सोढापेक्षया कर्त्तरि षष्ठी, 'न लोकाव्यय' इति प्रतिषेधात्, किं तर्हि? कर्तुरेव सम्बन्धित्वमात्रविवक्षया शेषलक्षणा षष्ठी। *निशासहचरितमध्ययनमिति*। कालस्य स्वरूपेणासोढत्वात्तत्सहचरितवृत्तेरत्र सूत्रे ग्रहणमिति दर्शयति ॥

*तत्र भवः* ॥ *कालादिति निवृत्तमिति*। 'तत्र जातः' इति प्रकृतं तत्रग्रहणं

न्यासः

'संवत्सरात्फलपर्वणः' इति पाठात् सन्धिवेलाद्यणठञपवादत्वादण्त्वेन काले विवक्षिते वुञा मुक्तेऽणेव स्यात्। ठञ्ग्रहणादणमपि बाधित्वाट्ठञेव भवति।

व्याहरति मृगः ॥ नैशिकः, नैशः। प्रादोषिकः, प्रादोष इति। निशाप्रदोषाभ्यां ठञ्। तेन मुक्ते पक्षे ऋत्वणेव भवति।

तदस्य सोढम् ॥ कालादिति वर्तते, न च कालो जीयते, तस्मान्निशासहचरितमिहाध्ययनं गौण्या वृत्त्या निशेत्येवमादिभिरभिधीयत इति विज्ञायते। अत एवाह—निशासहचरितमध्ययनं निशेति ॥

काद् 'भवः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सत्ता भवत्यर्थो गृह्यते, न जन्म; 'तत्र जातः' इति गतार्थत्वात् । स्रुघ्ने भवः स्रौघ्नः । माथुरः । राष्ट्रियः । पुनस्तत्रग्रहणम् 'तदस्य' इति निवृत्त्यर्थम् ॥

## दिगादिभ्यो यत् ॥ ५४ ॥

'दिश्' इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत्प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणश्छस्य चापवादः । दिशि भवं दिश्यम् । वर्ग्यम् ।

मुख-जघनशब्दयोरशरीरावयवार्थः पाठः – सेनामुख्यम् , सेनाजघन्यमिति[1] ।

दिश् । वर्ग । पूग । गण । पक्ष । धाय्या । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि । अन्त । मुख । जघन । मेघ । यूथ । ॐ उदकात्संज्ञायाम्[2] ॐ ॥ न्याय । वंश । अनुवंश । विश । काल । अप् । आकाश । दिगादिः ॥

### पदमञ्जरी

कालाधिकारेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह तत्रग्रहणं कृतम् 'सप्तम्यर्थमात्रं यथा गृह्येत कालसम्बन्धविशिष्टः सप्तम्यर्थो मा ग्राहि' इत्येवमर्थमिति भावः । ननु च प्रकृतं तत्रग्रहणं पूर्वसूत्रे तदिति प्रथमया समर्थविभक्त्या व्यवहितम् ? नेत्याह, शक्यं हि तदन्यत्रापि पठितुम् ॥

*दिगादिभ्यो यत्* ॥ *सेनामुख्यमिति* । यदन्तस्य सेनाशब्देन षष्ठीसमासः, न तु सेनामुख्यशब्दात्प्रत्ययः; तदन्तविध्यभावात् ॥

### न्यासः

तत्र भवः ॥ दिगादिभ्यो यत् ॥ अणश्छस्य चापवाद इति । यद् दिगादिषु वृद्धं वाप्यादि ततश्छस्यापवादः, शेषेभ्यस्त्वणः प्राग्दीव्यतीयस्य ।

अथ मुखजघनयोश्च किमर्थः पाठो दिगादिषु, यावता शरीरावयवात् ताभ्यामुत्तरसूत्रेणैव भविष्यति ? इत्याह—मुखजघनयोरिति । सेनावयववाचिनौ हि यौ मुखजघनशब्दौ

---

१. 'मुखजघनाभ्यां सेनाया अग्रभागपश्चाद्भागावुच्येते' इत्यधिकः पाठः क्वचित्पुस्तके ।

२. इतोऽग्रे 'उदक्या रजस्वला । संज्ञायामिति किम् ? औदको मत्स्यः'—इत्यधिकं पुस्तकान्तरे, वस्तुतस्तु तन्न्यासस्थव्याख्यानम् ।

## शरीरावयवाच्च ॥ ५५ ॥

शरीरम् = प्राणिकायः । शरीरावयववाचिनः प्रातिपदिकाद् यत्प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । दन्तेषु भवं दन्त्यम् । कण्ठ्यम् । ओष्ठ्यम् ॥

## दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ५६ ॥

दृत्यादिभ्यः प्रातिपदिकेभ्यो ढञ् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । दृतौ भवं दार्तेयम् । कौक्षेयम् । कालशेयम् । वास्तेयम् । आस्तेयम् । आहेयमजरं विषम् ।

अस्तिशब्दः प्रातिपदिकम् , न तिङन्तः ॥

पदमञ्जरी

*शरीरावयवाच्च* ॥ *शरीरं प्राणिकाय इति* । 'व्याकरणस्य शरीरम्' इत्यादिकस्तु प्रयोगो गौणः । *अणोऽपवाद इति* । वृद्धात्तु छं परत्वाद्बाधते, पादे भवं पद्यम्, 'पद्यत्यतदर्थे' इति पद्भावः । नासिकायां भवं नस्यम् , 'नस् नासिकाया यत्तस्क्षुद्रेषु' इति नसभावः । कथम् 'वेगो जङ्घोरस्यः' इति ? कथं च न स्यात् , न शरीरावयवसमुदायः शरीरावयवग्रहणेन गृह्यते । न च तदन्तविधिरस्ति ? निरङ्कुशाः कवयः ॥

*दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्* ॥ दृतिश्चर्मविकारः, शरीरावयवश्च । कुक्षिशब्दो धूमादिः, वस्तिर्नाभेरधः शरीरावयवः । *आहेयम्* विषादि ।

*अस्तिशब्दः प्रातिपदिकमिति* । विभक्तिप्रतिरूपं निपातसंज्ञकम्, तच्च

न्यासः

तौ शरीरावयववाचिनौ न भवतः । पाणिपादाद्यवयवस्वभावं हि शरीरम्, न चैवमात्मिका सेना; किं तर्हि ? रथादिसमुदायात्मिका ।

उदकात्संज्ञायामिति । उदकशब्दात् संज्ञायां गम्यमानायां यद्भवति—उदक्या स्त्री, रजस्वलोच्यते । न चात्र प्रकृत्यर्थः प्रत्ययार्थो वा विद्यते । सा च तयोरविद्यमानता संज्ञाग्रहणेन विज्ञायते । संज्ञायामन्यत्र—औदको मत्स्य इति, अत्राणेव भवति ॥

शरीरावयवाच्च ॥ अणोऽपवाद इति । नाप्राप्ते तस्मिन्नस्यारम्भात् । यस्तु पादादिवृद्धस्ततः परत्वाद् यत् छं बाधते ।

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ दृतिकुक्षिभ्यां शरीरावयवत्वाद् यति प्राप्ते; कुक्षिशब्दो धूमादिष्वपि पठ्यते, तस्माद् 'धूमादिभ्यश्च' इति वुञि प्राप्ते; शेषेभ्यस्त्वणि ढञ् विधीयते ।

अस्तिशब्दस्तिङन्तो मा विज्ञायीत्यत आह—अस्तिशब्द इत्यादि । 'विभक्तिस्वर-

## ग्रीवाभ्योऽण् च ॥ ५७ ॥

ग्रीवाशब्दादण्प्रत्ययो भवति, चकाराड्ढञ्च, 'तत्र भवः' इत्येतस्मिन्विषये, शरीरावयवाद्यतोऽपवादः । ग्रीवासु भवं ग्रैवम्, ग्रैवेयम् ।

ग्रीवाशब्दो धमनीवचनः, तासां बहुत्वाद्बहुवचनं कृतम् ॥

## गम्भीराञ्ज्यः ॥ ५८ ॥

गम्भीरशब्दाद् ञ्यः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । गम्भीरे भवं गाम्भीर्यम् ।

* बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम् * । बाह्यम् । दैव्यम् । पाञ्चजन्यम्[1] ॥

पदमञ्जरी

तिङन्तेन समानार्थम्—अस्तिक्षीरा गौरिति, धनवचनं च अस्तिमानिति ॥

*ग्रीवाभ्योऽण्च* ॥ *धमनीवचन इति* । धमनीसङ्घातवचन इत्यर्थः । स च यदोद्भूतावयवभेदे सङ्घाते वर्त्तते तदा बहुवचनम्, यदा तु तिरोहितावयवभेदे सङ्घाते वर्त्तते तदैकवचनान्तः प्रयोगः ॥

*गम्भीराञ्ज्यः* ॥ *बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यमिति* । 'प्राग्दीव्यतः' इत्यत्रोक्तम्—'देवस्य यञञौ, बहिषष्टिलोपश्च' इति । तत्रावश्यं वक्तव्यम्—अर्थान्तरेष्वपि यथा स्यादिति । तस्यैव प्रपञ्चार्थम्, इह तु बहिर्देवयोर्ग्रहणम् ॥

न्यासः

प्रतिरूपकाश्चेति निपाता भवन्ति' इति निपातसंज्ञकं तिङन्तसदृशं प्रातिपदिकमेतत्, न तिङन्तः । एतच्च तिङन्तेन समानार्थम्, यथा—अस्तिक्षीरा ब्राह्मणीति । भिन्नार्थश्च यथा धने वर्तते, यथा—अस्तिमानिति । धनवानिति गम्यते । तदिह विशेषस्यानभिधानादुभयस्यापि ग्रहणम् ॥

ग्रीवाभ्योऽणु च ॥ बहुवचननिर्देशाद् बहुवचनान्तात् प्रत्ययेन भवितव्यम्, अन्यथा ह्येकवचनेनैव निर्देशं कुर्यादिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—ग्रीवाशब्द इत्यादि । अर्थविशेषाद् बहुवचननिर्देशः कृतः, न तु बहुवचनान्तादेव यथा स्यादिति दर्शयति ॥

गम्भीराञ्ज्यः ॥ बहिर्देवेत्यादि । बहिर्देवपञ्चजनेभ्यश्च ञ्यो भवतीत्येतदर्थरूपं

---

1. '* चतुर्मासाद्यज्ञे ञ्यो वक्तव्यः * । चातुर्मास्यानि व्रतानि । चातुर्मास्यो यज्ञः । चातुर्मासोऽन्यत्र' इत्यधिकं बहुषु पुस्तकेषु ।

## अव्ययीभावाच्च ॥ ५९ ॥

अव्ययीभावसंज्ञकात्प्रातिपदिकाच्च ञ्यः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । न च सर्वस्मादव्ययीभावाद्भवति, किं तर्हि ? परिमुखादेः, परिमुखादीनां च गणपाठस्यैतदेव प्रयोजनम् — तेषां विशेषणमव्ययीभावग्रहणम् । परिमुखं भवं पारिमुख्यम् । पारिहनव्यम् । परिमुखादेरन्यत्र न भवति — औपकूलम् ।

परिमुख । परिहनु । पर्योष्ठ । पर्युलू । औपमूल । खल । परिसीर । अनुसीर । उपसीर । उपस्थल । उपकलाप । अनुपथ । अनुखङ्ग । अनुतिल । अनुशीत । अनुमाष । अनुयव । अनुयूप । अनुवंश[1] ॥

पदमञ्जरी

*अव्ययीभावाच्च* ॥ *किं तर्हि परिमुखादेरिति* । कथं पुनः सामान्योक्तावयं विशेषो लभ्यत इत्याह— *परिमुखादीनां चेति* । चशब्दो हेतौ । दिगादेरनन्तरं परिमुखादिगणः पठ्यते, तस्य नान्यत्प्रयोजनं सम्भवति अव्ययीभावग्रहणस्य, परिमुखादिविशेषणतयाऽन्वयसम्भवात्, तस्मात्परिमुखादेरेव भविष्यति, न सर्वस्मादव्ययीभावात् । यद्येवम्, परिमुखादेरित्येव वक्तव्यमत आह—*तेषामेवेति* ।

न्यासः

व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽत्र वर्तते, तेन बहिरादिभ्योऽपि ञ्यो भविष्यतीति ॥

अव्ययीभावाच्च ॥ किं तर्हीत्यादि । कथं पुनरव्ययीभावादिति सामान्येनोच्यमानः प्रत्ययः परिमुखादेरेव ? इत्यत आह—परिमुखादीनाञ्चेत्यादि । चशब्दो हेतौ । न ह्यन्यत् कार्यमस्ति परिमुखादिगणपाठस्य । तत्र यद्यप्येतदपि न स्याद्, विध्यर्थमेव तस्य स्यात्,तस्मात् परिमुखादेरेव भवति, न सर्वस्मादव्ययीभावात् । यद्येवम्,परिमुखादेरित्येवं वक्तव्यमित्याह तेषामित्यादि । यदि हि परिमुखादेरित्युच्यते, ततोऽसत्यव्ययीभावग्रहणे तत्पुरुषेभ्योऽपि परिमुखादिभ्यः प्रत्ययः स्यात्, तस्मिंस्तु सति न भवति—परिगतं मुखं परिमुखमिति प्रादिसमासः, तत्र भवः पारिमुखः; अणेव भवति । अपि च—उत्तरार्थमव्ययीभावग्रहणमवश्यमेव कर्तव्यम् —'अन्तःपूर्वपदाट्ठञ्' । 'ग्रामात्पर्यनुपूर्वात्' इत्यव्ययीभावाद् यथा स्यात् । पारिहनव्यमिति । 'ओर्गुणः', 'वान्तो यि प्रत्यये' इत्यवादेशः । औपकूलमिति । 'अव्ययं विभक्ति' इत्यादिनाव्ययीभावः । एष च परिमुखादि न पठ्यत

1. 'अनुस्वङ्ग'—इति पुस्तकान्तरेऽधिकः ।

## अन्तःपूर्वपदाट्ठञ् ॥ ६० ॥

'अव्ययीभावात्' इत्येव । अन्तःशब्दो विभक्त्यर्थे समस्यते, तत्पूर्वपदादव्ययीभावाट्ठञ् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । आन्तर्वेश्मिकम् । आन्तर्गेहिकम्[1] ।

* समानशब्दाट्ठञ् वक्तव्यः * । समाने भवं सामानिकम् ।

* तदादेश्च * । सामानग्रामिकम् । सामानदेशिकम् ।

* अध्यात्मादिभ्यश्च * । आध्यात्मिकम् । आधिदैविकम् ।

### पदमञ्जरी

'परिमुखादेः' इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञ्यप्रत्ययः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवति । उत्तरार्थं चावश्यमव्ययीभावग्रहणं कर्त्तव्यम्, तत्र ये परिपूर्वास्तत्र यदि वर्जनं गम्यते ततः 'अपपरिबहिरञ्चवः । पञ्चम्या' इत्यव्ययीभावः । अथ सर्वतो भावः, ततोऽस्मादेव निपातनादव्ययीभावः । उपपूर्वेषु सामीप्येऽनुपूर्वेषु 'अनुर्यत्समया' 'यस्य चायामः' 'पश्चादर्थे यदव्ययम्' इति च यथाभिधानं समासः ॥

*अन्तःपूर्वपदाट्ठञ्* ॥ *आध्यात्मिकमिति* । 'अनश्च' इति टच् समासान्तः ।

### न्यासः

इत्यणेव भवति । अत्र परिमुखमिति कथमव्ययीभावः, यावता अपपरिबहिरञ्चवः पञ्चम्या समस्यन्ते, पञ्चमी च परिणा कर्मप्रवचनीयेन योगे भवति, कर्मप्रवचनीयसंज्ञा तु 'अपपरी वर्जने' इत्यनेन; न च परिमुखे वर्जनं गम्यते, किं तर्हि ? सर्वतोभावः ? एवं तर्हि 'अव्ययम्' इति योगविभागादव्ययीभावो भविष्यति ।

अन्ये तु येऽत्र परिहनुप्रभृतयोऽव्ययीभावाः, ते 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेनैव भवन्ति । अत्र येष्वपि वर्जनं न गम्यते, ततस्तेष्वपि 'अव्ययम्' इति योगविभागेनैव । ये तूपसीरादय उपपूर्वाः, ते सामीप्ये 'अव्ययम्' इत्यादिना । अनुगङ्गमिति । 'यस्य चायामः' इत्यव्ययीभावः । अन्ये तु येऽनुसीरादयोऽनुपूर्वास्ते पश्चादर्थेऽव्ययमित्यादिना ॥

अन्तःपूर्वपदाट्ठञ् ॥ अन्तःशब्दो विभक्त्यर्थे समस्यत इति । 'अव्ययं विभक्ति' इत्यादिना । विभक्त्यर्थस्त्वधिकरणम्, अन्तःशब्दस्याधिकरणप्रधानत्वात् ।

समानशब्दाट्ठञ्वक्तव्य इति । वक्तव्यशब्दो व्याख्येये । तत्रेदं व्याख्यानम्—इहान्तःपूर्वादित्येवं सिद्धे यदधिकं पदग्रहणं तदधिकमिह कार्यं भवतीत्येवमर्थं क्रियते, तेन समानशब्दादपि ठञ् भवतीति । एतेन शब्दान्तरादेव ।

---

१. 'आन्तरगारिकम्'—इत्यधिकं पुस्तकान्तरे ।

आधिभौतिकम्[1] । अध्यात्मादिराकृतिगणः ।

* ऊर्ध्वन्दमाच्च ठञ् वक्तव्यः * । और्ध्वन्दमिकः । ऊर्ध्वशब्देन समानार्थं ऊर्ध्वन्दमशब्दः ।

* ऊर्ध्वदेहाच्च * । और्ध्वदेहिकम् ।

* लोकोत्तरपदाच्च * । ऐहलौकिकम् । पारलौकिकम् ।

* मुखपार्श्वशब्दाभ्यां तसन्ताभ्यामीयः प्रत्ययो वक्तव्यः * । मुखतीयम् । पार्श्वतीयम् ।

पदमञ्जरी

*आधिदैविकम्, आधिभौतिकमिति* । अनुशतिकादित्वादुभयपदवृद्धिः । *अध्यात्मादिराकृतिगण इति* । एवं च समानशब्दादित्यादिरस्यैव प्रपञ्चः ।

*ऊर्ध्वशब्देन समानार्थं ऊर्ध्वशब्द इति* । स चैतद्वृत्तिविषय एव । अपर आह—'ठञ्सन्नियोगेन दम शब्द उत्तरे ऊर्ध्वशब्दस्यैव मान्तत्वं निपात्यते' इति ।

*ऊर्ध्वदेहाच्चेति* । नात्र मान्तत्वम् ।

*ऐहलौकिकमिति* । पूर्ववदुभयपदवृद्धिः ।

*मुखतीयम्, पार्श्वतीयमिति* । मुख-पार्श्व-शब्दाभ्यां सप्तम्यान्ताभ्यामाद्यादित्वात्तसिः, तत ईयः, अव्ययत्वाट्टिलोपः । अयं गहादिपाठस्यैव प्रपञ्चः । एतेन परं व्याख्यातम् ।

न्यासः

अध्यात्मादिभ्य ऊर्ध्वन्दमादूर्ध्वदेहाल्लोकोत्तरपदाच्च ठञ् भवतीति वेदितव्यम् । आध्यात्मिकमिति । आत्मन्यधि अध्यात्मम्, विभक्त्यर्थेऽव्ययीभावः । 'अनुशतिकादीनाञ्च' इत्युभयपदवृद्धिः । अध्यात्मादिराकृतिगणश्चायमिति । यद्येवम्, 'समानशब्दाट्ठञ् वक्तव्यः, इत्याद्यनर्थकम्, अध्यात्मादिभ्यश्चेत्यनेनैव सिद्धत्वात् ? नानर्थकम्; अस्यैव प्रपञ्चार्थत्वात् । अध्यात्मादिरेव तत् प्रपञ्च्यते । ननु चाकारान्त ऊर्ध्वशब्दः, तत् कुत इह मकारान्तत्वमायातम् इत्याह—ऊर्ध्वशब्देनेत्यादि ।

ऐहलौकिकः, पारलौकिक इति । पूर्ववदुभयपदवृद्धिः ।

मुखतीयम्, पार्श्वतीयमिति । 'अपादाने चाहीयरुहोः' इति तसिः । 'आद्यादिभ्य उपसंख्यानम्' इत्यौपसंख्यानिको वा । 'अव्ययानां भमात्रे टिलोपः' इत्यनेन टिलोपः ।

---

१. 'अनुशतिकादीनां चेत्युभयपदवृद्धिः' इत्यधिकं कुत्रचित् ।

* जनपरयोः कुक्च * । जनकीयम् । परकीयम् ।

* मध्यशब्दादीयः * । मध्यीयः ।

* मण्मीयौ च प्रत्ययौ वक्तव्यौ * । माध्यमम् । मध्यमीयम् ।

* मध्यो मध्यं दिनण् चास्मात् * । मध्ये भवं माध्यन्दिनम् ।

* स्थाम्नो लुग्वक्तव्यः * । अश्वत्थामा ।

* अजिनान्ताच्च * । वृकाजिनः । सिंहाजिनः ॥

समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।

पदमञ्जरी

*मण्मीयाविति* । गहादिषु 'मध्यमध्यमं चाण् चरणे' इति यत्पठितं तत्र 'पृथिवीमध्यवाची मध्यशब्दो गृह्यते' इत्युक्तम्, भवार्थे तु ततोऽन्यत्रापि मध्यमीयमिति यथा स्यादिति मीयप्रत्ययवचनम् । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति भवति, न मध्यान्तरवाचिनः । तथा गहादिपाठेन पृथिवीमध्यं निवास एषामित्यस्मिन्नेवार्थे माध्यमा इति सिध्यति, मध्यान्तरवाचिनो भवार्थेऽपि यथा स्यादिति मण् प्रत्यय उक्तः ।

*मध्यो मध्यंदिनण् चास्मादिति* । मध्यशब्दो मध्यभावमापद्यते दिनण्चास्मात् प्रत्ययो भवतीत्यर्थः ।

*स्थाम्न इति* । स्थामन्शब्दान्तादित्यर्थः । *अश्वत्थामेति* । अश्वस्येव स्थाम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात्सकारस्य तकारः, ततो भवार्थे 'स्थाम्नोऽकारः' इत्यकारः, तस्यानेन लुक् ।

*वृकाजिन इति* । अणो लुक् ।

*समानस्य तदादेश्चेति* । आनन्तर्यत्वलक्षणा षष्ठी । *अध्यात्मादिष्विति* ।

न्यासः

मण्मीयौ च प्रत्ययौ वक्तव्याविति । मध्यशब्दादित्यपेक्षते ।

मध्यो मध्यं दिनण् चास्मादिति । मध्यशब्दो मध्यम्भावमापद्यते, दिनण् चास्मात् प्रत्ययो भवति ।

स्थाम्न इति । स्थामशब्दान्तात् प्रातिपदिकात् । अश्वस्येव स्थाम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात् सकारस्य तकारः । अश्वत्थाम्नि भव इत्यण्, तस्य लुक् ।

अजिनान्ताच्चेति । लुगिति सम्बध्यते । वृकाजिन इति । अणो लुक् ।

समानस्येति । आनन्तर्यलक्षणा षष्ठी । समानशब्दादनन्तरष्ठञिष्यत इत्यर्थः । अध्यात्मादिष्विति । वैषयिकेऽधिकरणे सप्तमी । अध्यात्मादिविषये ठञिष्यत इत्यर्थः ।

ऊर्ध्वंदमाच्च देहाच्च लोकोत्तरपदस्य च ॥
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा ॥
मध्यो मध्यं दिनण्चास्मात्स्थाम्नो लुगजिनात्तथा ॥

## ग्रामात्पर्यनुपूर्वात् ॥ ६१ ॥

'अव्ययीभावात्' इत्येव । ग्रामशब्दान्तादव्ययीभावात् परि, अनु – इत्येवम्पूर्वाट्ठञ् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । पारिग्रामिकः । आनुग्रामिकः ॥

## जिह्वामूलाङ्गुलेश्छः ॥ ६२ ॥

जिह्वामूलशब्दादङ्गुलिशब्दाच्च छः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ॥

## वर्गान्ताच्च ॥ ६३ ॥

वर्गशब्दान्ताच्च प्रातिपदिकाच् छः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । कवर्गीयम् । चवर्गीयम् ॥

## अशब्दे यत्खावन्यतरस्याम् ॥ ६४ ॥

### पदमञ्जरी

विषयसप्तमी । *ऊर्ध्वंदमाच्च देहाच्चेति* । ऊर्ध्वशब्दाद्दमशब्दान्ताच्चेत्यर्थः । ऊर्ध्वपूर्वादेव च देहान्तादिष्यते । उक्तं हि प्राक् 'ऊर्ध्वदेहाच्च, और्ध्वदेहिकम्' इति । *स्थाम्नो लुगजिनात्तथेति* पाठे उभयत्रापि तदन्तविधिः ॥

### न्यासः

कुग्जनस्य परस्य चेति । चकारादीयश्च प्रत्ययः । ऊर्ध्वंदमाच्च देहाच्चेति । ऊर्ध्वशब्दात् परस्मात् दमशब्दादूर्ध्वशब्दाद्देहशब्दाच्च ठगिष्यत इत्यर्थः । ईयः कार्योऽथ मध्यस्येति । अथशब्दः समुच्चये । मध्यशब्दस्यानन्तर ईयः कार्यं इत्यर्थः । मण्मीयौ प्रत्ययो तथेति । मध्यशब्दादित्यपेक्ष्यते । मण्मीयौ मध्यशब्दस्यानन्तरौ कर्तव्यौ । अजिनात् तथेति । अजिनान्तात् लुग्वक्तव्य इत्यर्थः ॥

ग्रामात् पर्यनुपूर्वात् ॥ पारिग्रामिकमिति । ग्रामात् परीति । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । आनुग्रामिकमिति । अत्रापि 'अनुर्यत्समया' इति ॥

जिह्वामूलाङ्गुलेश्छः ॥ यतोऽपवाद इति । 'शरीरावयवाच्च' इति प्राप्तस्य ।

'वर्गान्तात्' इत्येव। शब्दादन्यस्मिन्प्रत्ययार्थे वर्गान्तात्प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः 'तत्र भवः' इत्येतस्मिन्विषये। छे प्राप्ते वचनम्, पक्षे सोऽपि भवति। वासुदेववर्ग्यः। वासुदेववर्गीणः। वासुदेववर्गीयः[1]। युधिष्ठिरवर्ग्यः। युधिष्ठिरवर्गीणः। युधिष्ठिरवर्गीयः।

अशब्द इति किम्? कवर्गीयो वर्णः॥

**कर्णललाटात्कनलंकारे॥ ६५॥**

कर्ण-ललाटशब्दाभ्यां कन् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन् विषयेऽलङ्कारेऽभिधेये। यतोऽपवादः। कर्णिका। ललाटिका।

अलङ्कार इति किम्? कर्ण्यम्। ललाट्यम्॥

**तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः॥ ६६॥**

व्याख्यायतेऽनेनेति व्याख्यानम्, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम। तस्येति षष्ठीसमर्थाद् व्याख्यातव्यनाम्नः प्रातिपदिकाद् व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति, तत्र भवे च। वाक्यार्थ-

पदमञ्जरी

*अशब्दे यत्खावन्यतरस्याम्॥ वासुदेववर्गीय इति।* 'वृद्धाच्छः' इत्यस्य परत्वाद्यत्खौ बाधकाविति वृद्धादप्यनेन छ एषितव्यः॥

*तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः॥ तस्येति षष्ठीसमर्थादिति।* ननु चाधिकारार्थोऽयमिति वक्ष्यति, भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि ताविति, तत्किमित्यत्र यथाविहितविधानार्थत्वं व्याख्यायते? उच्यते—तात्पर्यतोऽपवादविधानायाधिकारस्यानुषङ्गिकेऽणादिविधानार्थत्वे को दोष इति मन्यते, अगतिकगतिर्हि विशेषविवक्षायां सामान्याश्रयः प्रत्ययः। अत एव 'क्रतलब्धक्रीतकुशलाः' इत्यादीन्यनपवादान्यर्थादेशनानि भवन्ति। *तत्र भवे*

न्यासः

वर्गान्ताच्च॥ अशब्दे यत्खावन्यतरस्याम्॥ छे प्राप्त इति। पूर्वसूत्रेण॥

कर्णललाटात् कनलङ्कारे॥ कर्णिकाशब्दश्चाभरणविशेषे रूढः। रूढिशब्देषु च नावश्यमपि कर्णसम्बन्धेन भवितव्यम्॥

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः॥ तस्य व्याख्यानमिति। व्याख्यायतेऽनेनेति व्याख्यानम्, करणे ल्युट्। चकारात् तत्र भवे चेति। ननु च

१. 'अर्जुनवर्ग्यः, अर्जुनवर्गीणः, अर्जुनवर्गीयः'— इत्यधिकं क्वचित्।

ऊर्ध्वन्दमाच्च देहाच्च लोकोत्तरपदस्य च ॥
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा ॥
मध्यो मध्यं दिनण्चास्मात्स्थाम्नो लुगजिनात्तथा ॥

ग्रामात्पर्यनुपूर्वात् ॥ ६१ ॥

'अव्ययीभावात्' इत्येव । ग्रामशब्दान्तादव्ययीभावात् परि, अनु – इत्येवम्पूर्वाट्ठञ् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये ; अणोऽपवादः । पारिग्रामिकः । आनुग्रामिकः ॥

जिह्वामूलाङ्गुलेश्छः ॥ ६२ ॥

जिह्वामूलशब्दादङ्गुलिशब्दाच्च छः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ॥

वर्गान्ताच्च ॥ ६३ ॥

वर्गशब्दान्ताच्च प्रातिपदिकाच् छः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । कवर्गीयम् । चवर्गीयम् ॥

अशब्दे यत्खावन्यतरस्याम् ॥ ६४ ॥

पदमञ्जरी

विषयसप्तमी । *उर्ध्वन्दमाच्च देहाच्चेति* । ऊर्ध्वशब्दाद्दमशब्दान्ताच्चेत्यर्थः । ऊर्ध्वपूर्वादेव च देहान्तादिष्यते । उक्तं हि प्राक् 'उर्ध्वदेहाच, और्ध्वदेहिकम्' इति । *स्थाम्नो लुगजिनात्तथेति* पाठे उभयत्रापि तदन्तविधिः ॥

न्यासः

कुग्जनस्य परस्य चेति । चकारादीयश्च प्रत्ययः । ऊर्ध्वन्दमाच्च देहाच्चेति । ऊर्ध्वशब्दात् परस्मात् दमशब्दादूर्ध्वशब्दाद्देहशब्दाच्च ठगिष्यत इत्यर्थः । ईयः कार्योऽथ मध्यस्येति । अथशब्दः समुच्चये । मध्यशब्दस्यानन्तर ईयः कार्य इत्यर्थः । मण्मीयौ प्रत्ययो तथेति । मध्यशब्दादित्यपेक्ष्यते । मण्मीयौ मध्यशब्दस्यानन्तरौ कर्तव्यौ । अजिनात् तथेति । अजिनान्तात् लुग्वक्तव्य इत्यर्थः ॥

ग्रामात् पर्यनुपूर्वात् ॥ पारिग्रामिकमिति । ग्रामात् परीति । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । आनुग्रामिकमिति । अत्रापि 'अनुर्यत्समया' इति ॥

जिह्वामूलाङ्गुलेश्छः ॥ यतोऽपवाद इति । 'शरीरावयवाच्च' इति प्राप्तस्य ।

'वर्गान्तात्' इत्येव। शब्दादन्यस्मिन्प्रत्ययार्थे वर्गान्तात्प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः 'तत्र भवः' इत्येतस्मिन्विषये। छे प्राप्ते वचनम्, पक्षे सोऽपि भवति। वासुदेववर्ग्यः। वासुदेववर्गीणः। वासुदेववर्गीयः[1]। युधिष्ठिरवर्ग्यः। युधिष्ठिरवर्गीणः। युधिष्ठिरवर्गीयः।

अशब्द इति किम्? कवर्गीयो वर्णः॥

**कर्णललाटात्कनलंकारे॥ ६५॥**

कर्ण-ललाटशब्दाभ्यां कन् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन् विषयेऽलङ्कारेऽभिधेये। यतोऽपवादः। कर्णिका। ललाटिका।

अलङ्कार इति किम्? कर्ण्यम्। ललाट्यम्॥

**तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः॥ ६६॥**

व्याख्यायतेऽनेनेति व्याख्यानम्, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम। तस्येति षष्ठीसमर्थाद् व्याख्यातव्यनाम्नः प्रातिपदिकाद् व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति, तत्र भवे च। वाक्यार्थं-

पदमञ्जरी

अशब्दे यत्खावन्यतरस्याम्॥ *वासुदेववर्गीय इति*। 'वृद्धाच्छः' इत्यस्य परत्वाद्यत्खौ बाधकाविति वृद्धादप्यनेन छ एषितव्यः॥

*तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः॥ तस्येति षष्ठीसमर्थादिति*। ननु चाधिकारार्थोऽयमिति वक्ष्यति, भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि ताविति, तत्किमित्यत्र यथाविहितविधानार्थत्वं व्याख्यायते? उच्यते—तात्पर्यतोऽपवादविधानायाधिकारस्यानुषङ्गिकेऽणादिविधानार्थत्वे को दोष इति मन्यते, अगतिकगतिर्हि विशेषविवक्षायां सामान्याश्रयः प्रत्ययः। अत एव 'कृतलब्धक्रीतकुशलाः' इत्यादीन्यनपवादान्यर्थादेशनानि भवन्ति। तत्र भवे

न्यासः

वर्गान्ताच्च॥ अशब्दे यत्खावन्यतरस्याम्॥ छे प्राप्त इति। पूर्वसूत्रेण॥

कर्णललाटात् कनलङ्कारे॥ कर्णिकाशब्दश्चाभरणविशेषे रूढः। रूढिशब्देषु च नावश्यमपि कर्णसम्बन्धेन भवितव्यम्॥

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः॥ तस्य व्याख्यानमिति। व्याख्यायतेऽनेनेति व्याख्यानम्, करणे ल्युट्। चकारात् तत्र भवे चेति। ननु च

---

१. 'अर्जुनवर्ग्यः, अर्जुनवर्गीणः, अर्जुनवर्गीयः'— इत्यधिकं क्वचित्।

समीपे चकारः श्रूयमाणः पूर्ववाक्यार्थमेव समुच्चिनोति – 'तत्र भवः' इति। सुपां व्याख्यानः सौपो ग्रन्थः। तैङः। कार्त्तः। सुप्सु भवं सौपम्। तैङम्। कार्त्तम्।

व्याख्यातव्यनाम्न इति किम्? पाटलिपुत्रस्य व्याख्यानी सुको-

पदमञ्जरी

चेति। अयमनुवादः; एतस्मिन्नेव विशेषे 'तत्र भवः' इति विहितत्वात्। ननु च व्याख्यानस्य प्रत्ययार्थस्य समीपे श्रूयमाणश्चशब्दस्तत्समानजातीयस्यैव प्रत्ययार्थस्य समुच्चयं करोति, न समर्थविभक्तेः; यथा 'केदाराद्यञ्च' इति प्रत्ययसमीपवर्त्तिना प्रत्यय एव समुच्चीयते, न प्रकृतिः; 'ठञ्कवचिनश्च' इति प्रकृतिरेव न प्रत्ययः; ततश्चेह तस्येत्युपादानाद्भवार्थेऽपि षष्ठीसमर्थादेव प्रत्ययो युक्तः, तत्राह—*वाक्यार्थसमीपे इति*। इहेतिकरणः क्रियते—प्रकृतं वाक्यार्थं प्रत्यवमर्शामीति। प्रत्यवमर्शस्य च प्रयोजनम्—तत्तुल्यजातीयस्यैव समुच्चयो यथा स्यादित्येतदेवेति भावः। एतमेव च न्यायं निरूपयितुं पूर्वम् 'तत्र भवे च' इत्यनुवादः कृतः।

*व्याख्यातव्यनाम्न इति किमिति*। व्याख्यानशब्दस्य सम्बन्धिशब्दत्वाद्यत्प्रतिव्याख्यानं तदेव तस्येत्यनेन निर्दिष्टमिति गम्यत इति मत्वा प्रश्नः। *पाटलिपुत्रं*

न्यासः

व्याख्यानं प्रत्ययार्थः, तस्य समीपे चकारः श्रूयत इति प्रत्ययार्थमात्रस्यैव समानजातीयस्य तेनानुकर्षणं न्याय्यम्, न तु समर्थविभक्तेरपि; समानजातीयस्य तु चकारः समुच्चयं करोति, यथा—'केदाराद् यञ्च' इति; प्रत्ययसमीपवर्तिना चकारेण प्रत्यय एव समुच्चीयते, यथा—'ठञ् कवचिनश्च' इति प्रातिपदिकसमीपस्थेन चकारेण प्रातिपदिकमेव; तत्र प्रत्ययार्थमात्रस्यैवानुकर्षणे सति समर्थविभक्त्यन्तरोपादानात् पूर्वस्याः समर्थविभक्तेर्निवृत्तौ सत्यां भवार्थेऽपि षष्ठीसमर्थादेव प्रत्ययो युक्तः–तदयुक्तमुक्तम्; तत्र भवे चेति, तस्य भवे चेति वक्तुं युक्तम? इत्यत आह—वाक्यार्थसमीप इत्यादि। इहेतिकरणेन तस्य व्याख्यान इत्येषोऽर्थः प्रत्यवमृश्यते। न तु व्याख्यानप्रत्ययार्थः। तस्मादितिकरणानन्तरमुच्चारितश्चकारस्तत्प्रत्यवमृष्टस्य वाक्यार्थस्यैव समीपे श्रूयमाणस्तुल्यजातीयमेव वाक्यार्थं समुच्चिनोति। तेन भवार्थे सप्तमीसमर्थादेव प्रत्ययो भवति। न ह्यन्यथा पूर्वो व्याख्यार्थ उपपद्यते। इतिकरणश्च वाक्यार्थसमुच्चयो यथा स्यादित्येवमर्थ एव कृतः; अन्यथा हि 'तस्य व्याख्याने च' इत्येवं ब्रूयात्। कः पुनरसौ वाक्यार्थ इत्याह—तत्र भव इति।

शला, पाटलिपुत्रः सुकोशलया व्याख्यायते—एवंसंनिवेशं पाटलिपुत्रमिति, न तु पाटलिपुत्रो व्याख्यातव्यनाम ।

पदमञ्जरी

*सुकोशलया व्याख्यायत इति* । नेयं कर्तरि तृतीया, किं तर्हि ? करणे सुकोशलया करणभूतया पुरुषैर्व्याख्यायत इत्यर्थः । कथमित्याह—*एवंसन्निवेशमिति* । तादृशो हि पाटलिपुत्रे प्राकारादिसन्निवेशो यादृशः सुकोशलायाम्, तेन तया तद्व्याख्यायते । यद्येवम्, तस्य व्याख्यातव्यस्य पाटलिपुत्रशब्दो नामापि भवति, तत्कथं प्रत्युदाहरणम् ? अत आह—*न त्विति* । यदिह व्याख्यातव्यमभिप्रेतम्, न तस्य नाम भवतीत्यर्थः । किं पुनरिहाभिप्रेतम् ? यद्व्याख्यातव्यतया लोके प्रसिद्धं ग्रन्थात्मकम्, एतदर्थमेव हि व्याख्यातव्यनामग्रहणं कृतम्, व्याख्यातव्यमात्रस्य व्याख्यानशब्दस्य सम्बन्धिशब्दत्वेनैवाक्षेपसिद्धेः । ननु च भवार्थमेतत्स्यात्, न हि तत्राक्षेपतो व्याख्यातव्यस्य लाभः ? एवं तर्हि नामग्रहणं प्रसिद्ध्युपसंग्रहार्थं भविष्यति ।

न्यासः

न तु पाटलिपुत्रशब्दो व्याख्यातव्यनामेति । ननु च पाटलिपुत्रः कोशलया व्याख्यायते, नियतं तेन व्याख्यातव्येन भवितव्यम्, अन्यथा तस्य व्याख्यानी सुकोशला न स्यात् । तस्य व्याख्यानस्य पाटलिपुत्रशब्दो व्याख्यातव्यनाम भवतीति तत् कथमुच्यते, न तु पाटलिपुत्रशब्दो व्याख्यातव्यनाम भवतीति ? नैतदस्ति; यदीह व्याख्यातव्यमभिप्रेतम्, न तस्यैतन्नाम भवतीति भावः । किन्त्वेह व्याख्यातव्यमभिप्रेतम् ? यद्व्याख्यातव्यतया लोके प्रसिद्धतरम् । कुत एतत् ? व्याख्यातव्यनामग्रहणात् । इह हि व्याख्यातव्यनामग्रहणं व्याख्यातव्यार्थं तु न कर्तव्यमेव; विनापि हि तेन व्याख्यातव्यनाम्न एव प्रत्ययसिद्धेः । तथा हि 'तस्य' इति तस्य प्रतियोगि व्याख्यानमुपात्तम्, तच्च व्याख्यातव्यस्यैव सम्भवति, नान्यस्य । तस्माद् यत् तस्य व्याख्यातव्यं सामर्थ्यात् तदेव तस्येत्यनेन षष्ठ्यन्तेनोपादीयत इति विज्ञायते । ततश्चान्तरेणापि व्याख्यातव्यनामग्रहणं व्याख्यातव्यनामाभिधायिन एव प्रत्ययो भविष्यतीति किं व्याख्यातव्यनामग्रहणेन ? तत् क्रियते व्याख्यातव्यतया लोके यः प्रसिद्धस्तदभिधायिन एव प्रत्ययो यथा स्यादित्येवमर्थम् । व्याकरणादयो ग्रन्थविशेषा लोके प्रसिद्धाः, न ते पाटलिपुत्रादयः । एवमपि नामग्रहणं न कर्तव्यम्, व्याख्यातव्यग्रहणसामर्थ्यादेव हि व्याख्यातव्यतया प्रसिद्धतरेभ्यः प्रत्ययो लभ्यत एव ? नैतदस्ति; व्याख्याने हि प्रत्ययार्थे व्याख्यानादेव व्याख्यातव्यवाचिनः प्रत्यये सिद्धे पुनर्व्याख्यातव्यग्रहणसामर्थ्याद् व्याख्यातव्यतया ये प्रसिद्धास्तेभ्यः प्रत्ययो लभ्यते, न तु तत्र भवे; तत्र सामर्थ्याभावात् । भवेऽपि चार्थे तत्र व्याख्यातव्यतया प्रसिद्ध-

यागेभ्योऽपि यथा स्यात् — पाक्त्रौदनिकः । दाशौदनिकः । बहुवचनं स्वरूपविधिनिरासार्थम् ॥

अध्यायेष्वेवर्षेः ॥ ६९ ॥

ऋषिशब्दाः प्रवरनामधेयानि, तेभ्य ऋषिशब्देभ्यो भवव्याख्यानयोरर्थयोष्ठञ् प्रत्ययो भवति । अणोऽपवादः । अध्यायेष्वेव प्रत्ययार्थविशेषणेषु । 'व्याख्यातव्यनाम्नः' इत्यनुवर्तते, तत्साहचर्यादृषिशब्दैर्ग्रन्थ उच्यते । वसिष्ठस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः । वैश्वामित्रिकः ।

अध्यायेष्विति किम् ? वासिष्ठी ऋक् ॥

पदमञ्जरी

पर्यायः पाकशब्दः, पाकश्चासौ यज्ञश्च पाकयज्ञः, समासस्वरेणान्तोदात्तः । सत्यन्यार्थ एतस्यारम्भे, अन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव ठञ्प्रत्ययो युक्त इत्यन्तोदात्तानामुपन्यासः ।

*क्रतुभ्य इत्येव सिद्ध इति* । क्रतुयज्ञयोः पर्यायत्वादिति भावः । *असोमयागेभ्योऽपीति* । अन्यथा क्रतुशब्दस्य सोमयागे रूढत्वादन्यत्र न स्यात्, यज्ञग्रहणात्तु तेभ्योऽपि भवति । एवं केवलयज्ञग्रहणेऽपि स एव दोषो यः केवलक्रतुग्रहणे, तस्माद् गौणमुख्यपरिग्रहार्थमुभयोरुपादानम् ॥

*अध्यायेष्वेवर्षेः* ॥ *ऋषिशब्दाः प्रवरनामधेयानीति* । होत्राध्वर्युणा च प्रव्रियन्त इति प्रवराः = भृग्वादयः, तद्यथा भार्गवच्यावनाप्नवानौर्वजामदग्नेति होता, जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । एतेन यद्यपि मन्त्रदर्शिष्वृषिशब्दः प्रसिद्धः, तथापि प्रवराध्यायपठितानामेव ग्रहणमिति दर्शयति । *वसिष्ठस्य व्याख्यान इति* । वसिष्ठेन दृष्टो मन्त्र उपचाराद् वसिष्ठ इत्युक्तः ।

*वासिष्ठी ऋगिति* भवार्थेऽण्, एवकारः सर्ववाक्यानां सावधारणत्वज्ञापनार्थः ॥

न्यासः

वाजपेयिकमित्येतदेवोदाहरणद्वयं युक्तम्, राजसूय-वाजपेयशब्दयोः कृदन्तोत्तरपदयोः प्रकृतिस्वरेण मध्योदात्तत्वादुत्तरपदं चाद्युदात्तमत्र, एकं क्यबन्तत्वात् कृत्स्वरेण, अपरम् 'यतो नावः' इति समासे च कृते 'गतिकारकोपपदात् कृत्' इति प्रकृतिभावेनाद्युदात्तमेवावतिष्ठते; आग्निष्टोमिकं नावयज्ञिकमिति एतद्दुदाहरणद्वयमयुक्तम्, अग्निष्टोम-नवयज्ञशब्दाभ्यां प्रत्ययस्वरेणान्तोदात्ताभ्यामनेनाप्राप्तेः ? न हि पूर्वेणानेन वा ठञि विशेषः । क्रतुसाहचर्यादत्रोदाहृतम् । शब्दः साहचर्याद् वर्तत इति विज्ञायते ॥

## पौरोडाशपुरोडाशात् ष्ठन् ॥ ७० ॥

पौरोडाशशब्दात्, पुरोडाशशब्दाच्च भवव्याख्यानयोरर्थयोः ष्ठन् प्रत्ययो भवति । पुरोडाशाः=पिष्टपिण्डाः; तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पौरोडाशिकः । पौरोडाशिकी । पुरोडाशसहचरितो ग्रन्थः पुरोडाशस्तस्य व्याख्यानस्तत्र भवो वा पुरोडाशिकः । पुरोडाशिकी । षकारो ङीषर्थः ॥

## छन्दसो यदणौ ॥ ७१ ॥

छन्दःशब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ प्रत्ययौ भवतः । 'द्व्यचः' इति ठकि प्राप्ते वचनम् । छन्दस्यः । छान्दसः ॥

पदमञ्जरी

*पौरोडाशपुरोडाशात्ष्ठन्* ॥ पुरोडाशाः *पिष्टपिण्डा इति* । 'दाशृ दाने' कर्मणि घञ्, पुरो दाश्यन्ते दीयन्त इति पुरोडाशाः, पृषोदरादित्वात्समासः, दकारस्य च डकारः, एतेनैतदाह—आकृतिवचनः पुरोडाशशब्दः, न यूपाहवनीयादिवददृष्टनिमित्त इति । *तेषां संस्कारको मन्त्र इति* । 'मखस्य शिरोऽसि' इत्येवमादिः । *पुरोडाशसहचरितो मन्त्रः पुरोडाश इति* । मन्त्र एव हि व्याख्यातव्यो न पुरोडाशः ॥

*छन्दसो यदणौ* ॥ अत्र भवव्याख्यानौ द्वावर्थौ, यदणौ प्रत्ययावपि द्वावेव, तथापि यथासंख्यं न भवति; 'तस्य व्याख्याने' इति यदणौ भवतः, 'तत्र भवः' इति चेत्येवं समुच्चयात् । *द्व्यच इति ठकि प्राप्त इति* । उत्तरसूत्रे द्व्यज्ग्रहणेन ठकि प्राप्त इत्यर्थः ॥

न्यासः

अध्यायेष्वेवर्षेः ॥ पौरोडाशपुरोडाशात् ष्ठन् ॥ पुरोडाशस्येदमित्यन्तोदात्तः । तस्माद् बह्वचोऽन्तोदात्ताट् ठञि प्राप्ते । पुरोडाशस्तु 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तः । अस्मादणि प्राप्ते ष्ठन् विधीयते । षकारो ङीषर्थः, नकार आद्युदात्तार्थः । तेषां संस्कारो मन्त्रः पौरोडाश इति । पुरोडाशसहचरित इति । तादर्थ्यात् साहचर्याद्वा पुरोडाशा येन मन्त्रेण संस्क्रियन्ते तत्र पुरोडाशशब्दो वर्तते, न पुरोडाशेषु । कुत एतत् ? व्याख्यातव्यनामग्रहणानुवृत्तेः । न हि पुरोडाशा व्याख्यातव्यतया प्रसिद्धतराः ॥

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ॥ ७२ ॥

द्व्यजादिभ्यः प्रातिपदिकेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोष्ठक् प्रत्ययो भवति । अणादेरपवादः । द्व्यचस्तावत् – ऐष्टिकः । पाशुकः । ऋकारान्तात् – चातुर्होतृकः । पाञ्चहोतृकः । ब्राह्मण – ब्राह्मणिकः । ऋक् – आर्चिकः । प्रथम – प्राथमिकः । अध्वर – आध्वरिकः । पुरश्चरण – पौरश्चरणिकः ।

नामाख्यातग्रहणं सङ्घातविगृहीतार्थम् । नामिकः । आख्यातिकः । नामाख्यातिकः ॥

## अणृगयनादिभ्यः ॥ ७३ ॥

पदमञ्जरी

*द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्* ॥ *अणादेरपवाद इति* । आदिशब्देन ठञः । तत्र ऋक्छन्दे द्व्यक्षु चाणोऽपवादः, पुरश्चरणशब्दोऽपि ल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । असिप्रत्ययो हि सप्तम्यन्तादुत्पद्यत इति पुरःशब्दः कारकम्, 'पुरोऽव्ययम्' इति वा गतिः । तेन तस्मादप्यण एवापवादः । ब्राह्मणादिष्वन्तोदात्तेषु ठञोऽपवादः, ऋकारान्तेष्वप्यणोऽपवादः । ये तु तत्र बह्वचोऽन्तोदात्तास्तेषु परत्वादयं ठञं बाधते । *नामाख्यातग्रहणं सङ्घातविगृहीतार्थमिति* । आख्यातार्थं विगृहीतग्रहणम्, नामशब्दात्तु द्व्यच्त्वादेव सिद्धम् ॥

न्यासः

छन्दसो यदणौ ॥ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुनश्चरणनामाख्याताट्ठक् । अणादेरपवाद इति । आदिशब्देन ठञः । तत्र य ऋकारान्ता उदगातृप्रभृतयो बह्वचोऽन्तोदात्तास्तेभ्यष्ठञोऽपवादः । ब्राह्मणप्रथमाध्वरेभ्योऽपि ठञ एव । तेऽपि बह्वचः प्रातिपदिकस्वरेणान्तोदात्ताः । नामाख्यातशब्दादपि समस्तात् तस्यैव । सोऽपि बह्वच्, समासस्वरेणान्तोदात्तश्च । परिशिष्टेभ्योऽणः । पांशुकम्, पाञ्चहोतृकमिति । 'इसुसुक्तान्तात् कः' पञ्चहोतृ-चतुहोतृशब्दाविगन्ते द्विगाविति पूर्वपदप्रकृतिस्वरेणाद्युदात्तौ । पूर्वपदं हि 'त्रः संख्यायाः' इत्युदात्तम् । पुरश्चरणशब्दो ल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । आख्यातशब्दः 'गतिरनन्तरः' इत्याद्युदात्तः ।

सङ्घातविगृहीतार्थमिति । तच्चैकशेषसमाश्रयणाल्लभ्यत इति वेदितव्यम् ॥

ऋगयनादिभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोरण् प्रत्ययो भवति। ठञादेरपवादः। आर्गयनः। पादव्याख्यानः। अण्ग्रहणं बाधकबाधनार्थम्। वास्तुविद्यः।

ऋगयन। पदव्याख्यान। छन्दोनाम। छन्दोभाषा। छन्दोवि-

पदमञ्जरी

*अणृगयनादिभ्यः* ॥ *ठञादेरिति*। आदिशब्देन ठकः छस्य च ग्रहणम्। तत्र विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकोऽपवादः, व्याकरणशब्दाद् वृद्धाच्छस्य, शेषा बह्वचोऽन्तोदात्ताः, तेष्वञः। अथाण्ग्रहणं किमर्थम्, न ऋगयनादिभ्यो यथाविहितमेवोच्येत, वचनप्रामाण्याद्यो विहितो न च प्राप्नोति अन्येन बाधितत्वात्, स एवाण् भविष्यति? अत आह–*अण्ग्रहणमिति*। असत्यण्ग्रहणे यद् वृद्धमन्तोदात्तं बह्वच्, यथा—वास्तुविद्येति, तस्माद् वृद्धाच्छे ठञा बाधिते पुनर्वचनाच्छ एव स्याद्, अण्ग्रहणात्त्वणेव भवति।

*ऋगयनमिति*। 'पूर्वपदात्संज्ञायामगः' इति णत्वं न भवति, 'अगः' इति प्रतिषेधात्। अयनशब्दश्च भावसाधनोऽभेदोपचाराद् ग्रन्थे वर्तते, 'अनो भाव-

न्यासः

अणृगयनादिभ्यः ॥ ठञादेरपवाद इति। आदिशब्देन ठकश्छस्य च। तत्र ये बह्वचोऽन्तोदात्तास्तेभ्यष्ठञः। विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकः। व्याकरणशब्दाद् वृद्धाच्छस्य। अण्ग्रहणं किमर्थम्? न ऋगयनादिभ्यो यथाविहितमेवोच्येत, न चैवं सत्यपवादाष्ठञादयः स्युरिति संभाव्यते; अपवादविधानस्य हि वैयर्थ्यं स्यात्। तस्माद् वचनप्रमाण्याद् यो विहितो न च प्राप्नोत्यन्येन बाधितत्वात् स एव भविष्यति, स चाणेव? इत्यत आह–अण्ग्रहणमित्यादि। तत्र यद्यण्ग्रहणं न क्रियेत, तदा यदत्र वृद्धमन्तोदात्तं तस्माच्छे ठञा बाधिते पुनर्वचनाच्छ एव भविष्यति। तस्माच्छस्य बाधकस्य बाधनार्थमण्ग्रहणम्, तेन वास्तुविद्य इति सिद्धं भवति। वास्तुविद्याशब्दो वृद्धः, समासस्वरेणान्तोदात्तश्च।

ऋगयनेत्यादि। ऋगयनमिति। ऋगयनशब्दो भावसाधन ऋचामयनम्, यद्यपि भावे ल्युट्, तथाप्यभेदोपचारात् तद्वति ग्रन्थे व्याख्यातव्ये वर्तते, स च 'अनो भावकर्मवचने' इत्यन्तोदात्तः। यैस्तु करणे ल्युटं कृत्वा ऋगयनशब्दो व्युत्पाद्यते, तेषां स कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तो न गणे पाठं प्रयोजयति। ततः 'प्राग्दीव्यतोऽण्' इत्येव सिद्धः। पदव्याख्यानशब्दः 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' इत्यन्तोदात्तः। मानेति। मनेर्धातोर्यदा घञ् तदा 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तः। अथ मिनातेर्ल्युट्, तदा 'अनो भावकर्मवचने' इत्यन्तोदात्तः। छन्दोभाषेति।

चिति । न्याय । पुनरुक्त । व्याकरण । निगम । वास्तुविद्या । अङ्ग-विद्या । क्षत्त्रविद्या । उत्पात । उत्पाद । संवत्सर । मुहूर्त्त । निमित्त । उपनिषत् । शिक्षा[1] । ऋगयनादिः ॥

## तत आगतः ॥ ७४ ॥

तत इति पञ्चमीसमर्थात् 'आगतः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । स्रुघ्नादागतः स्रौघ्नः । माथुरः । राष्ट्रियः ।

तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यते, न नान्तरीयकम् । स्रुघ्नादागच्छन्वृक्षमूलादागत इति ॥

### पदमञ्जरी

कर्मवचने' इत्यन्तोदात्तः । पदव्याख्यानशब्दः 'मन्क्तिन्व्याख्यान' इत्यन्तोदात्तः । छन्दोमानशब्द ऋगयनशब्देन व्याख्यातः । छन्दो भावेति कृत्स्वरेणान्तोदात्तः । छन्दोविचितिशब्दो मन्क्तिन्नित्यन्तोदात्तः । पुनरुक्तशब्दस्थाथादिस्वरेण । निरुक्तशब्दः 'संज्ञायामनाचितादीनाम्' इति । निगमशब्दो गोचरादिसूत्रे घान्तो निपातितोऽन्तोदात्तः । वास्तुविद्या, क्षत्त्रविद्या, अङ्गविद्येति समासस्वरेण । उत्पातोत्पादशब्दौ थाथादिस्वरेण । अशेः सरन्, वसेः सम्पूर्वाच्चिदिति संवत्सरशब्दोऽन्तोदात्तः । मुहूर्त्तनिमित्तशब्दौ प्रातिपदिकस्वरेण । उपनिपूर्वात्सदेः क्विप्, उपनिषच्छब्दः कृत्स्वरेणान्तोदात्तः ॥

*तत आगतः ॥ तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यत इति ।*

### न्यासः

'गतिकारकोपपदात् कृत्' इति कृत्स्वरेणान्तोदात्तः । भाषाशब्दः 'गुरोश्च हलः' इत्यकारप्रत्ययान्तो व्युत्पादितः । छन्दोविचितीति । 'मन्क्तिन्' इत्यादिनान्तोदात्तः । पुनरुक्तशब्दाः 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तः । निरुक्तः 'संज्ञायामनाचितादीनाम्' इत्यन्तोदात्तः । व्याकरणशब्दो ल्युडन्तो मध्योदात्तः । निगमशब्दः 'गोचरसञ्चर' इत्यादिसूत्रे घप्रत्ययान्तो निपातितः प्रत्ययस्वरेणान्तोदात्तः । वास्तुविद्याशब्दोऽङ्गविद्याक्षत्त्रियविद्येत्येती च समासस्वरेणान्तोदात्ताः । उत्पात, उद्पाद—इत्येतौ थाथादिसूत्रेणान्तोदात्तौ । संवत्सर इति । 'अशेः सर' इत्यनुवृत्तौ वसेः संपूर्वाच्चिदित्येवं व्युत्पादितत्वात् संवत्सरशब्दोऽन्तोदात्तः । हुर्छतेर्धातोः क्तः, क्ते ऊरागमः, तेन मुहूर्त इत्यन्तोदात्तः ।

---

१. अत्र–'छन्दोविजिनी, व्याय, निरुक्त, विद्या, उद्याव, भिक्षा'—एते शब्दा अधिका पुस्तकान्तरे ।

## ठगायस्थानेभ्यः ॥ ७५ ॥

'आय' इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम्। आयस्थानवाचिभ्यः प्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये, अणोऽपवादः। छं तु परत्वाद्बाधते। शुल्कशालाया आगतः, शौल्कशालिकः। आकरिकम्[1]। बहुवचनं स्वरूपविधिनिरासार्थम्॥

## शुण्डिकादिभ्योऽण् ॥ ७६ ॥

'शुण्डिक' – इत्येवमादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये। आयस्थानठकोऽपवादः। शुण्डिकादागतः शौण्डिकः। कार्कणः।

### पदमञ्जरी

मुख्यत्वादेव। अपादानसंज्ञा तु नान्तरीयकस्यापि भवति, कारकप्रकरणे हि गौणमुख्यविभागो नाश्रीयते॥

ठगायस्थानेभ्यः॥ *आय इति स्वामिग्राह्यो भाग इति*। एत्येनं स्वामी, स्वामिनं वाऽयमेतीति कृत्वा॥

*शुण्डिकादिभ्योऽण्*॥ *आयस्थानठकोऽपवाद इति*। उपलक्षणमेतत्। कृकणशब्दात् 'कृकणपर्णाद्भारद्वाजे' इति छस्याप्यपवादः।तीर्थशब्दाद् धूमादिलक्षणस्य वुञोऽप्यपवादः। उदपानशब्दादुत्साद्यञोऽप्यपवादः।

### न्यासः

निमित्तशब्दोऽपि प्रातिपदिकस्वरेण। उपनिषदिति। उपनिपूर्वात् सदेः क्विप्। कृत्स्वरेणान्तोदात्तः॥

तत आगतः॥ अथ स्रुघ्नादागच्छन् वृक्षमूलागत इति। अत्र वृक्षमूलशब्दात् प्रत्ययः कस्मान्न भवति? इत्याह– मुख्यमित्यादि। मुख्यं प्रधानं विवक्षितम्, तदिह परिगृह्यते; न तु नान्तरीयकमप्रधानम्। न हि मुख्ये सतीतरस्याप्रधानस्य ग्रहणं युक्तम्; मुख्ये कार्यसम्प्रत्ययात्।

ठगायस्थानेभ्यः॥ शुण्डिकादिभ्योऽण्॥ आयस्थानठकोऽपवाद इति। बाहुल्यादेवमुक्तम्; यस्मात् कृकणशब्दोऽत्र पठ्यते। तत्र हि 'कृकणपर्णाद् भारद्वाजे' इति

---

१. 'नागरिकम्, आपणिकम्'–इत्यपि कुत्रचित्पुस्तके।

चिति । न्याय । पुनरुक्त । व्याकरण । निगम । वास्तुविद्या । अङ्गविद्या । क्षत्त्रविद्या । उत्पात । उत्पाद । संवत्सर । मुहूर्त्त । निमित्त । उपनिषत् । शिक्षा[1] । ऋगयनादिः ॥

## तत आगतः ॥ ७४ ॥

तत इति पञ्चमीसमर्थात् 'आगतः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । स्रुघ्नादागतः स्रौघ्नः । माथुरः । राष्ट्रियः ।

तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यते, न नान्तरीयकम् । स्रुघ्नादागच्छन्वृक्षमूलादागत इति ॥

पदमञ्जरी

कर्मवचने' इत्यन्तोदात्तः । पदव्याख्यानशब्दः 'मन्क्तिन्व्याख्यान' इत्यन्तोदात्तः । छन्दोमानशब्द ऋगयनशब्देन व्याख्यातः । छन्दो भावेति कृत्स्वरेणान्तोदातः । छन्दोविचितिशब्दो मन्क्तिन्नित्यन्तोदात्तः । पुनरुक्तशब्दस्थाथादिस्वरेण । निरुक्तशब्दः 'संज्ञायामनाचितादीनाम्' इति । निगमशब्दो गोचरादिसूत्रे घान्तो निपातितोऽन्तोदात्तः । वास्तुविद्या, क्षत्त्रविद्या, अङ्गविद्येति समासस्वरेण । उत्पातोत्पादशब्दौ थाथादिस्वरेण । अशेः सरन्, वसेः सम्पूर्वाच्चिदिति संवत्सरशब्दोऽन्तोदात्तः । मुहूर्त्तनिमित्तशब्दौ प्रातिपदिकस्वरेण । उपनिपूर्वात्सदेः क्विप्, उपनिषच्छब्दः कृत्स्वरेणान्तोदात्तः ॥

*तत आगतः ॥ तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यत इति ।*

न्यासः

'गतिकारकोपपदात् कृत्' इति कृत्स्वरेणान्तोदात्तः । भाषाशब्दः 'गुरोश्च हलः' इत्यकारप्रत्ययान्तो व्युत्पादितः । छन्दोविचितीति । 'मन्क्तिन्' इत्यादिनान्तोदात्तः । पुनरुक्तशब्दाः 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तः । निरुक्तः 'संज्ञायामनाचितादीनाम्' इत्यन्तोदात्तः । व्याकरणशब्दो ल्युडन्तो मध्योदात्तः । निगमशब्दः 'गोचरसञ्चर' इत्यादिसूत्रे घप्रत्ययान्तो निपातितः प्रत्ययस्वरेणान्तोदात्तः । वास्तुविद्याशब्दोऽङ्गविद्याक्षत्त्रियविद्येत्येतौ च समासस्वरेणान्तोदात्ताः । उत्पात, उद्पाद—इत्येतौ थाथादिसूत्रेणान्तोदात्तौ । संवत्सर इति । 'अशेः सर' इत्यनुवृत्तौ वसेः संपूर्वाच्चिदित्येवं व्युत्पादितत्वात् संवत्सरशब्दोऽन्तोदात्तः । मुह्यतेर्धातोः क्तः, क्ते ऊरागमः, तेन मुहूर्त इत्यन्तोदात्तः ।

---

1. अत्र–'छन्दोविजिनी, न्याय, निरुक्त, विद्या, उद्याव, भिक्षा'—एते शब्दा अधिका पुस्तकान्तरे ।

## ठगायस्थानेभ्यः ॥ ७५ ॥

'आय' इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम् । आयस्थानवाचिभ्यः प्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये, अणोऽपवादः । छं तु परत्वाद्बाधते । शुल्कशालाया आगतः, शौल्कशालिकः । आकरिकम्[1] । बहुवचनं स्वरूपविधिनिरासार्थम् ॥

## शुण्डिकादिभ्योऽण् ॥ ७६ ॥

'शुण्डिक' – इत्येवमादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये । आयस्थानठकोऽपवादः । शुण्डिकादागतः शौण्डिकः । कार्कणः ।

### पदमञ्जरी

मुख्यत्वादेव । अपादानसंज्ञा तु नान्तरीयकस्यापि भवति, कारकप्रकरणे हि गौणमुख्यविभागो नाश्रीयते ॥

*ठगायस्थानेभ्यः* ॥ *आय इति स्वामिग्राह्यो भाग इति* । एत्येनं स्वामी, स्वामिनं वाऽयमेतीति कृत्वा ॥

*शुण्डिकादिभ्योऽण्* ॥ *आयस्थानठकोऽपवाद इति* । उपलक्षणमेतत् । कृकणशब्दात् 'कृकणपर्णाद्भारद्वाजे' इति छस्याप्यपवादः । तीर्थशब्दाद् धूमादिलक्षणस्य वुञोऽप्यपवादः । उदपानशब्दादुत्सादयञोऽप्यपवादः ।

### न्यासः

निमित्तशब्दोऽपि प्रातिपदिकस्वरेण । उपनिषदिति । उपनिपूर्वात् सदेः क्विप् । कृत्स्वरेणान्तोदात्तः ॥

तत आगतः ॥ अथ स्रुघ्नादागच्छन् वृक्षमूलागत इति । अत्र वृक्षमूलशब्दात् प्रत्ययः कस्मान्न भवति ? इत्याह– मुख्यमित्यादि । मुख्यं प्रधानं विवक्षितम्, तदिह परिगृह्यते; न तु नान्तरीयकमप्रधानम् । न हि मुख्ये सतीतरस्याप्रधानस्य ग्रहणं युक्तम्; मुख्ये कार्यसम्प्रत्ययात् ।

ठगायस्थानेभ्यः ॥ शुण्डिकादिभ्योऽण् ॥ आयस्थानठकोऽपवाद इति । बाहुल्यादेवमुक्तम्; यस्मात् कृकणशब्दोऽत्र पठ्यते । तत्र हि 'कृकणपर्णाद् भारद्वाजे' इति

---

१. 'नागरिकम्, आपणिकम्'–इत्यपि कुत्रचित्पुस्तके ।

अण्ग्रहणं बाधकबाधनार्थम् । औदपानः ।

शुण्डिक । कृकण । स्थण्डिल । उदपान । उपल । तीर्थ । भूमि । तृण । पर्ण । शुण्डिकादिः ॥

विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ ७७ ॥

विद्यायोनिकृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः, तद्वाचिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये । अणोऽपवादः । छं तु परत्वाद्बाधते । विद्यासम्बन्धेभ्यस्तावत् – उपाध्यायादागतम् औपाध्यायकम् । शैष्यकम् । आचार्यकम् । योनिसम्बन्धेभ्यः – मातामहकः । पैतामहकः[1] ॥

ऋतष्ठञ् ॥ ७८ ॥

पदमञ्जरी

अथाण्ग्रहणं किमर्थं न शुण्डिकादिभ्यो यथाविहितमेवोच्येत, वचनसामर्थ्याद्धि, यो विहितो न च प्राप्नोति अन्येन बाधितत्वात्, स एवाण् भविष्यति ? अत आह—*अण्ग्रहणमिति* । उदपानशब्द इह पठ्यते, स चोत्सादिः, तत्रासत्यण्ग्रहणे आयस्थानठकं बाधित्वा 'उत्सादिभ्योऽञ्' इत्यञेव स्यात् । अण्ग्रहणात्त्वणेव भवति ॥

*विद्यायोनिसम्बन्धेभ्यो वुञ्* ॥ *विद्यायोनिकृत इति* । बहुव्रीहौ गतार्थत्वात्कृतशब्दस्याप्रयोगः ॥

*ऋतष्ठञ्* ॥ एषूदाहरणेषु 'इसुसुक्तान्तात्कः' । एवं च प्रक्रियालाघवाय कन्नेवायं विधेयः, तथा तु न कृतमित्येव ॥

न्यासः

प्राप्तस्य च्छस्यापवादः । तीर्थशब्दश्चेह धूमादिषु पठ्यते, ततः 'धूमादिभ्यश्च' इति प्राप्तस्य वुञोऽपवादः । अथाण्ग्रहणं किमर्थम्, न शुण्डिकादिभ्यो यथाविहितमेवोच्येत, न चैवं पठ्यमानेऽपवाद एव स्यादित्याशङ्कनीयम्; अपवादविधाने हि वचनवैयर्थ्यं स्यात्, तस्मादन्तरेणाप्यण्ग्रहणमणेव भविष्यति ? इत्यत आह—अण्ग्रहणमित्यादि । उदपानशब्दोऽत्र पठ्यत आयस्थानवचनम्, उत्सादिष्वसौ पठ्यते; तत्रासत्यण्ग्रहण आयस्थानठकं बाधित्वा 'उत्सादिभ्योऽञ्' इत्यञेव स्यात् । तस्मात् तस्य बाधकस्य बाधनार्थमण्ग्रहणम् । तेनोदपान इत्यत्राणिसद्धो भवति ॥

---

१. अत्र 'मातुलकः' इत्युदाहरणमपि बहुषु पुस्तकेषु विद्यते ।

'विद्यायोनिसंबन्धेभ्यः' इत्येव । ऋकारान्तेभ्यः प्रातिपदिकेभ्यो विद्यायोनिसम्बन्धवाचिभ्यष्ठञ् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये । वुञोऽपवादः । विद्यासम्बन्धवाचिभ्यस्तावत्–होतुरागतं हौतृकम् । पौतृकम् । योनिसम्बन्धवाचिभ्यः – भ्रातृकम् । स्वासृकम् । मातृकम् । तपरकरणं मुखसुखार्थम् । विद्यायोनिभ्यामन्यत्र – सावित्रम् ॥

**पितुर्यच्च ॥ ७९ ॥**

पितृशब्दाद् यत् प्रत्ययो भवति चकाराट्ठञ्च 'तत आगतः' इत्येतस्मिन्विषये । पितुरागतं पित्र्यम् । पैतृकम् ॥

**गोत्रादङ्कवत् ॥ ८० ॥**

अपत्याधिकारादन्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते । गोत्रप्रत्ययान्तात्प्रातिपदिकादङ्कवत् प्रत्ययविधिर्भवति 'तत आगतः' इत्येतस्मिन्विषये । अङ्कग्रहणेन तस्येदमर्थसामान्यं लक्ष्यते । तस्माद् वुञति-

पदमञ्जरी

*पितुर्यच्च ॥ पित्र्यमिति* । 'रीङृतः', 'यस्येति च' ।

*गोत्रादङ्कवत् ॥ अङ्कग्रहणेन तस्येदमित्यर्थसामान्यं लक्ष्यत इति* । कथं मुख्ये सम्भवति लक्षणाश्रीयते ? व्याख्यानमत्र शरणम् । अपर आह—अङ्के यद् दृष्टं तदतिदिश्यते, न त्वङ्क आहत्य विहितम् । 'गोत्रचरणाद् वुञ्' इत्ययमपि वुञ् तस्येदमिति सामान्ये विहितोऽप्यञादिव्यतिरिक्ते विषयेऽङ्केऽपि दृष्ट इति तस्या-

न्यासः

विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ ऋतष्ठञ् ॥ तपकरणं मुखसुखार्थमिति । अथ दीर्घनिवृत्त्यर्थं कस्मान्न भवति ? असम्भवात् । न हि विद्यायोनिसम्बन्धिषु किञ्चिदृकारान्तं प्रातिपदिकमस्ति यन्निवृत्त्यर्थस्तकारः स्यात् ॥

पितुर्यच्च ॥ पित्र्यमिति । 'रीङ् ऋतः' इति रीङ्, यस्येति लोपः ॥

गोत्रादङ्कवत् ॥ यदि गोत्रादङ्कवत्प्रत्ययविधिर्भवतीत्युच्यतेऽण एवातिदेशः प्राप्नोति, न वुञः । यस्मादण्विधावेवाङ्कग्रहणमस्ति । 'सङ्घाङ्कलक्षण' इत्यादौ सूत्रेण वुञ्विधौ 'गोत्रचरणाद् वुञ्' इत्यत्र ? इत्याह—अङ्कग्रहणेनेत्यादि । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकग्रहणमुपघातसामान्यस्योपलक्षणम्, एवमिहाप्यङ्कग्रहणं 'तस्येदम्' इत्यस्य । तेनायं सूत्रार्थो भवति—यथा 'तस्येदम्' इत्यत्र गोत्रात् प्रत्ययो भवति, तथा 'तत आगतः' इत्यत्रापि । तेन वुञोऽप्यतिदेश उपपद्यते । नन्वेवमप्यणोऽतिदेशो न

दिश्यते', नाणेव – 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' इति । औपगवानामङ्कः औपगवकः । कापटवकः । नाडायनकः । चारायणकः । एवम् – औपगवेभ्य आगतमौपगवकम् । कापटवकम् । नाडायनकम् । चारायणकम् ॥

### हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ ८१ ॥

हेतुभ्यो मनुष्येभ्यश्चान्यतरस्यां रूप्यः प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये । मनुष्यग्रहणमहेत्वर्थम् । हेतुः = कारणम् । हेतुभ्यस्तावत् – समादागतं समरूप्यम् । समीयम् । विषमरूप्यम् । विषमीयम् । गहादित्वाच्छः । मनुष्येभ्यः – देवदत्तरूप्यम् । यज्ञदत्तरूप्यम् । दैवदत्तम् । याज्ञदत्तम् ।

बहुवचनं स्वरूपविधिनिरासार्थम् ॥

### मयट् च ॥ ८२ ॥

पदमञ्जरी

प्यतिदेश इति । *औपगवकमिति* । वुञ उदाहरणम् । अणस्तु—वैदम् , गार्ग्यम् , दाक्षमिति । वतिः सर्वसादृश्यार्थः, 'कालेभ्यो भववत्', 'चरणेभ्यो धर्मवत्' इति यथा ॥

*हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः* ॥ *समादागतमिति* । समाद्धेतोरागतमित्यर्थः । तत्र 'हेतौ' इति तृतीया प्राप्नोति, ज्ञापकात्सिद्धम् , यदयं पञ्चम्यन्ताद्धेतोः प्रत्ययमाह तज्ज्ञापयति—भवति हेतौ पञ्चमीति । नैतदस्ति ज्ञापकम् , यत्र 'विभाषा गुणे' इति पञ्चमी, तदर्थमेतत्स्यात्—जाड्यादागत इति ? तस्मात् 'विभाषा गुणे' इत्यत्र विभाषेति योगविभागादगुणवचनादपि पञ्चमी भवति ॥

न्यासः

प्राप्नोति, न हि तद्विधौ गोत्रग्रहणमस्ति ? पूर्वसूत्राद् गोत्रग्रहणमनुवर्तत इत्यदोषः । 'सङ्घाङ्कलक्षण' इत्यादिना येन सूत्रेणाण् विहितस्तद् दर्शयति ।

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ समादागतमिति । समाद्धेतोरागतमस्यार्थः । केन पुनरिह पञ्चमी ? अस्मादेव ज्ञापकात् । यदयं पञ्चम्यन्तात् प्रत्ययमाह ततो ज्ञायते—हेतौ पञ्चमी भवति ॥

---

१. 'गोत्रचरणाद्वुञिति'—इत्यधिकं पुस्तकान्तरे ।

हेतुभ्यो मनुष्येभ्यश्च मयट् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये। सममयम्। विषममयम् – मनुष्येभ्यः। देवदत्तमयम्। यज्ञदत्तमयम्। टकारो ङीबर्थः – सममयी।

योगविभागो यथासंख्यनिरासार्थः ॥

### प्रभवति ॥ ८३ ॥

'ततः' इत्येव। पञ्चमीसमर्थाद् ङ्याप्प्रातिपदिकात् 'प्रभवति' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। प्रभवति = प्रकाशते, प्रथमत उपलभ्यते इत्यर्थः। हिमवतः प्रभवति हैमवती गङ्गा। दारदी सिन्धुः ॥

### विदूराञ्ञ्यः ॥ ८४ ॥

विदूरशब्दात्ञ् ञ्यः प्रत्ययो भवति 'ततः प्रभवति' इत्येतस्मिन् विषये। अणोऽपवादः। विदूरात्प्रभवति वैदूर्यो मणिः।

ननु च वालवायादसौ प्रभवति, न विदूरात्, तत्र तु संस्क्रियते ? एवं तर्हि –

पदमञ्जरी

*मयट् च* ॥ *योगविभागो यथासंख्यनिरासार्थ इति*। विकल्पार्थेनान्यतरस्यांग्रहणेन रूप्यमयटोः पक्षेऽभावः प्रतिपाद्यते, तदभावे स्वशास्त्रेणैव प्राप्तः प्रत्ययो भवति। तेन रूप्यमयटोरेवानेन विधानादसति योगविभागे स्यादेव यथासङ्ख्यमिति भावः ॥

*प्रभवति* ॥ *प्रकाशते इति*। उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते; 'तत्र जातः' इत्यनेन गतत्वात् ॥

*विदूराञ्ञ्यः* ॥ अयुक्तोऽयं निर्देश इत्याह—*ननु चेति*।

न्यासः

मयट् च ॥ योगविभागो यथासंख्यनिरासार्थ इति। ननु चान्यतरस्यांग्रहणेनौत्सर्गिकेऽभ्यनुज्ञायमाने वैषम्याद् यथासंख्यस्य प्राप्तिरेव नास्ति ? सत्यमेतत्; यस्तु रूप्यमयटोरपूर्वत्वाद् विधीयमानापेक्षया यथासंख्यत्वं मन्येत, तं प्रति योगविभागः क्रियते ॥

प्रभवति ॥ प्रथम उपलभ्यत इत्यर्थ इति। प्रथम इत्यनेन प्रशब्दस्यार्थमाचष्टे। 'उपलभ्यते' इत्यनेनापि भवतेः। अनेकार्थत्वाद्धातूनां भवतिरिहोपलब्धौ वर्तते। हिमवतः प्रभवतीति। 'भुवः प्रभवः' इति हिमवतोऽपादानसंज्ञा ॥

विदूराञ्ञ्यः ॥ तत्र तु संस्क्रियत इति। तु शब्दोऽवधारणे। संस्क्रियते एव च तत्र विदूरे नगरे, न ततः प्रभवति।

वालवायो विदूरं च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥

## तद्गच्छति पथिदूतयोः ॥ ८५ ॥

तदिति द्वितीयासमर्थाद् 'गच्छति' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति, योऽसौ गच्छति पन्थाश्चेत्स भवति दूतो वा । स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा । माथुरः[1] । तत्स्थेषु गच्छत्सु पन्था गच्छतीत्युच्यते । अथ वा स्रुघ्नप्राप्तिः पथो गमनम् ।

पदमञ्जरी

*वालवायो विदूरं चेति* । वालवायशब्दः प्रत्ययमुत्पादयति, विदूरं चादेशमापाद्यते, सूत्रे त्वादेश एव निर्दिष्टः, तेनानुरूपः स्थानी वालवायशब्द आक्षिप्यते, यथा—शिवादिषु विश्रवणरवणेत्यादेशाभ्यां पठिताभ्यां विश्रवःशब्दः । *प्रकृत्यन्तरमेव वेति* । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकः, स एवात्र प्रकृतिरित्यर्थः । *न वै तत्रेति चेदिति* । चेच्छब्दोऽक्षमायाम्, पर्वतवाची विदूरशब्दो न प्रसिद्ध इति चेद् ब्रूयात्स *जित्वरीवदुपचारेत्* = व्यवहरेत्, यथा—वणिज एव मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्ति, एवं वैयाकरणा एव वालवायं विदूरमुपचरन्ति । नियतपुरुषापेक्षापि प्रसिद्धिर्भवतीत्यर्थः ।

*तद्गच्छति पथिदूतयोः* ॥ प्राप्तिफले परिस्पन्दे गमिर्वर्तते, न च पथः परिस्पन्दोऽस्ति तस्मात्पुरुषवर्त्ति गमनं पथ्युपचर्यत इत्याह—*तत्स्थेष्विति* । *अथ*

न्यासः

वालवायो विदूरञ्चेति । वालवायशब्द एव प्रत्ययमुत्पादयति, न विदूरशब्दः । प्रभवतिशब्दस्य प्रथमत उपलभ्यत इत्यर्थः । प्रभवति च वालवाये पर्वते । तस्माद् यतः प्रभवति तद्वाची वालवायशब्दः प्रकृतित्वेनाक्षिप्यते । यथा विश्रवणरवणा इत्यादेशावेव शिवादिषु पठ्येते । अपत्याधिकारात् तु येन तयोरपत्यापत्यवत्सम्बन्धः स एव प्रकृतित्वेनाक्षिप्यते विश्रवस्शब्दः । विश्रवसोऽपत्यं वैश्रवणः, रावणः ।

अथवा प्रकृत्यन्तरमेव विदूरशब्दो वालवाये वर्तते । विदूरात् भवति वालवायात् पर्वतात् प्रभवतीत्यर्थः । एवं स्थिते यो ब्रूयात्—नैव तत्र वालवाये प्रसिद्धो विदूरशब्द इति तं प्रत्याह—जित्वरीवदुपाचरेदिति । यथा बणिज एव वाराणसीं नगरीं 'जित्वरी' इत्युच्चारयन्ति मङ्गलार्थम्, न लोकाः; एवं वैयाकरणा एव वालवायं विदूरमित्युच्चारयन्ति । नियतदेशपुरुषविषया अपि रूढयो भवन्तीत्येतज्जित्वरीवदित्यनेन कथयति ॥

तद्गच्छति पथिदूतयोः ॥ पथो निष्क्रियत्वाद् गमेः कर्तृत्वं नोपपद्यत इत्याह—

---

१. 'राष्ट्रियः' इत्यधिकःशब्दोऽन्यत्र ।

पथिदूतयोरिति किम् ? स्रुघ्नं गच्छति सार्थः ॥

**अभिनिष्क्रामति द्वारम् ॥ ८६ ॥**

तदित्येव । द्वितीयासमर्थाद् 'अभिनिष्क्रामति' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तदभिनिष्क्रामति द्वारं चेत्तद्भवति । आभिमुख्येन निष्क्रामति=अभिनिष्क्रामति, स्रुघ्नमभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम् । माथुरम् । राष्ट्रियम् । द्वारमभिनिष्क्रमणक्रियायां करणं प्रसिद्धम् , तदिह स्वातन्त्र्येण विवक्ष्यते, यथा – साध्वसिश्छिनत्तीति ।

द्वारमिति किम् ? स्रुघ्नमभिनिष्क्रामति पुरुषः ॥

**अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥**

'तत्' इत्येव । अधिकृत्यैतदपेक्ष्य द्वितीया । अधिकृत्य = प्रस्तुत्य, आगूर्येत्यर्थः । तदिति द्वितीयासमर्थाद् 'अधिकृत्य कृते' इत्येतस्मिन्नर्थे

पदमञ्जरी

*वेति* । प्राप्तावपि गमिर्वर्तते, यथा देवभूयङ्गत इति ॥

*अभिनिष्क्रामति द्वारम्* ॥ *द्वारमभिनिष्क्रमणक्रियायामिति* । अनेनैतदाह— तत्स्थेष्वभिनिष्क्रामत्सु करणभूते द्वारे तदारोपाद् द्वारमेवाभिनिष्क्रामतीत्युच्यत इति । अभिनिष्क्रमणं द्वारमिति नोक्तम् ; तदिति द्वितीयाधिकारात् , तदा हि कृद्योगलक्षणा षष्ठी प्राप्नोति ॥

*अधिकृत्य कृते ग्रन्थे* ॥ *आख्यायिकाभ्य इति* । तादर्थ्ये चतुर्थी, आख्या-

न्यासः

तत्स्थेष्वित्यादि । पुरुषवृत्तिर्गमनं पथ्युपचर्यत इति दर्शयति । अथ वेत्यादि । प्राप्तावत्र गमिर्वर्तते । अस्ति च प्रत्यक्षगम्यैव स्रुघ्नादीनां पथोऽस्यैवानन्तर्यलक्षणा प्राप्तिः ॥

अभिनिष्क्रामति द्वारम् ॥ कथं पुनः करणत्वेन प्रसिद्धं द्वारं स्वातन्त्र्येणैव विवक्ष्यते ? इत्याह–यथेत्यादि । यथा च्छेदनक्रियायामसिः करणत्वेन प्रसिद्धोऽपि स्वातन्त्र्येण विवक्ष्यते । ननु चेतनावतोऽभिनिष्क्रमणं भवति, चेतनावता प्रयुक्तस्य वा—देवदत्तोऽभिनिष्क्रामति, शकटमभिनिष्क्रामतीति, न च द्वारं चेतनावता प्रयुक्तम् , तस्मान्नोपपद्यते तस्याभिनिष्क्रमणम् ? नैष दोषः, अचेतनेष्वप्यभिनिष्क्रामतीति व्यवहारो दृश्यते, तद्यथा—अनेन गुहामुखेन वायुरभिनिष्क्रामतीति । निष्क्रियत्वात् तर्हि नोपपद्यते ? तत्स्थेषु निष्क्रामत्सु द्वारमभिनिष्क्रमतीत्युपचर्यत इत्यदोषः ॥

अधिकृत्य कृते ग्रन्थे ॥ ननु 'कृते' इति कर्मणि निष्ठा, ततश्च तयाभिहितत्वात् कर्मणो द्वितीया न प्राप्नोति ? इत्याह–अधिकृत्येत्यैतदपेक्षया द्वितीयेति । ल्यबन्तेन या

यथाविहितं प्रत्ययो भवति यत्तत्कृतं ग्रन्थश्चेत्स भवति । सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः । गौरिमित्रः । यायातः ।

ग्रन्थे इति किम् ? सुभद्रामधिकृत्य कृतः प्रासादः ।

* लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् * । वासवदत्तामधिकृत्य कृताऽऽख्यायिका वासवदत्ता । सुमनोत्तरा । उर्वशी । न च भवति – भैमरथी ॥

**शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥**

'तत्' इत्येव । 'अधिकृत्य कृते ग्रन्थे' इति च । शिशुक्रन्दादिभ्यो द्वितीयासमर्थेभ्यश्छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे । अणोऽपवादः । शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमस्य सभा यमसभम्, यमसभीयः । द्वन्द्वात् – अग्निकाश्यपीयः । श्येनकपोतीयः । शब्दार्थसम्बन्धीयं प्रकरणम् । वाक्यपदीयम् । इन्द्रजननादिभ्यः – इन्द्रजननीयम् । प्रद्युम्नागमनीयम्[1] । इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्त्तव्यः, प्रातिपदिकेषु न पठ्यते ।

* द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः * । दैवासुरम् । राक्षोऽसुरम् । गौणमुख्यम् ।

पदमञ्जरी

यिका = गद्यग्रन्थप्रभेदः, तदभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुब् भवतीत्यर्थः । न चेदं वक्तव्यम्, अभेदोपचारेण ताच्छब्द्यलाभाद् अभिधानलक्षणत्वाच्च कचित्तद्धित उत्पद्यते, कचिन्न ॥

*शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः* ॥ *इन्द्रजननादिराकृतिगण इति* ।

न्यासः

क्रियाभिधीयते तदपेक्षया द्वितीया, न च तस्या यत् कर्म तत् केनचिदभिहितम् । निष्ठया हि ग्रन्थात्मकमेव कर्माभिहितम्, न तु ल्यबन्तक्रियाया यत् कर्म सुभद्रादिकं तदपि । गिरिमित्त्रमधिकृत्य कृतो गैरिमित्त्रः । ययातिमधिकृत्य यायातः ।

लुबित्यादि । आख्यायिकायै इति तादर्थ्ये चतुर्थी । आख्यायिकार्थमाख्यायिकामभिधातुं प्रत्ययस्य लुग्भवतीत्यर्थः ॥

---

१. 'सीतान्वेषणीयः'–इत्यधिकं पुस्तकान्तरे ।

इन्द्रजननादेराकृतिगणत्वात् शिशुक्रन्दादयोऽपि तत्रैव द्रष्टव्याः। प्रपञ्चार्थमेषां ग्रहणम्। एवं च सति देवासुरादिप्रतिषेधोऽपि न वक्तव्यः, ततश्छप्रत्ययस्यादर्शनात्॥

**सोऽस्य निवासः॥ ८९॥**

'स' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं निवासश्चेत्स भवति। निवसन्त्यस्मिन्निवासः = देश उच्यते। स्रुघ्नो निवासोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥

**अभिजनश्च॥ ९०॥**

'सोऽस्य' इत्येव। स इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थमभिजनश्चेत्स भवति। अभिजनः = पूर्वबान्धवः। तत्सम्बन्धाद् देशोऽप्यभिजन इत्युच्यते—यस्मिन्पूर्व-

पदमञ्जरी

तेन 'विरुद्धभोजनीयमध्यायं व्याख्यास्यामः' इति सिद्धं भवति॥

*सोऽस्य निवासः*॥ इह यस्य स्रुघ्नो निवासः स्रुघ्नेऽसौ भवति, ततः 'तत्र भवः' इत्येव सिद्धम्, शब्दार्थभेदात्तु पृथगुपादानम्॥

*अभिजनश्च*॥ *अभिजनाः पूर्वबान्धवा इति*। अभिजायते तेभ्य इति कृत्वा, पूर्वबान्धवाः = पित्रादयः। बन्धुशब्दः प्रज्ञादिः। *तत्सम्बन्धादेशोऽपीति*। यथा यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो देशे। कः पुनरसौ देशः?

न्यासः

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः॥ यमसभमिति। 'सभाराजा' इत्यादिना नपुंसकलिङ्गता।

यदीन्द्रजननादावेव शिशुक्रन्दादयो द्रष्टव्याः, तत्किमर्थं पृथग्ग्रहणम्? इत्यत आह—प्रपञ्चार्थमित्यादि। एवञ्च सतीत्यादि। चशब्दो हेतौ। यस्मादिन्द्रजननादेराकृतिगणस्य तदन्तर्भूतानामेव शिशुक्रन्दादीनां प्रपञ्चार्थं ग्रहणम्; तस्मादेवमर्थेऽस्मिन् स्थिते देवासुरादीनां प्रतिषेधो न वक्तव्यः, प्राप्त्यभावात्। येभ्य एव छप्रत्ययोऽयं दृश्यते, त एवेन्द्रजननादयः, न च देवसुरादिभ्यो दृश्यते॥

सोऽस्य निवासः॥ अभिजनश्च॥ तत्सम्बन्धाद् देशोऽप्यभिजन उच्यत इति। यथा यष्टीः प्रवेशयेति यष्टिसम्बन्धाद् यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो

यथाविहितं प्रत्ययो भवति यत्तत्कृतं ग्रन्थश्चेत्स भवति । सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः । गौरिमित्रः । यायातः ।

ग्रन्थे इति किम् ? सुभद्रामधिकृत्य कृतः प्रासादः ।

* लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् * । वासवदत्तामधिकृत्य कृताऽऽख्यायिका वासवदत्ता । सुमनोत्तरा । उर्वशी । न च भवति – भैमरथी ॥

**शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥**

'तत्' इत्येव । 'अधिकृत्य कृते ग्रन्थे' इति च । शिशुक्रन्दादिभ्यो द्वितीयासमर्थेभ्यश्छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे । अणोऽपवादः । शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमस्य सभा यमसभम्, यमसभीयः । द्वन्द्वात् – अग्निकाश्यपीयः । श्येनकपोतीयः । शब्दार्थसम्बन्धीयं प्रकरणम् । वाक्यपदीयम् । इन्द्रजननादिभ्यः – इन्द्रजननीयम् । प्रद्युम्नागमनीयम्[1] । इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्त्तव्यः, प्रातिपदिकेषु न पठ्यते ।

* द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः * । दैवासुरम् । राक्षोऽसुरम् । गौणमुख्यम् ।

पदमञ्जरी

यिका = गद्यग्रन्थप्रभेदः, तदभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुब् भवतीत्यर्थः । न चेदं वक्तव्यम्, अभेदोपचारेण ताच्छब्द्यलाभाद् अभिधानलक्षणत्वाच्च क्वचित्तद्धित उत्पद्यते, क्वचिन्न ॥

*शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः* ॥ इन्द्रजननादिराकृतिगण इति ।

न्यासः

क्रियाभिधीयते तदपेक्षया द्वितीया, न च तस्या यत् कर्म तत् केनचिदभिहितम् । निष्ठया हि ग्रन्थात्मकमेव कर्माभिहितम्, न तु ल्यबन्तक्रियाया यत् कर्म सुभद्रादिकं तदपि । गिरिमित्रमधिकृत्य कृतो गैरिमित्रः । ययातिमधिकृत्य यायातः ।

लुबित्यादि । आख्यायिकायै इति तादर्थ्ये चतुर्थी । आख्यायिकार्थमाख्यायिकामभिधातुं प्रत्ययस्य लुग्भवतीत्यर्थः ॥

---

१. 'सीतान्वेषणीयः'–इत्यधिकं पुस्तकान्तरे ।

इन्द्रजननादेराकृतिगणत्वात् शिशुक्रन्दादयोऽपि तत्रैव द्रष्टव्याः । प्रपञ्चार्थमेषां ग्रहणम् । एवं च सति देवासुरादिप्रतिषेधोऽपि न वक्तव्यः, ततश्छप्रत्ययस्यादर्शनात् ॥

सोऽस्य निवासः ॥ ८९ ॥

'स' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं निवासश्चेत्स भवति । निवसन्त्यस्मिन्निवासः = देश उच्यते । स्रुघ्नो निवासोऽस्य स्रौघ्नः । माथुरः । राष्ट्रियः ॥

अभिजनश्च ॥ ९० ॥

'सोऽस्य' इत्येव । स इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थमभिजनश्चेत्स भवति । अभिजनः = पूर्वबान्धवः । तत्सम्बन्धाद् देशोऽप्यभिजन इत्युच्यते—यस्मिन्पूर्व-

पदमञ्जरी

तेन 'विरुद्धभोजनीयमध्यायं व्याख्यास्यामः' इति सिद्धं भवति ॥

*सोऽस्य निवासः* ॥ इह यस्य स्रुघ्नो निवासः स्रुघ्नेऽसौ भवति, ततः 'तत्र भवः' इत्येव सिद्धम्, शब्दार्थभेदात्तु पृथगुपादानम् ॥

*अभिजनश्च* ॥ *अभिजनाः पूर्वबान्धवा इति* । अभिजायते तेभ्य इति कृत्वा, पूर्वबान्धवाः = पित्रादयः । बन्धुशब्दः प्रज्ञादिः । *तत्सम्बन्धादेशोऽपीति* । यथा यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो देशे । कः पुनरसौ देशः ?

न्यासः

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ यमसभमिति । 'सभाराजा' इत्यादिना नपुंसकलिङ्गता ।

यदीन्द्रजननादावेव शिशुक्रन्दादयो द्रष्टव्याः, तत्किमर्थं पृथग्ग्रहणम् ? इत्यत आह—प्रपञ्चार्थमित्यादि । एवञ्च सतीत्यादि । चशब्दो हेतौ । यस्मादिन्द्रजननादेराकृतिगणस्य तदन्तर्भूतानामेव शिशुक्रन्दादीनां प्रपञ्चार्थं ग्रहणम् ; तस्मादेवमर्थेऽस्मिन् स्थिते देवासुरादीनां प्रतिषेधो न वक्तव्यः, प्राप्त्यभावात् । येभ्य एव च्छप्रत्ययोऽयं दृश्यते, त एवेन्द्रजननादयः, न च देवासुरादिभ्यो दृश्यते ॥

सोऽस्य निवासः ॥ अभिजनश्च ॥ तत्सम्बन्धाद् देशोऽप्यभिजन उच्यत इति । यथा यष्टीः प्रवेशयेति यष्टिसम्बन्धाद् यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो

यथाविहितं प्रत्ययो भवति यत्तत्कृतं ग्रन्थश्चेत्स भवति । सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः । गौरिमित्रः । यायातः ।

ग्रन्थे इति किम् ? सुभद्रामधिकृत्य कृतः प्रासादः ।

* लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् * । वासवदत्तामधिकृत्य कृताऽऽख्यायिका वासवदत्ता । सुमनोत्तरा । उर्वशी । न च भवति — भैमरथी ॥

**शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥**

'तत्' इत्येव । 'अधिकृत्य कृते ग्रन्थे' इति च । शिशुक्रन्दादिभ्यो द्वितीयासमर्थेभ्यश्छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे । अणोऽपवादः । शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमस्य सभा यमसभम्, यमसभीयः । द्वन्द्वात् — अग्निकाश्यपीयः । श्येनकपोतीयः । शब्दार्थसम्बन्धीयं प्रकरणम् । वाक्यपदीयम् । इन्द्रजननादिभ्यः — इन्द्रजननीयम् । प्रद्युम्नागमनीयम्[1] । इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्त्तव्यः, प्रातिपदिकेषु न पठ्यते ।

* द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः * । दैवासुरम् । राक्षोऽसुरम् । गौणमुख्यम् ।

पदमञ्जरी

यिका = गद्यग्रन्थप्रभेदः, तदभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुब् भवतीत्यर्थः । न चेदं वक्तव्यम्, अभेदोपचारेण ताच्छब्द्यलाभाद् अभिधानलक्षणत्वाच्च क्वचित्तद्धित उत्पद्यते, क्वचिन्न ॥

*शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः* ॥ *इन्द्रजननादिराकृतिगण इति* ।

न्यासः

क्रियाभिधीयते तदपेक्षया द्वितीया, न च तस्या यत् कर्म तत् केनचिदभिहितम् । निष्ठया हि ग्रन्थात्मकमेव कर्माभिहितम्, न तु ल्यबन्तक्रियाया यत् कर्म सुभद्रादिकं तदपि । गिरिमित्रमधिकृत्य कृतो गैरिमित्रः । ययातिमधिकृत्य यायातः ।

लुबित्यादि । आख्यायिकायै इति तादर्थ्ये चतुर्थी । आख्यायिकार्थमाख्यायिकामभिधातुं प्रत्ययस्य लुग्भवतीत्यर्थः ॥

---

१. 'सीतान्वेषणीयः'—इत्यधिकं पुस्तकान्तरे ।

इन्द्रजननादेराकृतिगणत्वात् शिशुक्रन्दादयोऽपि तत्रैव द्रष्टव्याः। प्रपञ्चार्थमेषां ग्रहणम्। एवं च सति देवासुरादिप्रतिषेधोऽपि न वक्तव्यः, ततश्छप्रत्ययस्यादर्शनात्॥

सोऽस्य निवासः॥ ८९॥

'स' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं निवासश्चेत्स भवति। निवसन्त्यस्मिन्निवासः = देश उच्यते। स्रुघ्नो निवासोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥

अभिजनश्च॥ ९०॥

'सोऽस्य' इत्येव। स इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थमभिजनश्चेत्स भवति। अभिजनः = पूर्वबान्धवः। तत्सम्बन्धाद् देशोऽप्यभिजन इत्युच्यते—यस्मिन्पूर्व-

पदमञ्जरी

तेन 'विरुद्धभोजनीयमध्यायं व्याख्यास्यामः' इति सिद्धं भवति॥

*सोऽस्य निवासः*॥ इह यस्य स्रुघ्नो निवासः स्रुघ्नेऽसौ भवति, ततः 'तत्र भवः' इत्येव सिद्धम्, शब्दार्थभेदात्तु पृथगुपादानम्॥

*अभिजनश्च*॥ *अभिजनाः पूर्वबान्धवा इति*। अभिजायते तेभ्य इति कृत्वा, पूर्वबान्धवाः = पित्रादयः। बन्धुशब्दः प्रज्ञादिः। *तत्सन्बन्धादेशोऽपीति*। यथा यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो देशे। कः पुनरसौ देशः?

न्यासः

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः॥ यमसभमिति। 'सभाराजा' इत्यादिना नपुंसकलिङ्गता।

यदीन्द्रजननादावेव शिशुक्रन्दादयो द्रष्टव्याः, तत्किमर्थं पृथग्ग्रहणम्? इत्यत आह—प्रपञ्चार्थमित्यादि। एवञ्च सतीत्यादि। चशब्दो हेतौ। यस्मादिन्द्रजननादेराकृतिगणस्य तदन्तर्भूतानामेव शिशुक्रन्दादीनां प्रपञ्चार्थं ग्रहणम्; तस्मादेवमर्थेऽस्मिन् स्थिते देवासुरादीनां प्रतिषेधो न वक्तव्यः, प्राप्त्यभावात्। येभ्य एव च्छप्रत्ययोऽयं दृश्यते, त एवेन्द्रजननादयः, न च देवसुरादिभ्यो दृश्यते॥

सोऽस्य निवासः॥ अभिजनश्च॥ तत्सम्बन्धाद् देशोऽप्यभिजन उच्यत इति। यथा यष्टीः प्रवेशयेति यष्टिसम्बन्धाद् यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो

बान्धवैरुषितम्। तस्मादिह देशवाचिनः प्रत्ययः, न बन्धुभ्यः; निवास-प्रत्यासत्तेः। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः।

निवासाभिजनयोः को विशेषः? यत्र सम्प्रत्युष्यते स निवासः। यत्र पूर्वैरुषितं सोऽभिजनः।

योगविभाग उत्तरार्थः॥

## आयुधजीविभ्यश्छः पर्वते॥ ९१॥

'सोऽस्याभिजनः' इति वर्त्तते। 'आयुधजीविभ्यः' इति तादर्थ्ये चतुर्थी, 'पर्वते' इति प्रकृतिविशेषणम्। पर्वतवाचिनः प्रथमासमर्थाद-

पदमञ्जरी

इत्याह—*यस्मिन्निति*। *तदिहेत्यादि*। तदिति वाक्योपन्यासे। कथं पुनर्मुख्येऽभिजने सम्भवति गौणात्प्रत्ययो भवति? इत्याह-*निवासप्रत्यासत्तेरिति*। प्रत्यासन्नेनानन्तरसन्निहितेन निवासशब्देनाभिजनस्य विशेषणादित्यर्थः। इह हि निवासे योऽभिजन इति विशेषिते, तस्माद् देशवाचिन एव प्रत्ययः।

*निवासाभिजनयोः को विशेष इति*। अभिजनस्यापि निवासभूतस्य ग्रहणान्नास्त्येव विशेष इत्यर्थः। *तत्रेति*। यत्र स्वयं निवसति स तस्य *निवासः*। यत्र तु पूर्वैः पित्रादिभिरुषितं सो*ऽभिजन* इत्यर्थः।

*आयुधजीविभ्यश्छ पर्वते*॥ *आयुधजीविभ्य इति तादर्थ्ये चतुर्थीत्यादि*। यदि तु 'आयुधजीविभ्यः' इति पञ्चमी स्यात्, पर्वतादिति ल्यब्लोपे पञ्चमी व्याख्येया स्यात्, ततश्चायमर्थः स्यात्-आयुधजीविभ्यः पर्वतमुद्दिश्य पर्वतेऽभिधेये छो भवतीति, तत्र सोऽभिजन इत्यधिकारो बाध्येत॥

न्यासः

देशे वर्तते। कः पुनरसौ योऽभिजनसम्बन्धादभिजन उच्यते? इत्यत आह—यस्मिन्नित्यादि। इह देशवाचिन इत्यादि। कथं पुनर्मुख्येऽभिजने गौणात् प्रत्ययो भवति? इत्याह—निवासप्रत्यासत्तेरिति। निवासोऽनुकृष्यते तेनाभिजनो विशेष्यते - निवासो योऽभिजन इति। तस्माद्देशवाचिन एव प्रत्ययो भवति, न बन्धुभ्यः; तेषामनिवासत्वात्।

निवासाभिजनयोः को विशेषः? नास्त्येव कश्चिद् विशेषः, अभिजनस्य निवासभूतत्वादिति मन्यते। यत्रेत्यादिना विशेषं दर्शयति।

योगविभाग उत्तरार्थ इति॥ उत्तरेषु योगेष्वभिजनप्रत्ययः यथा स्युः, निवासे मा भूवन्निति॥

आयुधजीविभ्यश्छः पर्वते॥ आयुधजीविभ्य इति। तादर्थ्ये चतुर्थीति पञ्चमीं

भिजनाद् 'अस्य' इति षष्ठ्यर्थे छः प्रत्ययो भवति । आयुधजीविभ्यः — आयुधजीव्यर्थमायुधजीविनोऽभिधातुं प्रत्ययो भवतीत्यर्थः । हृद्गोलः पर्वतोऽभिजन एषामायुधजीविनां हृद्गोलीयाः । अन्धकवर्त्तीयाः । रोहितगिरीयाः ।

आयुधजीविभ्य इति किम्? ऋक्षोदः पर्वतोऽभिजन एषां ब्राह्मणानाम्, आर्क्षोदा ब्राह्मणाः ।

पर्वत इति किम्? साङ्काश्यका आयुधजीविनः ॥

## शण्डिकादिभ्यो ञ्यः ॥ ९२ ॥

'शण्डिक'— इत्येवमादिभ्यः प्रातिपदिकेभ्यो ञ्यः प्रत्ययो भवति 'सोऽस्याभिजनः' इत्येतस्मिन्विषये । अणादेरपवादः । शाण्डिक्यः । सार्वसेन्यः ।

शण्डिक । शर्वकेश । सर्वसेन । शक । सट । रक । शङ्ख । बोध । शण्डिकादिः ॥

## सिन्धुतक्षशिलादिभ्योऽणञौ ॥ ९३ ॥

आदिशब्दः प्रत्येकमभिसम्बध्यते । सिन्ध्वादिभ्यः प्रातिपदिकेभ्य-

### पदमञ्जरी

*शण्डिकादिभ्यो ञ्यः* ॥ *अणादेरपवाद* इति । आदिशब्देन छादेः । तत्र यदि शण्डिकादयः पर्वतशब्दाः, ततः पूर्वेण छः प्राप्तः; अथ जनपदशब्दाः, ततो 'अवृद्धादपि बहुवचनविषयात्' इति वुञ्, शण्डिकाशब्दात्कोपधादण् प्राप्तः ॥

### न्यासः

निराकरोति । यदि ह्येषा पञ्चमी स्यात्, अयुधजीविभ्य एव पर्वतेऽभिधेये च्छो भवतीत्येष सूत्रार्थः स्यात्, न चेष्यते; तस्मात् तादर्थ्य एवैषा चतुर्थी, न पञ्चमीति । साङ्काश्यका इति । 'धन्वयोपधाद् वुञ्' ॥

शण्डिकादिभ्यो ञ्यः ॥ अणादेरपवाद इति । आदिशब्देन च्छादेः । अत्र ये शण्डिकादीन् पर्वतानाचक्षते तेषां मतेन पूर्वसूत्रेण प्राप्तस्य च्छस्यापवादः । ये तु जनपदशब्दाः, तेषाम् 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तस्य वुञः । शण्डिकशब्दात् 'कोपधादात्' इति प्राप्तस्याणः ।

स्तक्षशिलादिभ्यश्च यथासंख्यमणञौ प्रत्ययौ भवतः 'सोऽस्याभिजनः' इत्येतस्मिन्विषये। सैन्धवः। वार्णवः।

सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। किष्किन्धा। गब्दिका। उरस। दरत्[1]।

ये तु कच्छादिषु पठ्यन्ते सिन्धुवर्णुप्रभृतयः, तेभ्यस्तत एवाणि सिद्धे मनुष्यवुञो बाधनार्थं वचनम्।

तक्षशिलादिभ्यः खल्वपि – ताक्षशिलः। वात्सोद्धरणः।

तक्षशिला। वत्सोद्धरण। कौमेदुर। काण्डवारण। ग्रामणी। सरालक। कंस। किन्नर। संकुचित। सिंहकोष्ठ। कर्णकोष्ठ। बर्बर। अवसान॥

तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः॥ ९४॥

तूद्यादिभ्यश्चतुर्भ्यः शब्देभ्यो यथासंख्यं चत्वार एव ढक्, छण्, ढञ्, यक् – इत्येते प्रत्यया भवन्ति 'सोऽस्याभिजनः' इत्येतस्मिन्विषये। अणोऽपवादः। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः॥

भक्तिः॥ ९५॥

पदमञ्जरी

*सिन्धुतक्षशिलादिभ्योऽणञौ*॥ *सिन्धुवर्णुप्रभृतय इति*। प्रभृतिशब्देन मधुमत्, कम्बोज, साल्व, कश्मीर, गन्धार–इत्येते गृह्यन्ते। किष्किन्धादिभ्यश्चतुर्भ्यः 'अवृद्धादपि' इति वुञि प्राप्ते वचनम्। तक्षशिलादिष्वपि वृद्धेभ्यश्छः प्राप्तः, शेषेभ्यः 'प्राग्दीव्यतोऽण्'॥

न्यासः

सिन्धुतक्षशिलादिभ्योऽणञौ॥ प्रभृतय इति। प्रभृतिशब्देन मधु, वसन्त, कम्बोज, साल्व, कश्मीर–इत्येते गृह्यन्ते। गन्धारि, किष्किन्धा, सारदि, उरस्, दरत्—इत्येतेषाम् 'अवृद्धादपि' इत्यादिना वुञि प्राप्ते वचनम्। तक्षशिलादिष्वपि कौमेदुर, काण्डवारण, ग्रामणी—इत्येतेषाम् 'वृद्धाच्छः' इति च्छे प्राप्ते। शेषाणाम् 'प्राग्दीव्यतोऽण्' इत्यणि॥

---

१. 'कुलून, दिरसा'–एतौ शब्दौ पुस्तकान्तरेऽत्र गणेऽधिकौ।

समर्थविभक्तिः प्रत्ययार्थश्चानुवर्त्तते । 'अभिजनः' इति निवृत्तम् । स इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं भक्तिश्चेत्तद्भवति । भज्यते सेव्यते इति भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः । माथुरः । राष्ट्रियः ॥

अचित्ताददेशकालाट्ठक् ॥ ९६ ॥

देशकालव्यतिरिक्तादचित्तवाचिनः प्रातिपदिकाट्ठक् प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येतस्मिन्विषये । अणोऽपवादः । वृद्धाच्छं परत्वाद्बाधते । अपूपा भक्तिरस्य आपूपिकः । शाष्कुलिकः । पायसिकः ।

अचित्तादिति किम् ? दैवदत्तः । अदेशादिति किम् ? स्रौघ्नः । अकालादिति किम् ? ग्रैष्मः ॥

महाराजाट्ठञ् ॥ ९७ ॥

महाराजशब्दाट् ठञ् प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येतस्मिन् विषये । अणोऽपवादः । महाराजो भक्तिरस्य माहाराजिकः । प्रत्ययान्तरकरणं स्वरार्थम् ॥

पदमञ्जरी

*अचित्ताददेशकालाट्ठक्* ॥ *अचित्तवाचिन इति* । स्वरूपग्रहणं तु न भवति, देशकालप्रतिषेधात् । तत्साहचर्याद्देशकालयोरपि स्वरूपग्रहणं न भवति ॥

न्यासः

*तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ भक्तिः ॥ भज्यते सेव्यत इति भक्तिरिति । 'भज सेवायाम्' इत्येतस्मात् कर्मसाधनः क्तिन् ।

अचित्ताददेशकालाट्ठक् ॥ ननु च देशकालयोरचित्तयोः प्रतिषेधान्नञिवयुक्तन्यायेन प्रकृतिरचेतनैव विज्ञास्यते, तत् किमचित्तग्रहणेन नैतदस्ति; विना हि तेनादेशकालादिति न ज्ञायते—किमयं प्रकृतिनिर्देशः, उत देशकालयोः प्रतिषेध इति ? तत्रानिष्टमपि विज्ञायते—अदेशशब्दात्, कालशब्दाच्चेति । अचित्तग्रहणे तु सति तेनातिप्रसङ्गे सत्यदेशकालादिति प्रतिषेधो विज्ञायते । अस्मादेव च प्रतिषेधादचित्तादिति स्वरूपग्रहणं न भवति । स्वरूपग्रहणे हि देशकालाभ्यां प्रसङ्गो नास्तीति प्रतिषेधं न कुर्यात् ॥

महाराजाट्ठञ् ॥ ननु च पूर्वसूत्रादेव ठगनुवर्तिष्यते, तेनापि हि माहाराजिक इति सिध्यत्येव, तत् कथं ठञ् प्रत्ययान्तरं क्रियते ? इत्याह—प्रत्ययान्तकरणमित्यादि ।

## वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥

वासुदेव-अर्जुनशब्दाभ्यां वुन्प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येतस्मिन्विषये। छाणोरपवादः। वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः।

ननु च वासुदेवशब्दाद् 'गोत्रक्षत्त्रियाख्येभ्यः' इति वुञस्त्येव, न चात्र वुन्वुञोर्विशेषो विद्यते, किमर्थं वासुदेवग्रहणम्? संज्ञैषा देवताविशेषस्य न क्षत्त्रियाख्या।

पदमञ्जरी

*वासुदेवार्जुनाभ्यां वुन्* ॥ *छाणोरपवाद इति*। 'वासुदेवशब्दः संज्ञा' इति वक्ष्यति, तेन तत्रोत्तरस्य वुञोऽप्राप्तिः। अर्जुनशब्दोऽपि यो वृक्षविशेषवचनो वर्णविशेषवचनो वा, न तत्र वुञः प्राप्तिः; क्षत्त्रियवचनादपि बहुलवचनाद् वुञोऽप्राप्तिरेवेति भावः।

*ननु चेत्यादि*। वसुदेवस्यापत्यम्, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्। *न चात्रेति*। न तावद् वृद्धौ विशेषः; प्रागेव वृद्धत्वात्। योऽपि 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः, सोऽस्यापि 'न कोपधायाः' इत्यस्त्येव। *संज्ञैषा देवताविशेषस्येति*। वसत्यस्मिन्सर्वमिति व्युत्पत्त्या परमात्मन एषा संज्ञा। *न क्षत्त्रियाख्येति*। उपलक्षणमेतत्, नापि गोत्राख्येत्यपि द्रष्टव्यम्।

प्रासङ्गिकं प्रयोजनान्तरं वासुदेवग्रहणस्य दर्शयति—*अजाद्यदन्तम्*,

न्यासः

ञित्स्वरेणाद्युदात्तत्वं यथा स्यादिति प्रत्ययान्तरकरणम्। ठकि हि सति तद्धितस्य 'कितः' इत्यन्तोदात्तत्वं स्यात् ॥

वासुदेवार्जुनाभ्यां वुन् ॥ वासुदेवशब्दाद् वृद्धाच्छस्यापवादः। अर्जुनशब्दादौत्सर्गिकस्याणः। ननु चार्जुनशब्दः क्षत्त्रियाख्यः, तस्मादुत्तरसूत्रेण प्राप्तस्य वुञोऽपवादो युक्तः? एवं मन्यते—बहुलग्रहणं तत्र क्रियते, तेनार्जुनशब्दाद् वुञ्प्रत्ययस्य प्राप्तिरेव नास्ति, तस्मादस्मादणेव स्यात्, अतस्तदपवादो न्याय्यः।

ननु चेत्यादि चोद्यम्। स्यादेतत्—वुञ्वुनोर्विशेषोऽस्ति, अतो वासुदेवशब्दाद् वुन् विधीयते? इत्याह—न चात्रेत्यादि। वासुदेवशब्दस्य च वुञि वुनि वा सति नास्ति कश्चिद् विशेष इति। तथा ह्युभयत्र तदेव रूपम्, स एव स्वरः। योऽपि वुञि सति पुंवद्भावप्रतिषेधः 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति, स वुन्यपि लभ्यत एव 'न कोपधायाः' इति। संज्ञैषेत्यादिना, यदुक्तम्—'ननु च वासुदेवशब्दाद् गोत्रक्षत्त्रिया-

'अजाद्यदन्तम्' 'अल्पाच्तरम्' इति चार्जुनशब्दस्य पूर्वनिपातमकुर्वन् ज्ञापयति – अभ्यर्हितं पूर्वं निपततीति ॥

## गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥

गोत्राख्येभ्यः क्षत्त्रियाख्येभ्यश्च प्रातिपदिकेभ्यो बहुलं वुञ् प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येतस्मिन्विषये। अणोऽपवादः। वृद्धाच्छं परत्वाद्बाधते। ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः। औपगवकः। कापटवकः। क्षत्त्रियाख्येभ्यः – नाकुलकः। साहदेवकः। साम्बकः।

आख्याग्रहणं प्रसिद्धक्षत्त्रियशब्दपरिग्रहार्थम् – यथाकथञ्चित् क्षत्त्रियवृत्तिभ्यो मा भूत्।

पदमञ्जरी

*अल्पाच्तरमिति चेति*। इतिकरणः प्रत्येकमभिसम्बध्यते। यद्यप्येतज्ज्ञाप्यते, तथापि 'श्वयुवमघोनामतद्धिते' इति निर्देशात्कचिदन्यथापि भवति ॥

*गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ्* ॥ *गोत्रक्षत्त्रियाख्येभ्य इति*। आङ्पूर्वात्ख्यातेर्मूलविभुजादित्वात्कः। *आख्याग्रहणमिति*। आङ्पूर्वस्य ख्यातेर्ग्रहणमित्यर्थः। *यथाकथञ्चिदिति*। क्षत्त्रियशब्दसामानाधिकरण्याद्येषां क्षत्त्रिये वृत्तिः, यथा— शूरः क्षत्त्रिय इति, तेभ्यो मा भूदित्यर्थः ॥

न्यासः

ख्येभ्य इति वुञस्त्येव' इति, तन्निकरोति। गोत्रक्षत्त्रियाख्येभ्यो वुञ् विधीयते। न च वासुदेवशब्दो गोत्राख्यं प्रातिपदिकम्, नापि क्षत्त्रियाख्यम्, तत् कुतो वुञः सम्भवः। अजाद्यदन्तमित्यादि। इतिकरणः प्रत्येकमभिसम्बध्यते। 'अजाद्यन्तम्' इत्यनेन 'अल्पाच्तरम्' इत्यनेन वाऽर्जुनशब्दस्य पूर्वनिपातममकुर्वतैतद् विज्ञापितम्—अभ्यर्हितं पूर्वं निपतति। तेन मातापितरौ, श्रद्धामेधे, दीक्षातपसी—इत्यत्र शास्त्रादेवाभ्यर्हितस्य पूर्वनिपातः सिद्धो भवति। अभ्यर्हितत्वं तु वासुदेवशब्दस्य देवताविशेषत्वात् ॥

गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ् ॥ ग्लौचुकायनकः। ग्लौचुकायनक इति। ग्लुचुकम्लुचुकशब्दाभ्याम् 'प्राचामवृद्धात् फिन्' तदन्ताद् वुञ्। आख्याग्रहणं किमर्थम्? न गोत्रक्षत्त्रियेभ्य इत्येवोच्येत? इत्यत आह— आख्याग्रहणमित्यादि। यद्याख्याग्रहणं न क्रियेत, ततो येऽपि कथाकथञ्चित् क्षत्त्रिये वर्तते तेभ्योऽपि स्यात्, नेष्यते; तस्मात् प्रसिद्धक्षत्त्रियपरिग्रहार्थमाख्याग्रहणं क्रियते। तेनेह न भवति—विद्वान् क्षत्त्रियो भक्तिरस्येति। न विद्वच्छब्दः क्षत्त्रियशब्द इति प्रसिद्धः। क्षत्त्रियशब्दस्य तु सामानाधिकरण्यात्

बहुलग्रहणात् क्वचिदप्रवृत्तिरेव – पाणिनो भक्तिरस्य पाणिनीयः । पौरवीयः ॥

## जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ १०० ॥

जनपदिनो ये बहुवचने जनपदेन समानशब्दास्तेषां जनपदवत्सर्वं भवति – प्रत्ययः, प्रकृतिश्च, 'सोऽस्य भक्तिः' इत्येतस्मिन्विषये । 'जनपदतदवध्योश्च' इत्यत्र प्रकरणे ये प्रत्यया विहिताः, ते जनपदिभ्योऽस्मिन्नर्थेऽतिदिश्यन्ते । जनपदिनः = जनपदस्वामिनः क्षत्रियाः । अङ्गा जनपदो भक्तिरस्य आङ्गकः । वाङ्गकः । सौह्मकः । पौण्ड्रकः ।

तद्वद् – अङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः । वाङ्गकः । सौह्मकः । पौण्ड्रकः ।

### पदमञ्जरी

*जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने* ॥ *जनपदिनाम्* जनपदिवाचिनां शब्दानाम् *जनपदवत्* जनपदवाचिनां शब्दानामिव, *जनपदेन* जनपदवाचिना शब्देन, *समानशब्दानाम्* समानश्रुतीनाम् , बहुवचने बह्वर्थाभिधाने । वृत्तेरप्येष एवार्थः । *प्रत्ययः प्रकृतिश्चेति* । अनेन सर्वशब्दस्यार्थो दर्शितः । *जनपदिनो जनपदस्वामिन इति* । स्वस्वामिभावसम्बन्धे मत्वर्थीयं दर्शयति । *अङ्गा जनपदा इत्यादिना* दृष्टान्ते प्रवृत्तिप्रकारमाह । *तद्वदित्यादिना* तूदाहरणम् । सर्वत्र बहुष्वर्थेषु 'द्व्यञ्मगध' इत्यादिना विहितस्याणः 'तद्राजस्य बहुषु' इति लुकि कृते समानशब्दादवृद्धादपि बहुवचनेति वुञि विवक्षिते 'गोत्रेऽलुगचि' इति वचनादाङ्गशब्दाद् वुञ् ।

### न्यासः

क्षत्रिये वृत्तिर्गम्यते । पाणिनीय इति । पाणिनोऽपत्यमित्यण् , 'गाथिविदथि' इत्यादिना प्रकृतिभावः, पाणिनो भक्तिरस्येति 'वृद्धाच्छः' पाणिनीयः । पौरवो भक्तिरस्येति पौरवीयः ॥

जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने ॥ एकशब्दा इति । एतेन समानशब्दोऽयमेकवाचीति दर्शयति । प्रत्ययः प्रकृतिश्चेति । सर्वशब्देन योऽर्थ उपात्तस्तमाचष्टे । तद्वत् अङ्गा क्षत्रिया भक्तिरस्येति । अङ्गादिभ्यः क्षत्रियेभ्यो बहुष्वपत्येषु 'द्व्यञ्मगध' इत्यादिना विहितस्याणः 'तद्राजस्य' इत्यादिना लुक् क्रियते । बहुवचनेऽङ्गादयो जनपदिनो जनपदेन समानशब्दा भवन्ति । अत्र जनपदवृत्तिभ्योऽङ्गा-

जनपदिनामिति किम् ? पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः।

सर्वग्रहणं प्रकृत्यतिदेशार्थम्, स च द्व्येकयोः प्रयोजयति—वृद्धिनिमित्तेषु च वुञादिषु विशेषो नास्तीति।

मद्रवृज्योः कनि विशेषः। मद्रस्यापत्यम् 'द्व्यञ्मगधकलिङ्गसूरमसादण्' इत्यण्—माद्रः। वृजिशब्दादपि 'वृद्धेत्कोशलाजादाञ्ञ्यङ्',

पदमञ्जरी

*पञ्चाला ब्राह्मणा इति*। अभेदोपचाराद् ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः, तत्रातिदेशाभावादणेव भवति।

*सर्वग्रहणमित्यादि*। असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यात्, न प्रकृतेः। वतिनिर्देशस्तु यैर्जनपदैर्ये जनपदिनस्तेषां तज्जनपदप्रत्यय एव यथा स्यात्, जनपदान्तरप्रत्ययो मा भूदित्येवमर्थं स्यात्। न त्वनेन प्रकृत्यतिदेशो लभ्यते, तस्मात्तदर्थं सर्वग्रहणं क्रियते। *स च द्व्येकयोः प्रयोजयतीति* पाठः। स च प्रकृत्यतिदेशः सर्वग्रहणं द्व्येकयोः प्रयोजयति, न बहुषु; तत्र रूपस्याभिन्नत्वात्। यदाह—'बहुवचने समानशब्दानाम्' इति। द्व्येकयोस्तु जनपदवाचिनो रूपं वृद्धम्, जनपदवाचिनस्त्ववृद्धमिति तत्रैव सर्वग्रहणस्य प्रयोजनमित्यर्थः। *अतिदेशः प्रयोजयति, अतिदेशं प्रयोजयतीति* वा पाठे न समीचीनमर्थं पश्यामः। *वृद्धिनिमित्तेष्वित्यादि*। तत्र ह्यतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति नास्ति विशेषः।

न्यासः

दिभ्यो यथा 'सोऽस्य भक्तिः' इत्येतस्मिन् विषये 'जनपदतदवध्योश्च' इति वुञ् भवति, तथा जनपदवृत्तिभ्योऽपि—पञ्चाला ब्राह्मणा इति। यदा पञ्चालनिवासिषु साहचर्यात् पञ्चालादिशब्दो वर्तते, तदा भवन्ति ब्राह्मणा जनपदेन बहुवचने समानशब्दाः, न तु ते जनपदिनः। तेनातिदेशाभावादणेव भवति—पाञ्चालः।

सर्वग्रहणमित्यादि। यदि सर्वग्रहणं न क्रियते, तदा प्रत्ययस्य विधीयमानतया प्राधान्यात् प्रधाने कार्यसम्प्रत्ययात् तस्यैवातिदेशः स्यात्, न प्रकृतेः। तस्माद् यथा प्रकृतेरप्यतिदेशो भवति तदर्थं सर्वग्रहणं क्रियते। स चेत्यादि। स च प्रकृत्यतिदेशः सर्वग्रहणं द्व्येकयोरेव प्रयोजयति, न बहुषु। जनपदशब्दो नात्र वृद्धः, तस्मादवृद्धो जनपदशब्दो दृश्यते। बहुवचने तु 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति लुकि कृते विनाप्यतिदेशेनावृद्धः, अत एव भवतीति तत्र प्रकृत्यतिदेशोऽनर्थकः। ततो नैतदर्थं सर्वग्रहणं कर्तव्यम्। वृद्धिनिमित्तेष्वित्यादि। वृद्धिनिमित्तेषु वुञादिष्वादिष्टायामवृद्धायां प्रकृतौ पुनर्वृद्धिभावात्। प्रकृतिनिर्ह्रासे कृत इति सर्वग्रहणात्प्रकृत्यतिदेशेन निर्ह्रासः।

इति ञ्यङ् – वार्ज्यः । स भक्तिरस्येति प्रकृतिनिर्ह्रासे कृते – मद्रकः, वृजिकः ।

जनपदेन समानशब्दानामिति किम् ? अनुषण्डो जनपदः, पौरवो राजा, स भक्तिरस्य पौरवीयः ।

बहुवचनग्रहणं समानशब्दताविषयलक्षणार्थम् ; अन्यथा हि यत्रैव समानशब्दता तत्रैवातिदेशः स्याद्; एकवचनद्विवचनयोर्न स्यात् –

पदमञ्जरी

*मद्रवृज्योः कनि विशेष इति* । तत्र वृद्ध्यसम्भवात् । *प्रकृतिनिर्ह्रासे कृत इति* । निर्ह्रासः = अपचयः, अल्पत्वमित्यर्थः । *मद्रकः, वृजिक इति* । असति तु प्रकृत्यतिदेशे माद्रकको वार्ज्यक इति स्यात् ।

*बहुवचनग्रहणमित्यादि* । समानशब्दताया यो विषयस्तस्य लक्षणं प्रदर्शनं तदर्थम् । *अन्यथा हीति* । यदि बहुवचनग्रहणं न क्रियते । *यत्रैवेति* । बहुवचने, तत्रैव हि तद्राजस्य लुकि कृते समानशब्दता भवति । *एकवचनद्विवचनयोर्न स्यादिति* । लुगभावेन समानशब्दताया अभावात् । ननु सर्वग्रहणं प्रकृत्यतिदेशार्थम् , स च द्व्येकयोः प्रयोजयतीत्युक्तम् , तत्कथं द्व्येकयोर्न स्यात् ? तस्मात् सर्वग्रहणाद्यत्र कचित्समानशब्दानां सर्वत्रातिदेशः सिद्धः । अस्यैवार्थस्य विस्पष्टप्रतिपत्त्यर्थम् 'बहुवचने' इत्युपलक्षणमुपात्तम् ॥

न्यासः

निर्ह्रासः = अल्पता, अपक्षय इत्यर्थः । माद्र इति । एताञ्च प्रकृतिमपेक्ष्य मद्र इत्येषा प्रकृतिरल्पा भवति । वार्ज्य इति । एताञ्च वृजिरिति । ननु वतेः सर्वसादृश्यार्थत्वाद् वतिनिर्देशेनैव प्रकृतेरतिदेशो भविष्यतीति तत् किं सर्वग्रहणेन ? नैतदस्ति; यथैव तत्र सर्वसादृश्यार्थे वतौ न प्रत्ययार्थो देवतार्थेऽतिदिश्यते, तथेहापि जनपदरूपं जनपदिनि नातिदिश्यते । कस्मात् पुनस्तत्र प्रत्ययार्थो नातिदिश्यते ? वतिना तयोर्भेदस्य प्रतिपादितत्वात् । वतिर्हि सादृश्ये विधीयते, सादृश्यं च भेदाश्रयम् ; यदि भवार्थस्यापि देवतार्थतया विपरिणामः स्यात् , तदा वतिरेव न स्यात् । तस्मादन्यस्य कार्यस्य सादृश्यं वतिराचष्टे, प्रत्ययार्थयोस्तु भेदम् , इहापि च जनपदजनपदिनोर्भेदमाचष्ट इति । असति सर्वग्रहणे जनपदरूपं जनपदिनि न लभ्यते । तस्मात् सर्वग्रहणं क्रियते ।

बहुवचनग्रहणमित्यादि । समानशब्दताया विषयप्रदर्शनं लक्षणम् । तदर्थं बहुवचनग्रहणम् । अन्यथा हीत्यादि । यदि बहुवचनग्रहणं न क्रियेतेत्यर्थः । तत्रैवेति । बहुवचने । बहुवचन एव तद्राजप्रत्ययस्य लुकि कृते समानशब्दता भवति, यतश्च तत्रैवातिदेशः स्यात् । एकवचनद्विवचनयोर्न स्यादिति । तत्र समानशब्दताया अभा-

वाङ्गो वाङ्गौ वा भक्तिरस्येति । बहुवचने तु, बहुवचने समानशब्दाना-मेकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो भवति – वाङ्गः वाङ्गौ वा भक्तिरस्य वाङ्गकः ॥

**तेन प्रोक्तम् ॥ १०१ ॥**

तेनेति तृतीयासमर्थात् 'प्रोक्तम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । प्रकर्षेणोक्तम् = प्रोक्तमित्युच्यते, न तु कृतम्; 'कृते ग्रन्थे', इत्यनेन गतत्वात् । अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः । पाणिनीयम् । आपिशलम् । काशकृत्स्नम् ॥

**तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ १०२ ॥**

तित्तिर्यादिभ्यः शब्देभ्यश्छण् प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये । अणोऽपवादः । तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः । वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः ।

छन्दसि वाऽयमिष्यते – तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न

पदमञ्जरी

*तेन प्रोक्तम्* ॥ *प्रकर्षेणोक्तमिति* । अध्यापनेनार्थव्याख्यानेन वा प्रकर्षेणा-प्रकाशितमित्यर्थः । प्रकर्षेणेति वचनाद् ग्रामे ग्रामे यद्यपि काठकादिकं देवदत्ता-दिभिः प्रोच्यते, तथापि तेभ्यः प्रत्ययो न भवति । *न तु कृतमिति* । प्रपूर्वो वचिः करणेऽपि वर्तते इति भावः । मधुरायां भवो माथुरः, ततो वृद्धाच्छे प्राप्ते 'कलापिनोऽण्' इत्यण्ग्रहणादधिकविधानार्थादण्प्रत्ययः । *पाणिनीयमिति* । स्वय-मन्येन वा कृतं यत्पाणिनिना प्रोक्तं तदुच्यते ॥

न्यासः

वात् । बहुवचने त्वित्यादि । बहुवचनग्रहणे तु सति बहुवचने ये जनपदेन समान-शब्दास्तेषां यत्र वा तत्र वातिदेशे विज्ञायमाने द्व्येकयोरप्यसौ सिद्धो भवति ॥

तेन प्रोक्तम् ॥ प्रकर्षेणोक्तमिति । प्रकर्षः = अतिशयः, व्याख्यातं तदध्यापितं वा प्रोक्तम्' इत्युच्यते । न तु कृतमिति । न तु कृतमुत्पादितं प्रोक्तमित्युच्यते । कस्मादित्याह– कृते ग्रन्थ इति गतार्थत्वात् । कथं माथुरीत्यण्, यावता वृद्धाच्छेनैव भवितव्यम् ? नैष दोषः; 'कलापिनोऽण्' इत्यत्राण्ग्रहणस्यान्येभ्यो भवतीत्येतत् प्रयोजनं वक्ष्यति, तेन माथुर-शब्दादप्यणभवति । पाणिनीयमिति । पाणिनशब्दाद् 'वृद्धाच्छः' इति छः। आपिशलम्, काशकृत्स्नमिति । अपिशलिकाशकृत्स्निशब्दाभ्याम् 'इञश्च' इत्यण् ।

भवति। 'शौनकादिभ्यश्छन्दसि'[1] इत्यत्रास्यानुवृत्तेश्छन्दोऽधिकारविहितानां च तद्विषयतेष्यते[1] ॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥

काश्यप-कौशिकशब्दाभ्यामृषिवाचिभ्यां णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये। अणोऽपवादः। णकार उत्तरत्र वृद्ध्यर्थः कल्प्यः, 'ताभ्यां प्रोक्तः' इति स्मर्यते, तस्यापि च तद्विषयता भवत्येव। 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवृत्तेश्छन्दोऽधिकारविहितानां च तत्र तद्विषयता

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ छन्दसि चायमिष्यत इति। छन्दस्येवेत्यर्थः। तित्तिरिणा प्रोक्ताः श्लोका इत्यत्र न भवतीति। न केवलं छन्दस्येव, अपि त्वन्यदपि न भवत्यनभिधानादित्याहुः। कथं पुनरिष्यमाणोऽपि छन्दसि लभ्यः? इत्याह—शौनकादिभ्य इति।

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ णकार उत्तरत्र वृद्ध्यर्थ इति। इह तु पूर्वेणैव वृद्धेः सिद्धत्वात्। योऽपि 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः, सोऽपि न प्रयोजनम्, णिन्नन्तस्याभ्यन्तरेऽस्त्रीविषयत्वेन स्त्रियामवृत्तेः। वृत्तावपि 'जातेश्च' इति सिद्धत्वात्, चरणत्वेन जातित्वात्। तस्यापि चेति। कथं छन्दोब्राह्मणानामनुक्तानां तद्विषयता कल्पस्य भवति? इत्याह—शौनकादिभ्य इति। ननु च तत्रानु-

वृत्तिः

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ तैत्तिरीया इति। छण्प्रत्ययः, तेन 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक्। 'छन्दोब्राह्मणानि च तद्विषयाणि' इति[2] तद्विषयता।

छन्दसीत्यादि। कथं पुनश्छन्दसि लभ्यते? न हि छन्दोग्रहणमस्तीत्याह—शौनकादिभ्य इत्यादि ॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ णकार उत्तरत्र वृद्ध्यर्थ इति। उत्तरेषु योगेषु वृद्धिर्यथा स्यात्। इह हि णकारस्य प्रयोजनं नास्ति, तत्र हि वृद्धिरेव प्रयोजनम्। काश्यपकौशिकशब्दौ वृद्धिमन्तौ। तस्यापि चेत्यादि। ननु च छन्दोब्राह्मणानां तद्विषयता युक्ता, तत् कथं कल्पस्यापि सा भवति? इत्याह—शौनकादिभ्य इत्यादि। स्यादेतत्—यद्यपि 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवर्तते, तथापि छन्दो-

---

१–१. 'शौनकादिभ्यश्छन्दसीत्यतोऽनुवर्तिष्यत इत्यनभिधानात्' इति पाठो बहुषु पुस्तकेषु दृश्यते।

तद्विषयतेष्यते – काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः[1]।

ऋषिभ्यामिति किम्? इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥

## कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ १०४ ॥

पदमञ्जरी

वृत्तौ सत्यामप्यस्य योगस्य न कल्पः छन्दो भवति, नापि ब्राह्मणम्? अत आह– *छन्दोऽधिकारविहितानां चेति*। 'छन्दोब्राह्मणानि' इत्यत्र छन्दोग्रहणं स्वर्यते, तत्र स्वरितेनाधिकारावगतिर्भवतीति छन्दःप्रकरणमध्यपातिनोऽस्यापि णिनेस्तद्विषयता भवतीत्यर्थः। यत्तु 'छन्दोब्राह्मणानि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कल्पादेस्तद्विषयत्वप्रतिपादनम्, तत्प्रकारान्तरं द्रष्टव्यम्। *इदानीन्तनेन गोत्रकाश्यपेनेति*। न ह्यसावृषिः; अमन्त्रदर्शित्वात् ॥

न्यासः

ब्राह्मणादीनां तद्विषयतोच्यमाना कल्पस्य न सिध्यत्येव। न हि शौनकादिसूत्रानुवृत्तौ सत्यामस्य योगस्य कल्पश्छन्दोभावं ब्राह्मणभावमापद्यत इत्याह—छन्दोऽधिकारविहितानाञ्चेत्यादि। कथं पुनरिष्यमाणोऽपि च्छन्दोऽधिकारविहितानां तद्विषयता लभ्यते? एवमर्थम् 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यत्र च्छन्दोग्रहणं स्वर्यते, तेन शौनकादिभ्यश्छन्दसीतीदम्प्रकृतयो विहिताः प्रोक्तप्रत्ययाः, तेषां सर्वेषामेव कल्पादावपि तद्विषयता भवति। अथ गुणकल्पनया कल्पादीनामपि च्छन्दस्त्वं विवक्ष्यते। ननु च च्छन्दोब्राह्मणानि च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् तेनैव प्रागेव कल्पादेस्तद्विषयता प्रतिपादिता, तत् किमर्थं पुनरनेन प्रकारेण प्रतिपाद्यते। तत्र वा कल्पादेस्तद्विषयता प्रतिपादनार्थश्चकारः कर्तव्यः, अयं वा प्रकार आश्रयितव्य इति विकल्पप्रदर्शनार्थम्।

इदानीन्तनेनेत्यादि। इदानीन्तनो यः काश्यपः स काश्यपगोत्रप्रभवत्वात् काश्यप इत्युच्यते, तथेदानीन्तनो यः कौशिकः स कौशिकगोत्रप्रभवत्वात् कौशिक इत्युच्यते; तत्र यदि ऋषिग्रहणं न क्रियेत ततो णिनिः स्यात्, ऋषिग्रहणे तु सति न भवति। कथं न भवतीति, यावता काश्यपकौशिकशब्दावपि ऋषिशब्दावेव, तथाहि प्रवराध्याये ये पठ्यन्ते त ऋषय इति, इमावपि तत्र पठ्येते एव? नैष दोषः; विशेषणोपादानसामर्थ्याद्यदयमृषिशब्दः क्रियाशब्दो विज्ञायते—ऋषिर्दर्शनादिति। तेन यावनन्यपुरुषसाधारणेनौपदेशिकेन दर्शनेन तद्वन्तौ काश्यपकौशिकशब्दौ तत इदं प्रत्ययविधानम्; न चेदनीन्तनौ काश्यपकौशिकशब्दावेवंविधौ, ताभ्यां छ एव भवति ॥

---

१. 'कौशिकिनः' इत्यधिकं बहुषु पुस्तकेषु।

भवति । 'शौनकादिभ्यश्छन्दसि'[1] इत्यत्रास्यानुवृत्तेश्छन्दोऽधिकारविहितानां च तद्विषयतेष्यते[1] ॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥

काश्यप-कौशिकशब्दाभ्यामृषिवाचिभ्यां णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये । छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः कल्प्यः, 'ताभ्यां प्रोक्तः' इति स्मर्यते, तस्यापि च तद्विषयता भवत्येव । 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवृत्तेश्छन्दोऽधिकारविहितानां च तत्र

पदमञ्जरी

*तित्तिरिवरतन्तुखण्डिकोखाच्छण्* ॥ *छन्दसि चायमिष्यत इति* । छन्दस्यभिधेय इत्यर्थः । *तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवतीति* । न केवलं छणेव, अपि त्वणपि न भवत्यनभिधानादित्याहुः । कथं पुनरिष्यमाणोऽपि छन्दसि लभ्यः ? इत्याह—*शौनकादिभ्य इति* ।

*काश्यपकौशिकाभ्यामृषिभ्यां णिनिः* ॥ *णकार उत्तरत्र वृद्ध्यर्थ इति* । इह तु पूर्वमेव वृद्धेः सिद्धत्वात् । योऽपि 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः, सोऽपि न प्रयोजनम्, णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामवृत्तेः । वृत्तावपि 'जातेश्च' इति सिद्धत्वात्, चरणत्वेन जातित्वात् । *तस्यापि चेति* । कथं छन्दोब्राह्मणानामुच्यमाना तद्विषयता कल्पस्य भवति ? तत्राह–*शौनकादिभ्य इति* । ननु च तत्रानु-

न्यासः

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ तैत्तिरीया इति । छण्प्रत्ययः, तेभ्य 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । 'छन्दोब्राह्मणानि च तद्विषयाणि' इति तद्विषयता ।

छन्दसीत्यादि । कथं पुनश्छन्दसि लभ्यते ? न हि च्छन्दोग्रहणमस्तीत्याह—शौनकादिभ्य इत्यादि ॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ णकार उत्तरत्र वृद्ध्यर्थ इति । उत्तरेषु योगेषु वृद्धिर्यथा स्यात् । इह हि णकारस्य प्रयोजनं नास्ति, तस्य हि वृद्धिरेव प्रयोजनम् । काश्यपकौशिकशब्दौ वृद्धिमन्तौ । तस्यापि चेत्यादि । ननु च च्छन्दोब्राह्मणादीनां तद्विषयता युक्ता, तत् कथं कल्पस्यापि सा भवति ? इत्याह—शौनकादिभ्य इत्यादि । स्यादेतत्—यद्यपीदं 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवर्तता, तथापि च्छन्दो-

---

१–१. 'शौनकादिभ्यश्छन्दसीत्यत्रेदमनुवर्तयितव्यमित्याहुः' इति पाठो बहुषु पुस्तकेषु दृश्यते ।

तद्विषयतेष्यते — काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः[1]।

ऋषिभ्यामिति किम्? इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥

**कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ १०४ ॥**

पदमञ्जरी

वृत्तौ सत्यामप्यस्य योगस्य न कल्पः छन्दो भवति, नापि ब्राह्मणम्? अत आह— *छन्दोऽधिकारविहितानां चेति*। 'छन्दोब्राह्मणानि' इत्यत्र छन्दोग्रहणं स्वर्यते, तत्र स्वरितेनाधिकारावगतिर्भवतीति छन्दःप्रकरणमध्यपातिनोऽस्यापि णिनेस्तद्विषयता भवतीत्यर्थः। यत्तु 'छन्दोब्राह्मणानि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कल्पादेस्तद्विषयत्वप्रतिपादनम्, तत्प्रकारान्तरं द्रष्टव्यम्। *इदानीन्तनेन गोत्रकाश्यपेनेति*। न ह्यसावृषिः; अमन्त्रदर्शित्वात् ॥

न्यासः

ब्राह्मणादीनां तद्विषयतोच्यमाना कल्पस्य न सिध्यत्येव। न हि शौनकादिसूत्रानुवृत्तौ सत्यामस्य योगस्य कल्पश्छन्दोभावं ब्राह्मणभावमापद्यत इत्याह—छन्दोऽधिकारविहितानाञ्चेत्यादि। कथं पुनरिष्यमाणोऽपि च्छन्दोऽधिकारविहितानां तद्विषयता लभ्यते? एवमर्थम्, 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यत्र च्छन्दोग्रहणं स्वर्यते, तेन शौनकादिभ्यश्छन्दसीतीदम्प्रकृतयो विहिताः प्रोक्तप्रत्ययाः, तेषां सर्वेषामेव कल्पाद्यावपि तद्विषयता भवति। अथ गुणकल्पनया कल्पादीनामपि च्छन्दस्त्वं विवक्ष्यते। ननु च 'च्छन्दोब्राह्मणानि च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् तेनैव प्रागेव कल्पादेस्तद्विषयता प्रतिपादिता, तत् किमर्थं पुनरनेन प्रकारेण प्रतिपाद्यते। तत्र वा कल्पादेस्तद्विषयता प्रतिपादनार्थश्चकारः कर्तव्यः, अयं वा प्रकार आश्रयितव्य इति विकल्पप्रदर्शनार्थम्।

इदानीन्तनेनेत्यादि। इदानीन्तनो यः काश्यपः स काश्यपगोत्रप्रभवत्वात् काश्यप इत्युच्यते, तथेदानीन्तनो यः कौशिकः स कौशिकगोत्रप्रभवत्वात् कौशिक इत्युच्यते; तत्र यदि ऋषिग्रहणं न क्रियेत ततो णिनिः स्यात्, ऋषिग्रहणे तु सति न भवति। कथं न भवतीति, यावता काश्यपकौशिकशब्दावपि ऋषिशब्दावेव, तथाहि प्रवराध्याये ये पठ्यन्ते त ऋषय इति, इमावपि तत्र पठ्येते एव? नैष दोषः; विशेषणोपादानसामर्थ्याद्यदयमृषिशब्दः क्रियाशब्दो विज्ञायते—ऋषिर्दर्शनादिति। तेन यावनन्यपुरुषसाधारणेनौपदेशिकेन दर्शनेन तद्वन्तौ काश्यपकौशिकशब्दौ तत इदं प्रत्ययविधानम्; न चेदनीन्तनौ काश्यपकौशिकशब्दावेवंविधौ, ताभ्यां छ एव भवति ॥

---

१. 'कौशिकिनः' इत्यधिकं बहुषु पुस्तकेषु।

भवति । 'शौनकादिभ्यश्छन्दसि'[1] इत्यत्रास्यानुवृत्तेश्छन्दोऽधिकारविहि-तानां च तद्विषयतेष्यते[1] ॥

**काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥**

काश्यप-कौशिकशब्दाभ्यामृषिवाचिभ्यां णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये । छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः कल्प्यः, 'ताभ्यां प्रोक्तः' इति स्मर्यते, तस्यापि च तद्विषयता भवत्येव । 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवृत्तेश्छन्दोऽधिकारविहितानां च तत्र

पदमञ्जरी

*तित्तिरिवरतन्तुखण्डिकोखाच्छण्* ॥ छन्दसि चायमिष्यत इति । छन्दस्य-भिधेय इत्यर्थः । *तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवतीति* । न केवलं छणेव, अपि त्वणपि न भवत्यनभिधानादित्याहुः । कथं पुनरिष्यमाणोऽपि छन्दसि लभ्यः ? इत्याह—*शौनकादिभ्य इति* ।

*काश्यपकौशिकाभ्यामृषिभ्यां णिनिः* ॥ *णकार उत्तरत्र वृद्ध्यर्थ इति* । इह तु पूर्वमेव वृद्धेः सिद्धत्वात् । योऽपि 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः, सोऽपि न प्रयोजनम्, णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामवृत्तेः । वृत्तावपि 'जातेश्च' इति सिद्धत्वात्, चरणत्वेन जातित्वात् । *तस्यापि चेति* । कथं छन्दोब्राह्मणाना-मुच्यमाना तद्विषयता कल्पस्य भवति ? तत्राह—*शौनकादिभ्य इति* । ननु च तत्रानु-

न्यासः

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ तैत्तिरीया इति । छण्प्रत्ययः, तेभ्य 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । 'छन्दोब्राह्मणानि च तद्विषयाणि' इति तद्विषयता ।

छन्दसीत्यादि । कथं पुनश्छन्दसि लभ्यते ? न हि च्छन्दोग्रहणमस्तीत्याह—शौनकादिभ्य इत्यादि ॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ णकार उत्तरत्र वृद्ध्यर्थ इति । उत्तरेषु योगेषु वृद्धिर्यथा स्यात् । इह हि णकारस्य प्रयोजनं नास्ति, तस्य हि वृद्धिरेव प्रयोजनम् । काश्यपकौशिकशब्दौ वृद्धिमन्तौ । तस्यापि चेत्यादि । ननु च च्छन्दो-ब्राह्मणादीनां तद्विषयता युक्ता, तत् कथं कल्पस्यापि सा भवति ? इत्याह—शौनकादिभ्य इत्यादि । स्यादेतत्—यद्यपीदं 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवर्तता, तथापि च्छन्दो-

---

१–१. 'शौनकादिभ्यश्छन्दसीत्यत्रेदमनुवर्तयितव्यमित्याहुः' इति पाठो बहुषु पुस्तकेषु दृश्यते ।

तद्विषयतेष्यते — काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः[1]।

ऋषिभ्यामिति किम् ? इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥

## कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ १०४ ॥

### पदमञ्जरी

वृत्तौ सत्यामप्यस्य योगस्य न कल्पः छन्दो भवति, नापि ब्राह्मणम् ? अत आह— *छन्दोऽधिकारविहितानां चेति*। 'छन्दोब्राह्मणानि' इत्यत्र छन्दोग्रहणं स्वर्यते, तत्र स्वरितेनाधिकारावगतिर्भवतीति छन्दःप्रकरणमध्यपातिनोऽस्यापि णिनेस्तद्विषयता भवतीत्यर्थः। यत्तु 'छन्दोब्राह्मणानि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कल्पादेस्तद्विषयत्वप्रतिपादनम्, तत्प्रकारान्तरं द्रष्टव्यम्। *इदानीन्तनेन गोत्रकाश्यपेनेति*। न ह्यसावृषिः; अमन्त्रदर्शित्वात् ॥

### न्यासः

ब्राह्मणादीनां तद्विषयतोच्यमाना कल्पस्य न सिध्यत्येव। न हि शौनकादिसूत्रानुवृत्तौ सत्यामस्य योगस्य कल्पश्छन्दोभावं ब्राह्मणभावमापद्यत इत्याह—छन्दोऽधिकारविहितानाञ्चेत्यादि। कथं पुनरिष्यमाणोऽपि च्छन्दोऽधिकारविहितानां तद्विषयता लभ्यते ? एवमर्थम् 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यत्र च्छन्दोग्रहणं स्वर्यते, तेन शौनकादिभ्यश्छन्दसीतीदम्प्रकृतयो विहिताः प्रोक्तप्रत्ययाः, तेषां सर्वेषामेव कल्पादावपि तद्विषयता भवति। अथ गुणकल्पनया कल्पादीनामपि च्छन्दस्त्वं विवक्ष्यते। ननु च च्छन्दोब्राह्मणानि च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् तेनैव प्रागेव कल्पादेस्तद्विषयता प्रतिपादिता, तत् किमर्थं पुनरनेन प्रकारेण प्रतिपाद्यते। तत्र वा कल्पादेस्तद्विषयता प्रतिपादनार्थश्चकारः कर्तव्यः, अयं वा प्रकार आश्रयितव्य इति विकल्पप्रदर्शनार्थम्।

इदानीन्तनेनेत्यादि। इदानीन्तनो यः काश्यपः स काश्यपगोत्रप्रभवत्वात् काश्यप इत्युच्यते, तथेदानीन्तनो यः कौशिकः स कौशिकगोत्रप्रभवत्वात् कौशिक इत्युच्यते; तत्र यदि ऋषिग्रहणं न क्रियेत ततो णिनिः स्यात्, ऋषिग्रहणे तु सति न भवति। कथं न भवतीति, यावता काश्यपकौशिकशब्दावपि ऋषिशब्दावेव, तथाहि प्रवराध्याये ये पठ्यन्ते त ऋषय इति, इमावपि तत्र पठ्येते एव ? नैष दोषः; विशेषणोपादानसामर्थ्याद्यदयमृषिशब्दः क्रियाशब्दो विज्ञायते—ऋषिर्दर्शनादिति। तेन यावनन्यपुरुषसाधारणेनौपदेशिकेन दर्शनेन तद्वन्तौ काश्यपकौशिकशब्दौ तत इदं प्रत्ययविधानम्; न चेदनीन्तनौ काश्यपकौशिकशब्दावेवंविधौ, ताभ्यां छ एव भवति ॥

---

1. 'कौशिकिनः' इत्यधिकं बहुषु पुस्तकेषु।

काशि० 3 : 45

कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनां च ये वाचकाः शब्दाः, तेभ्यो णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये। अणोऽपवादः। छं तु परत्वाद्बाधते। तत्र कलाप्यन्तेवासिनश्चत्वारः — हरिद्रुः, छगली, तुम्बुरुः, उलप इति। वैशम्पायनान्तेवासिनो नव — आलम्बि, पलङ्ग, कमल, ऋचाभ, अरुणि, ताण्ड्य, श्यामायन, कठ, कलापी इति।

प्रत्यक्षकारिणो गृह्यन्ते, न तु व्यवहिताः शिष्यशिष्याः। कुतः? कलापि-खाण्डायनग्रहणात्। तथा हि — वैशम्पायनान्तेवासी कलापी,

पदमञ्जरी

*कलापिवैशम्पायनान्तेवासिभ्यश्च* ॥ *कलाप्यन्तेवासिनामित्यादि*। सूत्रे त्वभेदोपचाराश्रयो निर्देशः। *कलाप्यन्तेवासिनश्चत्वार इत्यादि*। ननु च शिष्यशिष्येष्वपि शिष्यव्यवहारो लोके दृश्यते, तत्कथमियन्त एवेति नियमः? तत्राह— *प्रत्यक्षकारिण इति*। क्रियासामान्यवचनः करोतिः प्रकरणादिहाध्ययने वर्तते। *कलापिखाण्डायनग्रहणादिति*। एतदेव विवृणोति—*तथा हीति*। वैशम्पायनस्यान्तेवासी कलापी, यदि चान्तेवास्यन्तेवासिनोऽपि गृह्येरन्, कलापिग्रहणमनर्थकम्, 'वैशम्पायनान्तेवासिभ्यः' इत्येव सिद्धम्; कलाप्यन्तेवासिनामपि वैशम्पायनान्तेवासित्वात्। तथा वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाण्डायनः, तत्र व्यवहितानामपि ग्रहणे वैशम्पायनान्तेवासित्वादनेनैव सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फलः स्यात्। उदाहरणेषु छन्दोब्राह्मणानीति तद्विषयता, अध्येतृप्रत्ययस्य 'प्रोक्ताल्लुक्' इति लुक्।

न्यासः

कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ अभिधानेऽभिधेयोपचारात् कलापिवैशम्पायनान्तेवास्यभिधायिनः शब्दा इह कलापिवैशम्पायनान्तेवासिशब्देन निर्दिष्टाः। अत एवाह—कलाप्यन्तेवासिनामिति।

ननु च ये व्यवहिताः शिष्यशिष्याः, ते कलापिवैशम्पायनान्तेवासिन एव भवन्ति, तदयुक्तमुक्तम्—कलाप्यन्तेवासिनश्चत्वारः, वैशम्पायनान्तेवासिनो नव? इत्याह—प्रत्यक्षकारिण इत्यादि। करोतिरत्राध्ययने वर्तते। यैः साक्षादधीतं ते प्रत्यक्षकारिणः। इहान्तेवासिनो गृह्यन्ते चैतावन्त एवेति। किमत्रायुक्तम्? कुत इह साक्षात्कारिणो गृह्यन्ते, न हि व्यवहिता इत्यत्र हेतुं पृच्छति। कलापिखाण्डायनग्रहणादिति। हेतुनिर्देशः। तथा चेत्यादि। अस्यैव विवरणम्। वैशम्पायनस्य कलाप्य-

तदन्तेवासिनो वैशम्पायनान्तेवासिन एव भवन्ति किं कलापिग्रहणेन ? तथा वैशम्पायनान्तेवासी कठस्तदन्तेवासी खाडायनस्तस्य किं शौनकादिषु पाठेन ? तदेतत्प्रत्यक्षकारिग्रहणस्य लिङ्गम् ।

कलाप्यन्तेवासिभ्यस्तावत् – हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः । तौम्बुरविणः । औलपिनः । छगलिनो ढिनुकं वक्ष्यति । वैशम्पायनान्तेवासिभ्यः – आलम्बिनः । पालङ्गिनः । कामलिनः । आर्चाभिनः । आरुणिनः । ताण्डिनः । श्यामायनिनः । कठाल्लुकं वक्ष्यति, कलापिनश्चाणम् ॥

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू ।
उलपेन चतुर्थेन कालापकमिहोच्यते ॥
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ ।

पदमञ्जरी

*उलपेन चतुर्थेनेति* । सहयोगे तृतीया । कलापिन इदं कालापकम्, 'गोत्रचरणाद् वुञ्' । तत्र 'धर्माम्नाययोः' इति पठ्यते, तस्मादिहोपमानाच्छिष्यसमूहे प्रयोगः । *आलम्बिश्चरकः प्राचामिति* । आलम्बिर्नाम प्राचां देशे उत्पन्नश्चरकस्य शिष्यः । एवं *पलिङ्गकमलावुभौ* प्राचामेव त्रय एते प्राच्या उक्ताः । कठकला-

न्यासः

न्तेवासी, तस्य येऽन्तवासिनस्ते वैशम्पायनान्तेवासिनो भवन्त्येव । यदि तत्र ये व्यवहितास्तेऽप्यन्तेवासिनो गृह्येरन् कलापिग्रहणमनर्थकं स्यात्, 'वैशम्पायनान्तेवासिभ्यः' इत्येवं ब्रूयात् । तथा वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाण्डायनः; तत्र यदि व्यवहिता अपि गृह्येरन्, ततो वैशम्पायनान्तेवासित्वादनेनैव सूत्रेण सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फल एव स्यात् । तस्मादिहापि कलापिग्रहणं शौनकादिषु खाण्डायनशब्दस्य पाठ एतदुभयमपि साक्षात्कारिग्रहणस्य लिङ्गं ज्ञापकम् । हारिद्रविण इत्यादि । हरिद्रुप्रभृतिभ्यः प्रोक्तार्थे णिनिः, तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य 'प्रोक्ताल्लुक्' । अयञ्च योगश्छन्दोऽधिकारमनुवर्तते, तेन तद्विषयता भवति ।

उलपेन चतुर्थेनेति । सहार्थेनेति तृतीया । कालापकमिति । कलापिन इदं कालापकम्, 'गोत्रचरणाद् वुञ्' । ननु च 'धर्माम्नाययोर्वुञ्', न चेमे शिष्या धर्माम्नायाः, तत् कथं वुञ् ? एवं तर्ह्युपमानाद् भविष्यतीति । कालापकमिव धर्मवच्छिष्या उच्यते । यथा धर्मः कलापिसम्बन्धी, तथा शिष्या इत्युच्यत उपमानार्थः । आलम्बिर्नाम प्राचां

ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे ॥
श्यामायन उदीच्येषु उक्तं कठकलापिनोः ।

चरक इति वैशम्पायनस्याख्या, तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते ॥

पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ १०५ ॥

प्रत्ययार्थविशेषणमेतत् । तृतीयासमर्थात्प्रोक्ते णिनिः प्रत्ययो भवति यत्प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति । पुराणेन = चिरन्तनेन मुनिना प्रोक्ताः । ब्राह्मणेषु तावत् – भाल्लविनः । शाट्यायनिनः । ऐतरेयिणः । कल्पेषु – पैङ्गी कल्पः । आरुणपराजी ।

पदमञ्जरी

*पिनोरिति* । 'कठचरकाल्लुक्' इति कठाल्लुगुक्तः । कलापिशब्दादपि 'कलापिनोऽण्' त्यणुक्तः ॥

*पुराणप्रोक्तेषु ब्राह्मणकल्पेषु* ॥ *भाल्लविन इत्यादि* । भल्लु, शाट्यायन,

न्यासः

देशः, तत्रोत्पन्नश्चरकः । एवं पलङ्गकमलावुभौ । प्राचामेव त्रयः । एते प्राच्याः वैशम्पायनशिष्या ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे चरकाः । मध्यदेशे भवा मध्यमीयाः । गहादिषु 'मध्यमध्यमञ्चाण् चरणे' इति पठ्यते । तस्यायमर्थः–मध्यशब्दो मध्यमभावमापद्यते, छप्रत्ययश्च ततो भवति, चरणे तु प्रत्ययार्थेऽण् च भवतीति । तत्र यदा ऋचाभादीनां चरणत्वं न विवक्ष्यते, तदा छे कृते मध्यमीया इति भवति । चरणविवक्षायां त्वणि कृते माध्यमा इति भवति । उदक्षु भवा उदीच्याः, 'द्युप्रागपाग्' इत्यादिना यत् । उदीच्येषु मध्ये श्यामायनिश्चरकः । कठकलापिनावप्युदीच्येषु चरकौ, तयोरुक्तं कठकलापिनोः । किमुक्तम् ? एकस्य तावदुक्तम्—कठचरकाल्लुग्' इति, अपरस्याप्युक्तम् --'कलापिनोऽण्' इति । ननु च वैशम्पायनान्तेवासिनां कठेनैव चरक इत्येषाख्या, तत् कथं चरक इत्युच्येत ? इत्याह–चरक इति वैशम्पायनस्येत्यादि । यद्यपि तेषां चरक इत्याख्यानं न भवति, तद्गुरोस्तु वैशम्पायनस्य भवति, तत्सम्बन्धेन तच्छिष्या अपि तथोच्यन्ते ॥

पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ भाल्लविन इति । भाल्लव, शाट्यायन, ऐतरेय–इत्येतेभ्यः प्रोक्तार्थे णिनिः । तदन्तात् 'तदधीते' इत्युत्पन्नस्य 'प्रोक्ताल्लुक्' 'छन्दोब्राह्मणानि' इत्यादिना तद्विषयता । पैङ्गीति । आरुणपराजीति । पिङ्गारुणपराजशब्दाभ्यां णिनिः ।

पुराणप्रोक्तेष्विति किम् ? याज्ञवल्कानि ब्राह्मणानि । आश्मरथः कल्पः । याज्ञवल्कादयोऽचिरकाला इत्याख्यानेषु वार्त्ता, तया व्यवहरति सूत्रकारः, तद्विषयता कस्मान्न भवति ? प्रतिपदं ब्राह्मणेषु यः प्रत्ययः, तस्य तद्विषयता विधीयते णिनेः । अयं तु याज्ञवल्क्यशब्दस्य कण्वादिषु पाठादण् ।

न वायं योगश्छन्दोऽधिकारमनुवर्त्तयति, तेन कल्पेष्वपि न भवति ।

पदमञ्जरी

ऐतरेय, पिङ्ग, अरुण, पराजि— इत्येतेभ्यो णिनिः ।

यज्ञवल्काश्मरथशब्दौ कण्वादी, ताभ्यां यञन्ताभ्यामपि 'आपत्यस्य' इति यलोपः । ननु च याज्ञवल्कादीन्यपि पुराणप्रोक्तान्येव, शाट्यायनकादिभिर्ब्राह्मणान्तरैस्तुल्यकालत्वात् ? इत्यत आह–*याज्ञवल्क्यादयो हीति* । आख्यानानि = भारतादीनि । *तया व्यवहरतीति* । अर्थस्तु तथा वा भवत्वन्यथा वेति भावः । *तद्विषयता कस्मान्न भवतीति* । याज्ञवल्कादिविषयः प्रश्नः, 'छन्दोब्राह्मणानि च' इत्यत्र पुराणप्रोक्तत्वविशेषस्यानाश्रयणात्प्राप्नोतीति भावः । *प्रतिपदमिति* । एतल्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । एतदर्थमेव च तत्र ब्राह्मणग्रहम् ; छन्दस्त्वादेव सिद्धेः ।

कल्पेषु तर्हि कस्मान्न भवति, यथा—काश्यपिनः, कौशिकिन इत्यत्र ? इत्यत आह—*न वायमिति* । युक्तं तत्र छन्दोऽधिकारे तस्य योगस्यानुवृत्तेः, अयं तु न

न्यासः

याज्ञवल्कानीति । आश्मरथ इति । याज्ञवल्क्याश्वरथ्यशब्दाभ्यां गर्गादियञन्ताभ्याम् 'कण्वादिभ्यो गोत्रे' इत्यण् , 'आपत्यस्य' इत्यादिना यलोपः । ननु याज्ञवल्कादीन्यपि पुराणप्रोक्तान्येव ब्राह्मणानि, ब्राह्मणान्तरैः पुराणप्रोक्तैस्तुल्यत्वात् ? इत्याह— याज्ञवल्क्य इत्यादि । आख्यानेषु ह्येषा वार्त्ता—याज्ञवल्क्यादयोऽपरकालाः प्रवक्तारो अन्येभ्यः प्रवक्तृभ्यः । तथा च वस्तुत्वमनपेक्ष्य व्यवहरति सूत्रकार इत्यदोषः । तद्विषयता कस्मान्न भवति । 'छन्दोब्राह्मणानि' इत्यादिनेति भावः । प्रतिपदमित्यादि । लक्षणप्रतिपदोक्तपरिभाषया हि प्रतिपदं विशेषणम् । ब्राह्मणमुच्चार्य ब्राह्मणेषु यः प्रत्ययो विहितस्तस्य तद्विषयता विधीयते । तस्मात् तद्विषयतास्य न भवति । कल्पेषु तर्हि कस्मान्न भवति, यथा—काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिन इत्यत्र ? इत्याह—न चायमित्यादि । छन्दोऽधिकारे ये योगास्तद्विहितस्य प्रत्ययस्य तद्विषयता भवति, न चायं योगश्छन्दोऽधिकारमनुवर्तते; तेनैतद्विहितस्य प्रत्ययस्याध्येतृवेदितृविषयता कल्पेषु न भवति—पैङ्गी कल्पः, आरुणपराजी कल्प इति ।

पुराण इति निपातनात्तुडभावः। न वात्यन्तबाधैव, तेन पुरातन-मित्यपि भवति ॥

शौनकादिभ्यश्छन्दसि ॥ १०६ ॥

'शौनक' इत्येवमादिभ्यो णिनिः प्रत्ययो भवति, 'तेन प्रोक्तम्' इत्येतस्मिन्विषये छन्दस्यभिधेये। छाणोरपवादः। शौनकेन प्रोक्तमधीयते शौनकिनः। वाजसनेयिनः।

छन्दसीति किम्? शौनकीया शिक्षा। 'कठशाठ' इत्यत्र पठ्यते सत्सङ्घातार्थम्, केवलाद्धि लुकं वक्ष्यति। कठशाठाभ्यां प्रोक्तमधीयते काठशाठिनः।

शौनक। वाजसनेय। साङ्गरव। शार्ङ्गरव। साम्पेय। शाखेय। खाण्डायन। स्कन्ध। स्कन्द। देवदत्तशठ। रज्जुकण्ठ। रज्जुभार। कठशाठ। कशाय। तलवकार। पुरुषांस। अश्वपेय[1]। शौनकादिः ॥

पदमञ्जरी

तथेति कल्पेष्वपि तद्विषयता न भवतीत्यर्थः। न चात्यन्तबाधैवेति। 'सिद्ध-शुष्कपक्वबन्धैश्च' इति निपातनादेव सिद्धे, 'शुषः कः' 'पचो वः' इति लिङ्गम्—'बाधकान्यपि निपातनानि भवन्ति' इति। यथा तु सर्वादिसूत्रे भाष्यम्, तथा 'अन्यपराण्यपि निपातनानि बाधकान्येव' इति स्थितम् ॥

न्यासः

पुराण इति कोऽयं शब्दः, यावता 'सायंचिरम्' इत्यादिना ट्युट्युलोः सन्नियोगेन तुटि कृते पुरातनमिति भवितव्यम्? इत्यत आह—पुराण इति निपातनात् तुडभावः। यद्येवम्, न भवति पुरातनम्? इत्याह—न चेत्यादि। ननु 'बाधकान्यपि निपातनानि' इत्यतो भवितव्यमेव बाधकेनेति? अबाधकान्यपि। अबाधकान्यपि भवन्ति, एतच्च 'शदेरगतौ तः' इत्यत्र प्रतिपादितम् ॥

शौनकादिभ्यश्छन्दसि ॥ छाणोरपवाद इति। ये वृद्धास्तेभ्यश्छस्यापवादः, शेषेभ्यस्त्वणः। शौनकिनः। वाजसनेयिन इति। शौनकेन प्रोक्तं वाजसनेयेन प्रोक्त-मिति णिनिः। तदन्तात् 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' पूर्ववत् तद्विषयता।

केवलाद्धीत्यादि। तत् संहतार्थमित्यत्रायं हेतुः। यस्मात् केवलात् कठाल्लुकं वक्ष्यति, तस्मात् कठशाठ इति यदत्र पठ्यते तत्संहतार्थम्।

---

१. 'स्कम्भ'—इत्ययं शब्दः पुस्तकान्तरेऽत्र गणेऽधिकः।

## कठचरकाल्लुक् ॥ १०७ ॥

कठचरकशब्दाभ्यां परस्य प्रोक्तप्रत्ययस्य लुग्भवति । कठशब्दाद्वैशम्पायनान्तेवासिभ्य इति णिनेश्चरशब्दादप्यणः । कठेन प्रोक्तमधीयते कठाः । चरकाः । छन्दसीत्येव – काठाः । चारकाः[1] ॥

## कलापिनोऽण् ॥ १०८ ॥

कलापिशब्दादण् प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये । वैशम्पायनान्तेवासित्वाण्णिनेरपवादः । कलापिना प्रोक्तमधीयते कालापाः । 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते, ॐ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमि[2]तैतलिजाजलिजाङ्गलि[3]लाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ॐ इति टिलोपः ।

अथाण्ग्रहणं किम्, यथाप्राप्तमित्येव सिद्धम् ? अधिकविधानार्थम् । तेन माथुरी वृत्तिः, सौलभानि ब्राह्मणानीत्येवमादि सिद्धम् ॥

पदमञ्जरी

*कलापिनोऽण्* ॥ *यथाविहितमेवोच्येतेति* । तत्र वचनसामर्थ्याद्यो विहितो न च प्राप्नोति स एवाण् भविष्यतीति भावः । *एवमादीनीति* । आदिशब्देन मौदाः, पैप्पलादाः, शाकला इत्येतेषां ग्रहणम् । अत्र मुद-पिप्पलाद-शाकल्य— इत्येतेभ्यः 'पुराणप्रोक्तेषु' इति णिनेरपवादोऽण्भवति ॥

न्यासः

कठचरकाल्लुक् ॥ कठाश्चरका इति । प्रोक्तप्रत्ययस्य लुकि कृते यो ह्यध्येतर्यण् भवति तस्यापि प्रोक्ताल्लुक् । पूर्ववत् तद्विषयता ॥

कलापिनोऽण् ॥ कालापा इति । पूर्ववत् प्रोक्तप्रत्ययान्तादध्येतर्युत्पन्नस्याणो लुक्, तद्विषयता च ।

अथेत्यादि । ननु चासत्यण्ग्रहणे यथा प्राप्ते विधीयमाने णिनेरेवापवादः स्यात् ? नैतदस्ति; एवं हि वचनमनर्थकं स्यात् । तस्माद् यो विहितो न च प्राप्नोत्यनेन बाधितत्वात् स एव भविष्यति, स चाणेव । एवमादीति । आदिशब्देन मौदाः, पैप्पलादाः,

---

१. 'श्लोकाः' इत्यधिकं कुत्रचित् ।
२. 'कौथुमी'–इति पा० ।
३. 'जाङ्गली'–इति बहुषु पुस्तकेषु न दृश्यते ।

## छगलिनो ढिनुक् ॥ १०९ ॥

छगलिन्शब्दाद् ढिनुक् प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन् विषये । कलाप्यन्तेवासित्वाण्णिनेरपवादः । छगलिना प्रोक्तमधीयते छागलेयिनः ॥

## पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ ११० ॥

णिनिरिहानुवर्त्तते, न ढिनुक् । पराशर्यशिलालिभ्यां णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये । 'भिक्षुनटसूत्रयोः' इति यथासंख्यं प्रत्ययार्थविशेषणम्, सूत्रशब्दः प्रत्येकमभिसम्बध्यते, तद्विषयता चात्रेष्यते, तदर्थं छन्दोग्रहणमनुवर्त्यम्, गुणकल्पनया च भिक्षुनटसूत्रयोश्छन्दस्त्वम् । पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः ।

### पदमञ्जरी

*पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः* ॥ *तदर्थं छन्दोग्रहणमनुवर्त्यमिति* । ननु तदनुवृत्तावपि कथं भिक्षुनटसूत्रयोश्छन्दस्त्वम्? तत्राह–*गुणकल्पनया चेति* । उपचारस्य निमित्तभूतो धर्मो गुणो गुरुशुश्रूषणादिः, तन्निमित्ता कल्पना गुणकल्पना । *पाराशरिण इति* । पूर्ववद्यलोपः । *शैलालिन इति* । शिलामलते इति शिलाली, 'अलं भूषणपर्याप्तिवारणेषु' इत्येतस्मात् 'सुप्यजातौ' इति णिनिः, ततोऽस्मिन् णिनौ टिलोपः ।

### न्यासः

शाकलाः, जाजलाः–इत्येतेषां ग्रहणम् । असति त्वण्ग्रहणे सर्वमेव न सिध्येत्; 'वृद्धाच्छः' इति च्छेनाण औत्सर्गिकस्य बाधितत्वात् ।

छगलिनो ढिनुक् ॥ छागलेयिन इति । इहापि पूर्ववदेवाध्येतर्युत्पन्नस्याणो लुक् च, तद्विषयता च । एवमुत्तरयोर्योगयोर्वेदितव्यः ।

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ यथासंख्यमित्यादि । पाराशर्याद् भिक्षुसूत्रे प्रत्ययः, शिलालिनो नटसूत्रे । तद्विषयता चात्रेष्यत इति । कथं पुनरिष्यमाणापि सा लभ्यते? इत्याह—तदर्थमित्यादि । ननु चानुवर्तमानच्छन्दोग्रहणेनैव तद्विषयता प्राप्नोति? न; भिक्षुनटसूत्रयोरच्छन्दस्त्वादित्याह—गुणकल्पनया चेत्यादि । छन्दसस्तूपचारनिमित्तं यो धर्मः स इह गुणोऽभिप्रेतः, तद्धेतुका कल्पना । यथा छन्दो यदर्थमधीयते तथा सूत्रमपि तद्धेतुं सम्पादयति । भिक्षुनटयोरित्येवमादिकया गुणकल्पनया

भिक्षुनटसूत्रयोरिति किम् ? पाराशरम् । शैलालम् ।

## कर्मन्दकृशाश्वादिनिः ॥ १११ ॥

'भिक्षुनटसूत्रयोः' इत्येव । कर्मन्द-कृशाश्वशब्दाभ्यामिनिः प्रत्ययो भवति । 'तेन प्रोक्तम्' इत्येतस्मिन्विषये यथासंख्यं भिक्षुनटसूत्रयोरभिधेययोः । अणोऽपवादः । अत्रापि तद्विषयतार्थं छन्दोग्रहणमनुवर्त्यम् । कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ।

भिक्षुनटसूत्रयोरित्येव – कार्मन्दम् । कार्शाश्वम् ॥

## तेनैकदिक् ॥ ११२ ॥

तेनेति तृतीयासमर्थात् 'एकदिक्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । एकदिक्=तुल्यदिक्, समानदिगित्यर्थः । सुदाम्ना एकदिक् सौदामनी विद्युत् । हैमवती । त्रैककुदी । पैलुमूली ।

'तेन' इति प्रकृते पुनः समर्थविभक्तिग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम् । पूर्वत्र हि छन्दोऽधिकारात् तद्विषयता साध्यते ॥

पदमञ्जरी

*पाराशरमिति* । कण्वाद्यण् । *शैलालमिति* । औत्सर्गिकेऽणि 'नान्तस्य टिलोपे सब्रह्मचारि' इत्यादिना टिलोपः ॥

*तेनैकदिक्* ॥ *सौदामनीति* । 'अन्' इति प्रकृतिभावः । सुदामादयः = पर्वतविशेषाः ॥

न्यासः

भिक्षुनटसूत्रयोश्छन्दस्त्वमौपचारिकम् । पाराशरिण इति । पाराशर्यशब्दो गर्गादिषु यञन्तः, 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः । शैलालिन इति । 'नस्तद्धिते' इति टिलोपः ।

पाराशरमिति 'कण्वादिभ्यो गोत्रे' इत्यण् । शैलालमिति । औत्सर्गिकोऽण्, 'नान्तस्य टिलोपे सब्रह्मचारिपीठ' इत्यादिना टिलोपः ॥

कर्मन्दकृशाश्वादिनिः ॥ तेनैकदिक् ॥ तेनेति । 'तुल्यार्थैरतुलोपमाभ्याम्' इति तृतीया । सौदामनीति ? 'अन्' इति प्रकृतिभावात् टिलोपाद्यभावः ।

ननु च तेनेति प्रकृतमेव, तत् किमर्थं पुनरिह तृतीया समर्थविभक्तिरुपादीयते ? इत्याह—तेनेति प्रकृत इत्यादि । पूर्वत्र हि तेनेति छन्दोऽधिकारसम्बद्धम्, अतस्त-

## तसिश्च ॥ ११३ ॥

तसिश्च प्रत्ययो भवति 'तेनैकदिक्' इत्येतस्मिन्विषये। पूर्वेण घादिषु अणादिषु च प्राप्तेष्वयमपरः प्रत्ययो विधीयते। स्वरादिपाठादव्ययत्वम्। सुदामतः। हिमवत्तः। पिलुमूलतः ॥

## उरसो यच्च ॥ ११४ ॥

'उरः'-शब्दाद्यत् प्रत्ययो भवति, चकारात्तसिश्च, 'तेनैकदिगिक्' इत्येतस्मिन्विषये। अणोऽपवादः। उरसा एकदिग् उरस्यः। उरस्तः ॥

## उपज्ञाते ॥ ११५ ॥

'तेन' इत्येव। तृतीयासमर्थात् 'उपज्ञाते' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। विनोपदेशेन ज्ञातम्=उपज्ञातम्, स्वयमभिसम्बद्धमित्यर्थः। पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम्। काशकृत्स्नम्। गुरुलाघवम्। आपिशलम्। दुष्करणम् ॥

### पदमञ्जरी

*तसिश्च* ॥ *स्वरादिपाठादव्ययत्वमिति*। तस्मिन्नेवार्थे विधीयमानस्याप्यस्य लिङ्गसंख्यानुपादानमपि स्वाभाविकं वेदितव्यम् ॥

*उपज्ञाते* ॥ *विनोपदेशेन ज्ञातमुपज्ञातमिति*। उपपूर्वो जानातिस्तत्र प्रसिद्ध इति भावः। *अकालकमिति*। आन्याय्यादुत्थानादित्यादिकालपरिभाषारहितमित्यर्थः। गुरुलाघवं नामार्थशास्त्रम्, यत्रोपायानां गौरवं लाघवं चिन्त्यते। 'दुषू' इत्ययं सङ्केतशब्दो यत्र क्रियते, यथा पाणिनीये 'वृत्' इति, तद् दुष्करणं व्याकरणम्; कामशास्त्रमित्यन्ये ॥

### न्यासः

दनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्माच्छन्दोऽधिकारनिवृत्तये पुनरिह तृतीया समर्थविभक्तिरुपादीयते। किमर्थं पुनश्छन्दोऽधिकारः पूर्वत्र क्रियते ? इत्याह—पूर्वत्र इत्यादि। पूर्वेषु योगेषु च्छन्दोऽधिकारात् तद्विषयता साध्यते। तस्मात् तत्र च्छन्दोऽधिकारः कर्तव्यः। तस्मिंश्च क्रियमाणे तन्निवृत्त्यर्थं इह च यत्न आस्थेयः; अन्यथेह च्छन्दस्येव प्रत्ययः स्यात्।

तसिश्च ॥ उरसो यच्च ॥ उपज्ञाते ॥ अकालकमिति। कालपरिभाषारहितमित्यर्थः।

## कृते ग्रन्थे ॥ ११६ ॥

'तेन' इत्येव । तृतीयासमर्थात् 'कृते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तत्कृतं ग्रन्थश्चेत्स भवति । वररुचिना कृता वाररुचाः श्लोकाः । हैकुपादो ग्रन्थः । भैकुराटो ग्रन्थः । जालूकः ।

ग्रन्थ इति किम् ? तक्षकृतः प्रासादः ।

उत्पादितम् = कृतम्, विद्यमानमेव ज्ञातम् = उपज्ञातम् — इत्ययमनयोर्विशेषः ॥

## संज्ञायाम् ॥ ११७ ॥

तृतीयासमर्थात् 'कृते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत्संज्ञा ज्ञायते । मक्षिकाभिः कृतं माक्षिकम् । कामुंकम्[1] । सारघम् । पौत्तिकम् । मधुनः संज्ञा एताः ॥

## कुलालादिभ्यो वुञ् ॥ ११८ ॥

'तेन' 'कृते' 'संज्ञायाम्' इति चैतत्सर्वमनुवर्तते । कुलालादिभ्यो वुञ् प्रत्ययो भवति 'तेन कृतम्' इत्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम् । कौलालकम् । वारुडकम् ।

कुलाल । वरुड । चण्डाल । निषाद । कर्मार । सेना । सिरिध्र । सेन्द्रिय । देवराज । परिषत् । वधू । रुरु । ध्रुव । रुद्र । अनडुह् । ब्रह्मन् । कुम्भकार । श्वपाक । कुलालादिः ॥

### पदमञ्जरी

*कृते ग्रन्थे* ॥ 'तित्तिरिवरतन्तु' इत्यादीनि सूत्राण्यत्र प्रकरणे न पठितानि । तित्तिर्यादयो हि छन्दसां प्रवक्तारो न कर्तारः; नित्यानि हि छन्दांसि न केनचित्क्रियन्ते ॥

*संज्ञायाम्* ॥ अग्रन्थार्थमिदम् ॥

### न्यासः

कृते ग्रन्थे ॥ कः पुनः कृतोपज्ञातयोर्विशेषः, येनोपज्ञायत इति प्रकृते सति कृतग्रहणं क्रियते ? इत्याह—उत्पादितमित्यादि ।

---

१. 'कामुंतम्'—इति पाठा० ।

## तसिश्च ॥ ११३ ॥

तसिश्च प्रत्ययो भवति 'तेनैकदिक्' इत्येतस्मिन्विषये। पूर्वेण घादिषु अणादिषु च प्राप्तेष्वयमपरः प्रत्ययो विधीयते। स्वरादिपाठादव्ययत्वम्। सुदामतः। हिमवत्तः। पिलुमूलतः ॥

## उरसो यच्च ॥ ११४ ॥

'उरः'-शब्दाद्यत् प्रत्ययो भवति, चकारात्तसिश्च, 'तेनैकदिगिक्' इत्येतस्मिन्विषये। अणोऽपवादः। उरसा एकदिग् उरस्यः। उरस्तः ॥

## उपज्ञाते ॥ ११५ ॥

'तेन' इत्येव। तृतीयासमर्थात् 'उपज्ञाते' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। विनोपदेशेन ज्ञातम्=उपज्ञातम्, स्वयमभिसम्बद्धमित्यर्थः। पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम्। काशकृत्स्नम्। गुरुलाघवम्। आपिशलम्। दुष्करणम् ॥

### पदमञ्जरी

*तसिश्च* ॥ *स्वरादिपाठादव्ययत्वमिति*। तस्मिन्नेवार्थे विधीयमानस्याप्यस्य लिङ्गसंख्यानुपादानमपि स्वाभाविकं वेदितव्यम् ॥

*उपज्ञाते* ॥ *विनोपदेशेन ज्ञातमुपज्ञातमिति*। उपपूर्वो जानातिस्तत्र प्रसिद्ध इति भावः। *अकालकमिति*। आन्याय्यादुत्थानादित्यादिकालपरिभाषारहितमित्यर्थः। गुरुलाघवं नामार्थशास्त्रम्, यत्रोपायानां गौरवं लाघवं चिन्त्यते। 'दुष्' इत्ययं सङ्केतशब्दो यत्र क्रियते, यथा पाणिनीये 'वृत्' इति, तद् दुष्करणं व्याकरणम्; कामशास्त्रमित्यन्ये ॥

### न्यासः

दनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्माच्छन्दोऽधिकारनिवृत्तये पुनरिह तृतीया समर्थविभक्तिरुपादीयते। किमर्थं पुनश्छन्दोऽधिकारः पूर्वत्र क्रियते? इत्याह—पूर्वत्र इत्यादि। पूर्वेषु योगेषु च्छन्दोऽधिकारात् तद्विषयता साध्यते। तस्मात् तत्र च्छन्दोऽधिकारः कर्तव्यः। तस्मिंश्च क्रियमाणे तन्निवृत्त्यर्थं इह च यत्न आस्थेयः; अन्यथेह च्छन्दस्येव प्रत्ययः स्यात्।

तसिश्च ॥ उरसो यच्च ॥ उपज्ञाते ॥ अकालकमिति। कालपरिभाषारहितमित्यर्थः।

## कृते ग्रन्थे ॥ ११६ ॥

'तेन' इत्येव । तृतीयासमर्थात् 'कृते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तत्कृतं ग्रन्थश्चेत्स भवति । वररुचिना कृता वाररुचाः श्लोकाः । हैकुपादो ग्रन्थः । भैकुराटो ग्रन्थः । जालूकः ।

ग्रन्थ इति किम् ? तक्षकृतः प्रासादः ।

उत्पादितम् = कृतम्, विद्यमानमेव ज्ञातम् = उपज्ञातम् - इत्ययमनयोर्विशेषः ॥

## संज्ञायाम् ॥ ११७ ॥

तृतीयासमर्थात् 'कृते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत्संज्ञा ज्ञायते । मक्षिकाभिः कृतं माक्षिकम् । कार्मुकम्[1] । सारघम् । पौत्तिकम् । मधुनः संज्ञा एताः ॥

## कुलालादिभ्यो वुञ् ॥ ११८ ॥

'तेन' 'कृते' 'संज्ञायाम्' इति चैतत्सर्वमनुवर्तते । कुलालादिभ्यो वुञ् प्रत्ययो भवति 'तेन कृतम्' इत्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम् । कौलालकम् । वारुडकम् ।

कुलाल । वरुड । चण्डाल । निषाद । कर्मार । सेना । सिरिध्र । सेन्द्रिय । देवराज । परिषत् । वधू । रुरु । ध्रुव । रुद्र । अनडुह् । ब्रह्मन् । कुम्भकार । श्वपाक । कुलालादिः ॥

पदमञ्जरी

*कृते ग्रन्थे* ॥ 'तित्तिरिवरतन्तु' इत्यादीनि सूत्राण्यत्र प्रकरणे न पठितानि । तित्तिर्यादयो हि छन्दसां प्रवक्तारो न कर्त्तारः; नित्यानि हि छन्दांसि न केनचित्क्रियन्ते ॥

*संज्ञायाम्* ॥ अग्रन्थार्थमिदम् ॥

न्यासः

*कृते ग्रन्थे* ॥ कः पुनः कृतोपज्ञातयोर्विशेषः, येनोपज्ञायत इति प्रकृते सति कृतग्रहणं क्रियते ? इत्याह—उत्पादितमित्यादि ।

---

१. 'कामुंतम्'—इति पाठा० ।

## क्षुद्राभ्रमरवटरपादपादञ् ॥ ११९ ॥

'तेन' 'कृते' 'संज्ञायाम्' इति सर्वमनुवर्तते। क्षुद्रादिभ्योऽञ् प्रत्ययो भवति 'तेन कृते' इत्येतस्मिन्विषये संज्ञायां गम्यमानायाम्। अणोऽपवादः। स्वरे विशेषः। क्षुद्रादिभिः कृतं क्षौद्रम्। भ्रामरम्। वाटरम्। पादपम्॥

## तस्येदम् ॥ १२० ॥

तस्येति षष्ठीसमर्थात् 'इदम्' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। अणादयः पञ्च महोत्सर्गाः। घादयश्च प्रत्यया यथाविहितं विधीयन्ते। प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं तत्सम्बन्धिमात्रं च विवक्षितम्, यदपरं लिङ्गसंख्याप्रत्यक्षपरोक्षादिकं तत्सर्वमविवक्षितम्। उपगोरिदमौपगवम्। कापटवम्। राष्ट्रियम्। अवारपारीणम्।

### पदमञ्जरी

क्षुद्राभ्रमरवटरपादपादञ् ॥ *अणोऽपवाद इति*। बाहुल्यादेवमुक्तम्, पादपशब्दाद्धि छः प्राप्नोति। अन्ये तु पादपशब्दस्य स्थाने पदपशब्दं पठन्ति॥

तस्येदम् ॥ 'तस्यापत्यम्' इत्यत्रोक्तमेवार्थं स्मारयति—*प्रकृतिप्रत्ययार्थयोरित्यादि*। प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम्, प्रत्ययार्थेऽपि तत्सम्बन्धिमात्रं यद्योगात्षष्ठी, तस्मिन्नभिधेये प्रत्ययः। मात्रशब्दव्यवच्छेद्यं दर्शयति—*यदपरमिति*। इदं शब्दः प्रत्यक्षवचनः, तच्छब्दः परोक्षवचनः। आदिशब्देन सामान्याभिधायित्वं गृह्यते। *तत्सर्वमविवक्षितमिति*। अत्र कारणम् 'तस्यापत्यम्' इत्यत्रैवोक्तम्।

### न्यासः

संज्ञायाम् ॥ कुलालादिभ्यो वुञ् ॥ क्षुद्राभ्रमरवटरपादपादञ् ॥ स्वरे विशेष इति। अणि हि प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्। अञि तु सति ञित्स्वरेणाद्युदात्तत्वं भवति।

तस्येदम् ॥ तस्येति। यदि पुंल्लिङ्गेनायं निर्देशः, पुंस्येव स्यात्, न द्विवचनबहुवचनान्तात्; प्रत्यक्षवाचिनश्च न स्यात्; नापि विशेषवाचिनः; तच्छब्दस्य परोक्षवस्तुमात्रवाचित्वात्। प्रत्ययार्थोऽपीदमित्येकवचनेन नपुंसकलिङ्गेन निर्दिष्ट इत्येकस्मिन्नर्थे स्यात्—नपुंसक एव, नान्यत्र; परोक्षे न स्यात्; इदमः प्रत्यक्षवाचित्वात्? इत्येतत् सर्वमाशङ्क्याह—प्रकृतिप्रत्ययार्थयोरित्यादि। प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम्। प्रत्ययार्थेऽपि षष्ठ्यर्थसम्बन्धिमात्रम्, येन विना षष्ठ्यर्थो न सम्पद्यते। यदपरमित्यादिना मात्र-

अनन्तरादिष्वनभिधानान्न भवति — देवदत्तस्यानन्तरमिति ।

* संवहेस्तुरणिट् च * । संवोढुः स्वं सांवहित्रम् । सिद्ध एवात्राण्, इडर्थमुपसंख्यानम् ।

* अग्नीधः शरणे रण् भं च * । आग्नीध्रम् ।

* समिधामाधाने षेण्यण् * । सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ॥

पदमञ्जरी

*वहेस्तुरिति* । तृन्तृचोः सामान्येन ग्रहणम् । *सांवहित्रमिति* । ढत्वादीनामसिद्धत्वात्पूर्वमिहेटि कृते निमित्ताभावात्तेषामभावः ।

*अग्नीध इति* । अग्निमिन्ध इति क्विप् अग्नीत् 'ऋत्विग्विशेषः । 'त्वमग्निद्दतीयते' इत्यत्र तुछान्दसं ह्रस्वत्वम् । *शरणम्* = गृहम्, स्थानम्, यत्राग्नीध्रीयं धिष्ण्यं तदाग्नीध्रम्, तात्स्थ्यात्तु मञ्चाः क्रोशन्तीतिवदृत्विजि प्रयोगः *कल्पसूत्रकाराणाम्*— 'प्रत्याश्रावयेदाग्नीधः आग्नीध्रं पोतारं ब्रह्मणः' इति । छप्रत्ययं च ततः शरणे कुर्वन्ति, 'आग्नीध्रीयसकाशमुत्तरेणाग्नीध्रीयं धिष्ण्यं परीत्य' इति शरणवचनाच्छः ।

*समिधामाधान इति* । यया समिध्यतेऽग्निः सा समित्, सम्पदादित्वात्करणे

न्यासः

शब्देन यद् व्यवच्छिन्नं तद्दर्शयति । आदिशब्देन सामान्याभिधायित्वं गृह्यते । अस्य तु सर्वत्र विवक्षाकारणम् 'तस्यापत्यम्' इत्यत्रैवोक्तम् । अथेह कस्मान्न भवति—देवदत्तस्यानन्तरम्, देवदत्तस्य समीपमित्यादि ? अनन्तरादिष्वित्यादि । अनभिधानादिति । प्रत्ययान्तेनानन्तरादीनामप्रत्यायनमित्यर्थः ।

संवहेस्तुरिति । वहेस्तृन्तादित्यर्थः । सांवहित्रमिति । सम्पूर्वाद्वहेस्तुरिट् च, यणादेशः । सिद्ध एवत्राणिति । 'प्राग्दीव्यतोऽण्' इत्यनेन । यद्येवं किमर्थमुपसंख्यानम् ? इत्याह—इडर्थमित्यादि । उपसंख्याने ह्यसतीडागमो न स्यात्, 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधात् ।

अग्नीध इत्यादि । अग्नीध इत्येतस्माच्छरणे गृहे वाच्ये रण् वक्तव्यः, भसंज्ञा च वक्तव्या, भसंज्ञायाञ्च सत्यां पदसंज्ञाभावाज्जश्त्वं न भवति ।

समिधामित्यादि । आधीयन्ते येन मन्त्रविशेषेण,समिधस्तस्मिन् समिधामाधानविशेषे समिच्छब्दात् षेण्यण् प्रत्ययो वक्तव्यः = व्याख्येयः । व्याख्यानं तु—'हविर्निवाससामिधेनीषु' इत्येतन्निर्देशमाश्रित्य वक्तव्यम् । सामिधेनीति । 'षिद्गौरादिभ्यश्च' इति ङीष्, 'हलस्तद्धितस्य' इति यलोपः ॥

## क्षुद्राभ्रमरवटरपादपादञ् ॥ ११९ ॥

'तेन' 'कृते' 'संज्ञायाम्' इति सर्वमनुवर्तते। क्षुद्रादिभ्योऽञ् प्रत्ययो भवति 'तेन कृते' इत्येतस्मिन्विषये संज्ञायां गम्यमानायाम्। अणोऽपवादः। स्वरे विशेषः। क्षुद्रादिभिः कृतं क्षौद्रम्। भ्रामरम्। वाटरम्। पादपम् ॥

## तस्येदम् ॥ १२० ॥

तस्येति षष्ठीसमर्थात् 'इदम्' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। अणादयः पञ्च महोत्सर्गाः। घादयश्च प्रत्यया यथाविहितं विधीयन्ते। प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं तत्सम्बन्धिमात्रं च विवक्षितम्, यदपरं लिङ्गसंख्याप्रत्यक्षपरोक्षादिकं तत्सर्वमविवक्षितम्। उपगोरिदमौपगवम्। कापटवम्। राष्ट्रियम्। अवारपारीणम्।

पदमञ्जरी

*क्षुद्राभ्रमरवटरपादपादञ्* ॥ *अणोऽपवाद इति*। बाहुल्यादेवमुक्तम्, पादपशब्दाद्धि छः प्राप्नोति। अन्ये तु पादपशब्दस्य स्थाने पदपशब्दं पठन्ति ॥

तस्येदम् ॥ 'तस्या पत्यम्' इत्यत्रोक्तमेवार्थं स्मारयति—*प्रकृतिप्रत्ययार्थयोरित्यादि*। प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम्, प्रत्ययार्थेऽपि तत्सम्बन्धिमात्रं यद्योगात्षष्ठी, तस्मिन्नभिधेये प्रत्ययः। मात्रशब्दव्यवच्छेद्यं दर्शयति—*यदपरमिति*। इदं शब्दः प्रत्यक्षवचनः, तच्छब्दः परोक्षवचनः। आदिशब्देन सामान्याभिधायित्वं गृह्यते। *तत्सर्वमविवक्षितमिति*। अत्र कारणम् 'तस्यापत्यम्' इत्यत्रैवोक्तम्।

न्यासः

संज्ञायाम् ॥ कुलालादिभ्यो वुञ् ॥ क्षुद्राभ्रमरवटरपादपादञ् ॥ स्वरे विशेष इति। अणि हि प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्। अञि तु सति ञित्स्वरेणाद्युदात्तत्वं भवति।

तस्येदम् ॥ तस्येति। यदि पुंल्लिङ्गेनायं निर्देशः, पुंस्येव स्यात्, न द्विवचनबहुवचनान्तात्; प्रत्यक्षवाचिनश्च न स्यात्; नापि विशेषवाचिनः; तच्छब्दस्य परोक्षवस्तुमात्रवाचित्वात्। प्रत्ययार्थोऽपीदमित्येकवचनेन नपुंसकलिङ्गेन निर्दिष्ट इत्येकस्मिन्नर्थे स्यात्—नपुंसक एव, नान्यत्र; परोक्षे न स्यात्; इदमः प्रत्यक्षवाचित्वात् ? इत्येतत् सर्वमाशङ्क्याह—प्रकृतिप्रत्ययार्थयोरित्यादि। प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम्। प्रत्ययार्थेऽपि षष्ठ्यर्थसम्बन्धिमात्रम्, येन विना षष्ठ्यर्थो न सम्पद्यते। यदपरमित्यादिना मात्र-

अनन्तरादिष्वनभिधानान्न भवति – देवदत्तस्यानन्तरमिति ।

* संवहेस्तुरणिट् च * । संवोढुः स्वं सांवहित्रम् । सिद्ध एवात्राण्, इडर्थमुपसंख्यानम् ।

* अग्नीधः शरणे रण् भं च * । आग्नीध्रम् ।

* समिधामाधाने षेण्यण् * । सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ॥

पदमञ्जरी

*वहेस्तुरिति* । तृन्तृचोः सामान्येन ग्रहणम् । *सांवहित्रमिति* । ढ्रत्वादीनामसिद्धत्वात्पूर्वमिहेटि कृते निमित्ताभावात्तेषामभावः ।

*अग्नीध इति* । अग्निमिन्ध इति क्विप् अग्नीत् 'ऋत्विग्विशेषः । 'त्वमग्निद्दतीयते' इत्यत्र तुछान्दसं ह्रस्वत्वम् । *शरणम्* = गृहम्, स्थानम्, यत्राग्नीध्रीयं धिष्ण्यं तदाग्नीध्रम्, तात्स्थ्यात्तु मञ्चाः क्रोशन्तीतिवदृत्विजि प्रयोगः *कल्पसूत्रकाराणाम्*— 'प्रत्याश्रावयेदाग्नीधः आग्नीध्रं पोतारं ब्रह्मणः' इति । छप्रत्ययं च ततः शरणे कुर्वन्ति, 'आग्नीध्रीयसकाशमुत्तरेणाग्नीध्रीयं धिष्ण्यं परीत्य' इति शरणवचनाच्छः ।

*समिधामाधान इति* । यया समिध्यतेऽग्निः सा समित्, सम्पदादित्वात्करणे

न्यासः

शब्देन यद् व्यवच्छिन्नं तद्दर्शयति । आदिशब्देन सामान्याभिधायित्वं गृह्यते । अस्य तु सर्वत्र विवक्षाकारणम् 'तस्यापत्यम्' इत्यत्रैवोक्तम् । अथेह कस्मान्न भवति—देवदत्तस्यानन्तरम्, देवदत्तस्य समीपमित्यादि ? अनन्तरादिष्वित्यादि । अनभिधानादिति । प्रत्ययान्तेनानन्तरादीनामप्रत्यायनमित्यर्थः ।

संवहेस्तुरिति । वहेस्तृन्तादित्यर्थः । सांवहित्रमिति । सम्पूर्वाद्वहेस्तुरिट् च, यणादेशः । सिद्ध एवत्राणिति । 'प्राग्दीव्यतोऽण्' इत्यनेन । यद्येवं किमर्थमुपसंख्यानम् ? इत्याह—इडर्थमित्यादि । उपसंख्याने ह्यसतीडागमो न स्यात्, 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधात् ।

अग्नीध इत्यादि । अग्नीध इत्येतस्माच् शरणे गृहे वाच्ये रण् वक्तव्यः, भसंज्ञा च वक्तव्या, भसंज्ञायाञ्च सत्यां पदसंज्ञाभावाज्जश्त्वं न भवति ।

समिधामित्यादि । आधीयन्ते येन मन्त्रविशेषेण,समिधस्तस्मिन् समिधामाधानविशेषे समिच्छब्दात् षेण्यण् प्रत्ययो वक्तव्यः = व्याख्येयः । व्याख्यानं तु—'हविर्निवाससामिधेनीषु' इत्येतन्निर्देशमाश्रित्य वक्तव्यम् । सामिधेनीति । 'षिद्गौरादिभ्यश्च' इति ङीष्, 'हलस्तद्धितस्य' इति यलोपः ॥

## रथाद्यत् ॥ १२१ ॥

रथशब्दाद्यत् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। अणोऽपवादः। रथस्येदं रथ्यम्, चक्रं वा, युगं वा।

रथाङ्ग एवेष्यते, नान्यत्र; अनभिधानात्।

❀ रथसीताहलेभ्यो यद्विधाविति तदन्तविधिरुपसंख्यायते ❀। परमरथ्यम्। उत्तमरथ्यम् ॥

## पत्त्रपूर्वादञ् ॥ १२२ ॥

पतन्ति तेनेति पत्त्रम् = अश्वादिकं वाहनमुच्यते। तत्पूर्वाद्रथशब्दादञ् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। पूर्वस्य यतोऽपवादः। आश्वरथं चक्रम्। औष्ट्ररथम्। गार्दभरथम्[1] ॥

पदमञ्जरी

क्विप्। सा समिदाधीयते यया सा सामिधेनी ऋक्, षित्वान्ङीष्, 'हलस्तद्धितस्य' इति यलोपः ॥

*रथाद्यत्* ॥ *रथाङ्ग एवेष्यत इति*। यस्तु रथस्य वोढा रथ्य इति वोढरि प्रयोगः, सः 'तद्वहति रथयुगप्रासङ्गम्' इति द्रष्टव्यः। स्यादेतत्—अयमेव तद्वोढर्यपीष्यताम्, 'तद्वहति' इत्यत्र रथग्रहणं मा कारीति? नैवं शक्यम्, इह द्वौ रथौ वहति द्विरथ्य इति 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुक् प्राप्नोति। यत्तु द्वयो रथयोरङ्गं तत्र द्विरथमित्येव भवति ॥

*पत्त्रपूर्वादञ्* ॥ *पतन्त्यनेनेति पत्त्रमिति*। 'दाम्नीशस' इत्यादिना ष्ट्रन्। अश्वयुक्तो रथोऽश्वरथः, षष्ठीसमासे वृत्तिस्वभावाद्युक्तार्थावगतिः। तस्याङ्गमाश्वरथम् ॥

न्यासः

रथाद् यत् ॥ नान्यत्रेति। सन्नाहादौ ॥

पत्त्रपूर्वादञ् ॥ पत्त्राध्वर्युपरिषदश्च ॥ 'पत्त्राद्वाह्ये' इत्यवधारणमत्र द्रष्टव्यम्—पत्त्राद् वाह्य एवेति। अन्यत्र कस्मान्न भवति? अनभिधानात्। अथ किमर्थं न पूर्वेण सहैकयोग एव क्रियते—'पत्त्रपूर्वपत्त्राध्वर्युपरिषदोऽञ्' इति? नैवं शक्यम्; एवं हि पूर्वपत्त्रपूर्वात् प्रातिपदिकादन्यतोऽपि प्रसज्येत। योगविभागे पूर्वस्मिन् योगे रथादित्यनुवृत्ते रथ एव पत्त्रपूर्वग्रहणेन विशेष्यत इति न भवत्यतिप्रसङ्गः। एकयोगे तु रथाद्यनुवृत्तौ सत्यां

---

१. 'रासभरथम्, छं परत्वाद् बाधते' इत्यधिकं क्वचित्।

## पत्त्राध्वर्युपरिषदश्च ॥ १२३ ॥

पत्त्रं वाहनं तद्वाचिनः प्रातिपदिकादध्वर्यु-परिषच्छब्दाभ्यां चाञ्प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। अणोऽपवादः।

❀ पत्त्राद्वाह्ये ❀। अश्वस्येदं वहनीयमाश्वम्। औष्ट्रम्। गार्दभम्। आध्वर्यवम्। पारिषदम्॥

## हलसीराट्ठक्॥ १२४ ॥

हल, सीर-शब्दाभ्यां ठक् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। अणोऽपवादः। हलस्येदं हालिकम्। सैरिकम्॥

## द्वन्द्वाद् वुन्वैरमैथुनिकयोः॥ १२५ ॥

द्वन्द्वसंज्ञकाद् वुन् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये, वैर-मैथुनिकयोः प्रत्ययार्थविशेषणयोः। अणोऽपवादः। छं तु परत्वाद्बाधते।

वैरे तावत् – [1]बाभ्रव्यशालङ्कायनिका। काकोलूकिका।

मैथुनिकायाम् – अत्रिभरद्वाजिका। कुत्सकुशिकिका। विवहनमैथुनिका। [2]वैरस्य नपुंसकत्वेऽप्यमी स्वभावतः स्त्रीलिङ्गाः[2]।

पदमञ्जरी

पत्त्राध्वर्युपरिषदश्च॥ पत्त्रेत्यर्थग्रहणमितरयोः स्वरूपग्रहणम्। व्याख्यानं चात्र शरणम्॥

द्वन्द्वाद् वुन् वैरमैथुनिकयोः॥ वैरम् = विरोधः, वीराणामिदमिति कृत्वा, मिथुनकर्म मैथुनिका, मनोज्ञादित्वाद् वुञ्। मिथुनम् = दम्पती, कर्म = क्रिया-निष्पादनम्। *बाभ्रवशालङ्कायनिकेति*। वुञन्तं स्वभावतः स्त्रियां वर्त्तते॥

न्यासः

यथा पत्त्रपूर्वतया रथो विशेष्यते, तथा पत्त्रादिभिरपि रथ एव विशेष्यते इत्यनिष्टं स्यात्। तस्माद् योगविभाग एव न्याय्यः॥

हलसीराट्ठक्॥ द्वन्द्वाद् वुन् वैरमैथुनिकयोः॥ बाभ्रव्यशालङ्कायनिकेति। वुन्नन्तः स्वभावादेव स्त्रियां वर्तत इति टाप्, 'प्रत्ययस्थात्' इत्यादिनेत्त्वम्।

---

१. 'बाभ्रव०'–इति पाठा०।

२-२. पाठोऽयं क्वचिन्न दृश्यते।

* वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः *। दैवासुरम्। राक्षोऽसुरं वैरम् ।।

गोत्रचरणाद् वुञ् ॥ १२६ ॥

गोत्रवाचिभ्यश्चरणवाचिभ्यश्च प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। अणोऽपवादः। छं तु परत्वाद्बाधते। गोत्रात्तावत् – ग्लौचुकायनकम् औपगवकम्।

चरणाद्धर्माम्नाययोरिष्यते। काठकम्। कालापकम् मौदकम्। पैप्पलादकम् ॥

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ १२७ ॥

सङ्घादिषु प्रत्ययार्थविशेषणेष्वञन्ताद् यञन्ताद् इञन्ताच्च प्रातिपदिकादण्प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। पूर्वस्व वुञोऽपवादः।

* घोषग्रहणमत्र कर्त्तव्यम् *। तेन वैषम्याद्यथासंख्यं न भवति। अञन्तात् – बैदः सङ्घः। बैदोऽङ्कः। बैदं लक्षणम्। बैदो घोषः।

पदमञ्जरी

*गोत्रचरणाद् वुञ्* ॥ वुनि प्रकृते वुञो विधानमवृद्धेषु वृद्ध्यर्थम्। वृद्धेषु वुनि वुञि च विशेषो नास्ति—तदेव रूपं स एव स्वरः, पुंवद्भावप्रतिषेधोऽपि 'न कोपधायाः' इत्युभयोरस्ति ॥

*सङ्घाङ्कलक्षणेष्वञ्यञिञामण्* ॥ *पूर्वस्य वुञोऽपवाद इति*। गोत्रग्रहणानुवृत्तेरञादीनां गोत्रप्रत्ययानामत्र ग्रहणमिति भावः।

*घोषग्रहणमत्र कर्त्तव्यमिति*। घोषः = आभीरस्थानम्, तत्रापि प्रत्ययो यथा स्यादित्येवमर्थम्। घोषग्रहणस्यानुषङ्गिकं प्रयोजनान्तरमाह—*तेन वैषम्यादिति*।

न्यासः

गोत्रचरणाद् वुञ् ॥ वुनि प्रकृते वुञ्विधानं वृद्ध्यर्थम्। तच्चावृद्धा एव गोत्रचरणशब्दाः प्रयोजयन्ति, न वृद्धाः। तेषु हि वुञि वुनि वा सति न कश्चिद् विशेषः। ग्लौचुकायनक इति। 'प्राचामवृद्धात् फिन् बहुलम्' इति फिन्, तदन्ताद् वुञ्।

चरणादित्यादि। चरणाद्धर्माम्नाययोरेवेष्यते, नान्यत्र; अनभिधानादिति।

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ तेन वैषम्याद् यथासंख्यं न भवति। असति तु घोषग्रहणे, अञादयस्त्रयः सङ्घादयोऽपि तत्र इति समानाद् यथासंख्यं स्यात्, घोषे च प्रत्ययो न स्यात्। बैद इति। 'अनृष' इत्यादिनाञ् तदन्तादण्। अङ्कलक्षयोः को

यञन्तात् – गार्गः सङ्घः। गार्गोऽङ्कः। गार्गं लक्षणम्। गार्गो घोषः।

इञन्तात् – दाक्षः सङ्घः। दाक्षोऽङ्कः। दाक्षं लक्षणम्। दाक्षो घोषः।

अङ्कलक्षणयोः को विशेषः ? लक्षणं लक्ष्यभूतस्यैव चिह्नभूतं स्वम्, यथा–विद्या बिदानाम्। अङ्कस्तु गवादिस्थोऽपि गवादीनां स्वं न भवति। णित्करणं ङीबर्थं पुंवद्भावप्रतिषेधार्थं च। बैदी विद्याऽस्य बैदीविद्यः॥

## शाकलाद्वा ॥ १२८ ॥

शाकलशब्दात्सङ्घादिषु प्रत्ययार्थविशेषणेषु वाऽण्प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। वुञोऽपवादः। शाकलेन प्रोक्तमधीयते शाकलाः, तेषां सङ्घः शाकलः, शाकलकः। शाकलोऽङ्कः, शाकल-

### पदमञ्जरी

*अथाङ्कलक्षणयोः को विशेष इति*॥ निघण्टुषु पर्यायतया पाठान्नास्त्येव विशेष इत्यर्थः। पृथगुपादानसामर्थ्याद्विशेषोऽत्राश्रीयताम् ? इत्याह—*लक्षणं लक्ष्यस्यैवेति*। स्वमात्मीयं सम्बन्धीत्यर्थः। *बैदी विद्या अस्येति*। बिदानामसाधारणी या विद्या सा यस्यास्ति स बैदीविद्यः॥

*शाकलाद्वा*॥ *वुञोऽपवाद इति*। शाकलशब्दस्य चरणशब्दत्वात्, तद्दर्शयति—*शाकलेन प्रोक्तमिति*॥

### न्यासः

विशेष इति ? नास्त्येव कश्चिद् विशेषः। पर्यायत्वादङ्कलक्षणयोरिति मन्यते। लक्षणमित्यादिना विशेषं दर्शयति। लक्षणं चिह्नं लक्ष्यस्यैव स्वम्, नान्यस्य; यथा विद्या बिदानाम्। बिदानामेव हि लक्षणानां सम्बन्धिनाम्, नान्यस्य कस्यचित्। अङ्कस्तु गवादिस्थो न गवादीनां सम्भवति। किं तर्हि ? ततोऽन्येषाम्, गवादिस्वामिनाम्। अथ किमर्थं णित्करणं प्रत्ययस्य, यावताऽन्तयञन्ताः प्रकृतयो वृद्धा एव ? अत आह—णित्करणमित्यादि। बैदी विद्येत्यत्र ङीब् यथा स्यात्। इह च बैदीविद्य इत्यत्र 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात्। एवमर्थं णित्करणम्, न वृद्ध्यर्थम्॥

शाकलाद् वा॥ वुञोऽपवाद इति। चरणलक्षणस्य शाकलशब्दस्य चरणलक्षणत्वात्। शाकला इति। शाकल्यशब्दाद् गर्गादियञन्तात् 'कण्वादिभ्यो गोत्रे' इति प्रोक्तार्थेऽण्। 'आपत्यस्य च तद्धितेनाति' इति यलोपः। शाकल इति स्थिते

कोऽङ्कः । शाकलं लक्षणम् , शाकलकं लक्षणम् । शाकलो घोषः, शाक-लको घोषः ॥

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ १२९ ॥

सङ्घादयो निवृत्ताः, सामान्येन विधानम् । छन्दोगादिभ्यः शब्देभ्यो ञ्यः प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये । वुञणोरपवादः। 'चरणाद्धर्माम्नाययोः', तत्साहचर्यान्नटशब्दादपि धर्माम्नाययोरेव भवति — छन्दोगानां धर्मो वाऽऽम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । अन्यत्र — छान्दोगं कुलमित्यादि ॥

न दण्डमाणवान्तेवासिषु ॥ १३० ॥

दण्डप्रधाना माणवा दण्डमाणवाः, अन्तेवासिनः=शिष्याः, तेष्वभिधेयेषु वुञ्प्रत्ययो न भवति । गोत्रग्रहणमिहानुवर्त्तते, तेन वुञ्प्रतिषेधो विज्ञायते । गौकक्षाः दण्डमाणवा अन्तेवासिनो वा । दाक्षाः । माहकाः ॥

पदमञ्जरी

*छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः* ॥ *वुञणोरपवाद इति* । चरणशब्देभ्यो वुञोऽपवादः, नटादौत्सर्गिकस्याणः ॥

*न दण्डमाणवान्तेवासिषु* ॥ *दण्डप्रधाना माणवा इति* । अर्थकथनमेतत् , समासस्तु कर्मधारयः । सदा दण्डधारणाद्दण्डशब्दो माणवेषु वर्तते ॥

न्यासः

'तदधीते तद्वेद' इत्यण् , तस्य प्रोक्ताल्लुक्'—शाकलाः, तेषां सङ्घः शाकलः, शाकलक इति वा ॥

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ् ञ्यः ॥ वुञणोरपवाद इति । छन्दोगादिभ्यश्चरणलक्षणस्य वुञोऽपवादः । नटादौत्सर्गिकस्याणः ।

न दण्डमाणवान्तेवासिषु॥ दण्डप्रधाना माणवा दण्डमाणवा इति । मध्यमपदलोपिसमासं दर्शयति । स पुनर्मयूरव्यंसकादित्वाद् वेदितव्यः । मयूरव्यंसकादेराकृतिगणत्वात् । वुञ्प्रत्ययो न भवतीति । एतेन वुञोऽयं प्रतिषेध इति दर्शयति । कथं पुनर्ज्ञायते वुञोऽयं प्रतिषेधः ? इत्याह— गोत्रग्रहणमित्यादि । इह हि गोत्रग्रहणमनुवर्तते 'गोत्रचरणाद् वुञ्' इत्यतः, तेनायमर्थो भवति—'तस्येदम्' इत्येतस्मिन्नर्थे यः प्रत्ययो गोत्रात् प्राप्नोति स दण्डमाणवान्तेवासिषु न भवतीति, गोत्रे वुञेव प्राप्नोतीति,

## रैवतिकादिभ्यश्छः ॥ १३१ ॥

रैवतिकादिभ्यश्छः प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये । गोत्रप्रत्ययान्ता एते, ततः पूर्वेण वुञि प्राप्ते छविधानार्थं वचनम् । रैवतिकीयः । स्वापिशीयः ।

रेवतिक । स्वापिशि । क्षैमवृद्धि । गौरग्रीवि । औदमेयि । औदवाहि । बैजवापि । रैवतिकादिः ॥

## कौपिञ्जलहास्तिपदादण् ॥ १३२ ॥

कौपिञ्जल-हास्तिपदशब्दाभ्यामणप्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये । गोत्रवुञोऽपवादः; गोत्राधिकारात् । कौपिञ्जलः । हास्तिपदः ॥

पदमञ्जरी

*रैवतिकादिभ्यश्छः* ॥ *पूर्वेणेति* । 'गोत्रचरणाद् वुञ्' इत्यनेन । *रैवतिकीय इति* । रेवत्या अपत्यम् 'रेवत्यादिभ्यष्ठक्' रैवतिकः, ततश्छः । अन्ये इञन्ताः, तत्रानन्तरसूत्रात्प्रतिषेधोऽनुवर्त्तिष्यते, रैवतिकादिभ्यो वुञः प्रतिषेधे विज्ञायमाने यत्रापवादो नास्ति—रैवतिकीय इति, तत्र 'वृद्धाच्छः' इत्येव सिद्धः; क्षेमवृद्धिशब्दादपि गहादित्वाच्छः; अन्येषु 'इञश्च' इत्यण् स्यात्, तस्माच्छग्रहणम् ॥

*कौपिञ्जलहास्तिपदादण्* ॥ *गोत्रवुञोऽपवाद इति* । कुत इत्याह—*गोत्राधिकारादिति* । *कौपिञ्जल इति* । कुपिञ्जलस्यापत्यम्, अस्मादेव निपातनादण्, तदन्तात्पुनरण् । *हास्तिपद इति* । हस्तिन इव पादावस्य हस्तिपादः, पादस्य

न्यासः

अतस्तस्यैवायं प्रतिषेधो विधीयते । गौकक्ष्यशब्दाद् गर्गादियञन्तात् 'कण्वादिभ्यो गोत्रे' इत्यण्, पूर्ववद् यलोपः । दाक्षा इति । दाक्षिप्लाक्षिमाहकिभ्यः 'इञश्च' इत्यण् ॥

रैवतिकादिभ्यश्छः ॥ पूर्वेणेति । 'गोत्रचरणाद् वुञ्' इत्यनेन । रैवतिकीयमिति । रेवत्या अपत्यमिति रैवतिकः, ततश्छः । स्वापिशीयमिति । स्वापिशशब्दादिञन्ताच्छः । अथ च्छग्रहणं किमर्थम्, नानन्तरसूत्राद् विप्रतिषेधोऽनुवर्तिष्यते, तत्र रैवतिकादिभ्यो वुञि प्रतिषिद्धे वृद्धत्वादेषां छ एव भविष्यति ? भवेत् सिद्धं यत्र च्छस्यापवादो नास्ति—रैवतिकीय इति, ये त्वत्रेञन्ताः पठ्यन्ते—स्वापिशि, औदमेघि, औद्ववापि—इत्येवमादयः तेभ्यः 'इञश्च' इत्यण् प्रसज्येत । तस्माच्छग्रहणं कर्तव्यम् । अथ क्षेमवृद्धिशब्दोऽत्र कस्मात् पठ्यते, यावता गहादिरसौ, गहादित्वाच्छ एव भविष्यति ? न सिध्यति; गहादिपाठस्यान्यस्तद्धितार्थोऽवकाशः, इदमर्थे तु परत्वाद् वुञेव स्यात् । तस्मादिदमर्थे तु स्यादिति युक्तस्तस्येह पाठः ॥

कौपिञ्जलहास्तिपदादण् ॥ गोत्राधिकारादिति । 'गोत्रवुञोऽपवादः' इत्यत्रायं

## आथर्वणिकस्येकलोपश्च ॥ १३३ ॥

'अण्' इत्येव । आथर्वणिकशब्दादण्प्रत्ययो भवति तत्सन्नियोगेन च इकलोपः, 'तस्येदम्' इत्येतस्मिन्विषये । चरणवुञोऽपवादः । आथर्वणिक-

पदमञ्जरी

लोपो न भवति; 'अहस्त्यादिभ्य' इति वचनात् । हस्तिपादस्यापत्यम् 'तस्यापत्यम्' इति अस्मादेव निपातनादण्, पद्भावश्च, हास्तिपदस्येदम्, पुनरण् । अथाण्ग्रहणं किमर्थम्? असत्यण्ग्रहणेऽनन्तरश्छः प्राप्नोति । सिद्धोऽत्र छः 'वृद्धाच्छः' इति? न सिद्ध्यति; 'गोत्रचरणाद् वुञ्' इति वुञ्प्राप्नोति । एवं तर्हि यद्येताभ्यां छ इष्टः स्यात्, रैवतिकादिष्वेवेमौ पठेत्, एवं हि विभक्त्यनुच्चारणाल्लाघवं भवति । तस्मात्पृथगारम्भादेव छो न भविष्यति । अन्यस्तु यो विहितो न च प्राप्नोति स एव भविष्यति, स चाणेव । एवं तर्ह्यसत्यण्ग्रहणे यत्र वुञ् प्राप्तः प्रतिषिध्यते, न दण्डमाणवान्तेवासिषु, तत्र वुञो विधानार्थमेतत्स्यात्तस्मादण्ग्रहणं कर्तव्यम् । णित्करणं ङीबर्थम्, पुंवद्भावप्रतिषेधार्थं च—कौपिञ्जली क्रिया अस्य कौपिञ्जली-क्रिय इति ॥

*आथर्वणिकस्येकलोपश्च ॥ चरणवुञोऽपवाद इति ।* अथर्वणा प्रोक्तो वेदो-

न्यासः

हेतुः । अत्र हि गोत्रग्रहणेऽधिक्रियमाणे कौपञ्जल-हास्तिपदशब्दाभ्यां गोत्रवाचकाभ्यामण् विधीयते, स च वुञ्प्राप्ते गोत्रवुञीति तेन तस्यैवापवादो विज्ञायते । कौपिञ्जल इति । कुपिञ्जलस्यापत्यमित्येतस्मादेव निपातनादण्, तदन्तात् कौपिञ्जलस्येदमिति पुनरण् । हास्तिपद इति । हस्तिन इव पादावस्येति हस्तिपादस्यापत्यमित्यस्मादेव निपातनादण्, पादस्य पद्भावः, हास्तिपदस्येदम् इति पुनरनेनाण् ।

अथाण्ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत? ननु चैवमुच्यमाने 'वृद्धाच्छः' स्यात्? नैतदस्ति; यद्येताभ्यां छोऽभीष्टः स्याद्, रैवतिकादिष्वेतौ पठ्येयाताम् । रैवतिकादिभ्यस्तु पृथगुपादानाद् विज्ञायते—नैताभ्यां छो भवतीति । वुञ् तर्हि स्यात्? नैतदस्ति; आरम्भो ह्येवमनर्थकः स्यात्, गोत्रादित्येवं वुञः सिद्धत्वात् । नानर्थकः; यत्रासौ प्रतिषिध्यते तत्रारम्भस्य सार्थकत्वात् । क्व चासौ प्रतिषिध्यते? 'न दण्डमाण-वान्तेवासिषु' । तस्मादण्ग्रहणं कर्तव्यम् ।

णित्करणं कौपिञ्जली क्रियेति ङीब्यथा स्यात् । इह च कौपिञ्जली क्रियाऽस्य कौपिञ्जली-क्रिय इति 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात् ॥

आथर्वणिकस्येकलोपश्च ॥ चरणवुञोऽपवाद इति । आथर्वणिकस्य चरण-वाचित्वात् । आथर्वण इति । अथर्वणा प्रोक्तमित्यण्, 'अन्' इति प्रकृतिभावः ।

स्यायमाथर्वणो धर्म आम्नायो वा । 'चरणाद्धर्माम्नाययोः' ॥

तस्य विकारः ॥ १३४ ॥

तस्येति षष्ठीसमर्थात् 'विकारः' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति । प्रकृतेरवस्थान्तरम्=विकारः । किमिहोदाहरणम् ? अप्राण्याद्युदात्तमवृद्धम्, यस्य च नान्यत् प्रतिपदं ग्रहणम्। अश्मनो विकारः आश्मः । आश्मनः । 'अश्मनो विकारः' इति टिलोपः पाक्षिकः । भास्मनः । मार्त्तिकः । नित्स्वरेणाद्युदात्ता एते ।

पदमञ्जरी

ऽभेदोपचारादथर्वा, तमधीते वसन्तादित्वाट्ठक्,—आथर्वणिकः, दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाभावः । अथ वा—अथर्वणा प्रोक्तो वेदः 'तेन प्रोक्तम्' इत्यण्, ततः 'छन्दोब्राह्मणानि' इति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात् 'प्रोक्ताल्लुक्' इति लुग्न भवति—आथर्वणिकः ।

पूर्वसूत्रमिदञ्च वार्त्तिके दर्शनात्सूत्रेषु प्रक्षिप्तम् ॥

*तस्य विकारः* ॥ *प्रकृतेरिति* । उपादानकारणस्य । *अवस्थान्तरमिति* अन्यथात्वम् । अपवादेनानाक्रान्तस्य विषयस्य दुर्लभत्वात्प्रश्नः । *किमिहोदाहरणमिति* । *अप्राणीति* । प्राणिभ्योऽञ्ं वक्ष्यति । *आद्युदात्तमिति* । अनुदात्तादेरञ्ं वक्ष्यति । *अवृद्धमिति* । वृद्धान्मयटं वक्ष्यति । *यस्य च नान्यदिति* । यथा 'गोपयसोर्यत्' इति । *नित्स्वरेणेति* । अश्मभस्मशब्दौ मनिन्प्रत्ययान्तौ । 'मृदस्तिकन्', मृत्तिका ।

न्यासः

आथर्वण इति स्थितेऽध्येतरि 'तदधीते तद्वेद' इत्यनुवर्तमाने 'वसन्तादिभ्यष्ठक्'—आथर्वणिकः । अत एव निपातनात् 'प्रोक्ताल्लुक्' इति लुग्न भवति । चरणाद्धर्माम्नाययोरिति पूर्वोक्तमिष्टं स्मारयति ।

तस्य विकारः ॥ प्रकृतेरवस्थान्तरमिति । प्रकृतेः कारणस्यावस्थान्तरम् = अन्यथात्वम् । अप्राणीति । प्राणिनः 'प्राणिरजतादिभ्यः' अञं वक्ष्यति । आद्युदात्तमिति । 'अनुदात्तादेश्च' इत्यञं वक्ष्यति । अवृद्धमिति । वृद्धान्मयटं वक्ष्यति—'नित्यं वृद्धशरादिभ्यः' इति, यस्य च नान्यत् प्रतिपदं विधानमिति—'गोपयसोर्यत्' इत्येवमादि । ननु च 'अन्' इति प्रकृतिभावेन भवितव्यम्, तत्कथमाश्म इति भवति ? इत्याह—अश्मनो विकार इति टिलोप इति । टिलोपार्थमश्मनो विकार इत्येतदुपसंख्यानं कृतम् । नित्स्वरेणाद्युदात्ता एत इति । अश्मादयः शब्दाः । तत्राश्म-भस्मशब्दौ मनिन्प्रत्ययान्तत्वाद्

तस्य प्रकरणे तस्येति पुनर्वचनं शैषिकनिवृत्त्यर्थम्। विकारावयवयोर्घादयो न भवन्ति – हालः, सैरः।

पदमञ्जरी

*तस्य प्रकरणे इति*। 'तस्येदम्' इत्यस्मिन्। *पुनर्वचनं शैषिकनिवृत्त्यर्थमिति*। प्रकृतं हि तस्यग्रहणं शैषिकैर्घादिभिः सम्बद्धम्, अतस्तदनुवृत्तौ तेऽप्यनुवर्तेरन्, इदं त्वपूर्वं तस्य ग्रहणं क्रियमाणं घादिसम्बद्धस्य तस्यग्रहणस्य निवर्त्तकं घादीनपि निवर्त्तयति। ननु च विधेयतया प्रधानभूता घादयः, न ते गुणभूते तस्यग्रहणे निवर्तमानेऽपि निवर्तितुमर्हन्ति, न हि गुणानुवर्त्ति प्रधानम्, किं तर्हि? प्रधानानुवर्त्ती गुणः? सत्यम्; तस्य ग्रहणसामर्थ्यात्प्रधानभूतानामपि घादीनां निवृत्तिः, अणादयस्तु न निवर्तन्ते, 'प्राग्दीव्यतः' 'प्राग्भवनात्' इति च विशिष्टावधिपरिच्छेदेनाधिकृतत्वात्। *विकारावयवयोरिति*। परस्तात्तु प्राग्वहतेः 'प्राग्घितात्' इति चाधिकारान्तरेणावष्टब्धत्वादेव घादीनां निवृत्तिः सिद्धेति भावः। स्यादेतत्-मा भूवन्ननेन घादयः, तस्य ग्रहणेन निवर्तितत्वात्; 'तस्येदम्' इत्यनेन तु प्राप्नुवन्ति, तस्येदंविशेषत्वाद्विकारावयवयोरिति? तन्न; 'तस्येदम्' इत्येव विकारावयवयोरणादिषु सिद्धेषु पुनस्तेषां विधानं शैषिकाणां बाधनार्थमेव। किं तर्ह्युच्यते—तस्येति पुनर्वचनं शैषिकनिवृत्त्यर्थमिति, यावता सूत्रप्रवृत्तिरेव शैषिकनिवृत्त्यर्था? सत्यम्; तस्य ग्रहणे त्वसति सूत्रप्रवृत्तिः शैषिकानपि विषयीकुर्यादिति तस्यग्रहणस्यैवायं भारः यदुत वै शैषिका निवर्तन्ते। *हालः सैर इति*। हलशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः। सीरशब्दः कन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः, नात्र वक्ष्यमाणस्यापवादस्य कस्यचित्प्रसङ्ग इत्यण्भवति।

न्यासः

नित्स्वरेणाद्युदात्तौ। मृत्तिकाशब्दोऽपि तिकन्प्रत्ययान्तत्वात्—'मृदस्तिकन्' इति।

अथ तस्येति वचनं किमर्थम्, यावता तस्यग्रहणं प्रकृतमेव? इत्याह—तस्य प्रकरणमित्यादि। तद्धि प्रकृतं तस्येति वचनं शैषिकैर्घादिभिः सम्बद्धः। अतस्तदनुवृत्तौ तेऽप्यनुवर्तेरन्। अस्मिंस्तु तस्यग्रहणे क्रियमाणे पूर्वकं तस्येति वचनं निवर्तते। तस्मात् प्रकृतेऽपि तस्येति वचने शैषिकनिवृत्त्यर्थं पुनस्तस्येत्युच्यत इति। ननु च प्रधानं घादयः, विधीयमानत्वात्; तस्येति तु वचनमप्रधानम्, तदर्थत्वात्; तत्रायुक्ता गुणे निवर्तमाने प्रधानस्य निवृत्तिः, प्रधानवृत्तिर्हि गुणो भवति, न गुणार्थवृत्तिः प्रधानम्? नैष दोषः; तस्येति वचनसामर्थ्यात् प्रधानस्यापि गुणनिवृत्तौ निवृत्तिर्भवतीति, अन्यथा हि तस्येति वचनमनर्थकं स्यात्। अणादीनामपि तर्हि निवृत्तिः प्रसज्येत, यथैव हि प्रकृतं तस्येतिवचनं घादिभिः सम्बद्धं तथा अणादिभिरपि? नैष दोषः; उभ-

## अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ १३५ ॥

प्राण्योषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्योऽवयवे यथाविहितं

पदमञ्जरी

इदं च योगविभागेनाणादिविधानस्य प्रयोजनं दर्शितम्। यदि हि 'तस्य विकारः' 'बिल्वादिभ्योऽण्' इत्येवापवादविधानार्थमुच्येत, ततो हलस्य विकार इत्यत्र 'तस्येदम्' इत्यनेन प्रत्ययो विधातव्यः, ततश्चाणं बाधित्वा 'हलसीराट्ठक्' इति ठक् प्राप्नोति, तथान्यस्मिंस्तस्येदंविशेषे; योगविभागेन त्वणादीनां विधानादणेव भवति, तस्यग्रहणे तु घादीनां निवृत्तिः प्रयोजनम्। वृजीनां विकारो वार्ज इति, वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनान्तोदात्तत्वविधानात्पक्षे आद्युदात्तत्वादण्। यदि त्वत्र 'तस्येदम्' इत्यणप्रत्ययः स्यात्; यदि वानेन घादयो विधीयेरन् ततो मद्रवृज्योः कन्निति कन्स्यात्। तथा त्रिगर्तानां विकारः त्रैगर्त इति, त्रिगर्तशब्दो बहुव्रीहिपूर्वपदप्रकृतिस्वरेणाद्युदात्तः, अत्र प्रथमः 'प्राग्दीव्यतोऽण्' प्राप्तः, जनपदलक्षणो वुञ् द्वितीयः, गर्तोत्तरपदलक्षणश्छस्तृतीयः, तदवधिग्रहणेन विहितो वुञ् चतुर्थः; अनेन त्वणेव भवति। तथा रंकूणां विकारो राङ्कव इति— अत्र 'प्राग्दीव्यतोण्' प्रथमः, तदपवादयोः 'अवृद्धादपि' इति 'ओर्देशे ठञ्' इति वुञ्ठञोस्तुल्यकक्षयोरन्यतरो द्वितीयः, 'कोपधादण्' इति वा कच्छादिपाठाद्वाऽण्तृतीयः, 'मनुष्यतत्स्थयोर्वुञ्' चतुर्थः; अनेन त्वण् प्राप्त ओरञा बाधितः 'कोपधाच्च' इति प्रतिप्रसूयते। यदि तर्हि विकारावयवयोर्घादयो न भवन्ति पाटलिपुत्रस्यावयवाः पाटलिपुत्रकाः प्रासादा इति, 'तस्येदम्' इत्यत्रार्थे 'रोपधेतोः प्राचाम्' इति वुञ्न प्राप्नोति? नैष दोषः; प्राण्योषधिवृक्षेभ्यो हि घादीनामवयवे निवृत्तिः, तत्र कः प्रसङ्गो यदप्राण्योषधिवृक्षेभ्योऽवयवे निवृत्तिः स्यात्!॥

न्यासः

येषां हि निवृत्तौ निष्फलः सूत्रस्यारम्भः स्यात्। विधेयस्य कस्यचिदभावात् तस्मान्न भवत्युभयेषां निवृत्तिः। ननु चारम्भसामर्थ्यादुभयेषामन्यतमेषां निवृत्तिरित्येतावद् विज्ञायते। तत् किं घादयो निवर्तन्ते? उताणादयः? सन्देह एव। सन्देहमात्रमेतत्, सर्वसन्देहेष्विदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति। घादयो निवर्तन्त इत्येवं व्याख्यास्यामः स्वरितत्वादणादीनामनुवृत्तिर्भविष्यति। ननु चास्वरितत्वाद् घादीनामनुवृत्तिः, सैव तु तस्येति वचनेनाख्यायते शैषिकनिवृत्त्यर्थम्। विकारावयवयोरित्यादिना विशेषं दर्शयति। केन पुनर्विकारावयवयोर्घादयः प्राप्नुवन्ति? 'तस्येदम्' इत्यनेन; तस्येदंविशेषत्वात् तयोः। हालः, सैर इति। यदि शैषिका अनुवर्तेरंस्ततो हलसीरशब्दाभ्याम् 'हलसीराट्ठक्' इति ठक् स्यात्। तन्निवृत्तौ त्वणेव भवति॥

प्रत्ययौ भवति, चकाराद्विकारे च। तत्र प्राणिभ्योऽञं वक्ष्यति। कपोतस्य विकारोऽवयवो वा कापोतः। मायूरः। तैत्तिरः। ओषधिभ्यः – मौर्वं काण्डम्, मौर्वं भस्म। वृक्षेभ्यः – कारीरं काण्डम्, कारीरं भस्म।

इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यो विकारावयवयोर्भवन्ति[1]। अन्येभ्यस्तु विकारमात्रे। कथं द्वयमप्यधिक्रियते – 'तस्य विकारः', 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति? विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः। कृतनिर्देशौ हि तौ॥

पदमञ्जरी

*अवयवे च प्राण्योषधिवृक्षेभ्यः॥ मौर्वमिति*। मूर्वाशब्दः 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तः। *खदिरमिति*। खादेः खदिरशब्दः किरच्प्रत्ययान्तो निपातितः, तेनानुदात्तादिलक्षणो वुञ् प्राप्नोति। यदि त्वणिष्यते, बिल्वादिषु पठितव्यः।

*कृतनिर्देशौ हि ताविति*। 'तस्येदम्' इत्यनेन। यद्यपि शैषिकनिवृत्त्यर्थत्वं पूर्वयोगस्य प्रयोजनमुक्तम्, तथापि तदनपेक्ष्य भास्मनम्, मार्तिकमित्यादौ तावदणादयः सिद्धा इत्यभिसन्धायेदमुक्तम्॥

न्यासः

अवयवे च प्राण्योषधिवृक्षेभ्यः॥ मौर्वं काण्डमिति। मूर्वाशब्दादवयवे प्रत्ययः। मौर्वं भस्मेति। विकारे।

इत उत्तरमित्यादिना वक्ष्यमाणानां प्रत्ययानां विषयविभागं दर्शयति। कथमिति। केन प्रकारेणायं विभागो लभ्यते। प्रत्यक्षमर्थं पृच्छति—द्वयमपीत्यादि। अतो हेतोरेष विषयविभागो लभ्यते तद्दर्शयति। तत्र फलपाकान्ता ओषधयः, पुष्पवन्तः फलवन्तश्च वृक्षाः, तद्विशेषा वनस्पतयः फलवन्त एव। तत्र वनस्पतिग्रहणेन वृक्षविशेषास्ततोऽन्येन गृह्यन्ते। वृक्षग्रहणे तु वनस्पतेरपि ग्रहणं विज्ञेयम्। विकारावयवयोरित्यादि। युगपदधिकारे ह्यणादीन् वक्ष्यामीत्येवमर्थो युगपदधिकारः। अणादीनामर्थनिर्देशार्थोऽपि कस्मान्न भवति? इत्याह—कृतनिर्देशौ हि ताविति। कृतनिर्देशौ हि तावर्थौ 'तस्येदम्' इत्यनेनैव; तस्येदंविशेषत्वात् तयोः॥

---

१. भवन्तीत्यस्याग्रे 'वृक्षशब्देन वनस्पतयोऽपि गृह्यन्ते—न्यग्रोधस्य विकारोऽवयवो वा नैयग्रोधः, पैप्पलः, औदुम्बरः। ओषधिशब्दाल्लतादयोऽपि गृह्यन्ते, ताम्बूल्या विकारोऽवयवो वा, ताम्बूलः, गान्दूचः—एभ्यो विकारावयवयोर्भवन्ति'—इत्यधिकमेकस्मिन्पुस्तके।

## बिल्वादिभ्योऽण् ॥ १३६ ॥

'बिल्व' – इत्येवमादिभ्योऽण्प्रत्ययो भवति विकारावयवयोरर्थयोः । यथायोगमञ्मयटोरपवादः । बिल्वस्यावयवो विकारो वा बैल्वः । गवेधुकाशब्दोऽत्र पठ्यते, ततः कोपधादेव सिद्धे मयड्बाधनार्थं ग्रहणम् ।

बिल्व । व्रीहि । काण्ड । मुद्ग । मसूर । गोधूम । इक्षु । वेणु । गवेधुका । कर्पासी । पाटली । कर्कन्धू । कुटीर । बिल्वादिः ॥

पदमञ्जरी

*बिल्वादिभ्योऽण्* ॥ *अञ्मयटोरपवाद इति* । तत्र काण्ड-पाटलीशब्दाभ्यां वृद्धलक्षणस्य मयटोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः, बिल्वशब्दस्य 'बिल्वतिष्योर्वान्तःस्वरितः' इत्यन्तःस्वरितः, उदात्तो वा । व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ । मसूर-गोधूम-गवीधुकशब्दाः 'लघावन्ते द्वयोश्च' इति मध्योदात्ताः । इषेः क्सः, इक्षुः, प्रत्ययस्वरेणान्तोदात्तः । वेणुशब्दः 'विभाषा वेण्विन्धानयोः' इति पक्षेऽन्तोदात्तः । कर्पासीशब्दो जातिलक्षणङीषन्तः । कर्कन्धूशब्दः 'अलाबूकर्कन्धूदिधिषूः' इति निपातनान्मध्योदात्तः,'कुटीशमीशुण्डाभ्यो रः' इति कुटीरशब्दः प्रत्ययस्वरेणान्तोदात्तः । *मयड्बाधनार्थमिति* । 'मयड्वैतयोः' इत्यादिना प्राप्तस्य मयटो बाधनार्थम्, शेषेभ्यस्त्ववृद्धेभ्यः शब्देभ्यः पक्षे मयड् भवत्येव । अण्ग्रहणं बाधकबाधनार्थम् । बिल्वादिभ्यो यथाविहितमित्युच्यमानेऽपि हि पाटलीशब्दान्ङीषन्तादनुदात्तादिलक्षणस्याञो मयटा बाधे प्राप्ते पुनर्वचनादञेव स्यात् ; अण्ग्रहणात्त्वणेव भवति ।

न्यासः

बिल्वादिभ्योण् ॥ अञ्मयटोरपवाद इति । यदत्रानुदात्तादि तस्माद् 'अनुदात्तादेश्च' इति प्राप्तस्याञोऽपवादः । यद् वृद्धं ततः 'नित्यं वृद्धशरादिभ्यः' इति मयटः । तत्र बिल्वशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते 'बिल्वतिष्ययोर्वान्तस्वरित्वम्' इति स्वरितत्वं भवति, उदात्तो वा । व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ । मसूरगोधूमशब्दौ 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तौ । एवं गवेधुकाशब्दोऽपि । इषेः क्सुः, इक्षुः । प्रत्ययस्वरेणान्तोदात्तः । वेणुशब्दोऽपि 'विभाषा वेण्विन्धानयोः' इति पक्षेऽन्तोदात्त एव । कर्पासीपाटलीशब्दौ 'जातेरस्त्रीविषयादयोपधात्' इति ङीषन्तौ । ङीष्प्रत्ययान्तत्वान् ङीष्प्रत्ययस्वरेणान्तोदात्तौ । कर्कन्धूशब्दः 'अन्दूहन्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इति निपातनानान्मध्योदात्तः । कुटीरशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः । सर्वं एते 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तादयः । तेनाञ्बाधनार्थं ग्रहणमिति । अथाण्ग्रहणं किमर्थम, न बिल्वादिभ्यो

## कोपधाच्च ॥ १३७ ॥

ककारोपधात्प्रातिपदिकादण् प्रत्ययो भवति यथायोगं विकारावयवयोरर्थयोः। अञोऽपवादः। तर्कु – तार्कवम्। तित्तिडीक – तैत्तिडीकम्। माण्डूकम्। दार्दुरूकम्। माधूकम् ॥

## त्रपुजतुनोः षुक् ॥ १३८ ॥

त्रपु-जतुशब्दाभ्यामण् प्रत्ययो भवति विकारे, तत्सन्नियोगेन तयोः षुगागमो भवति। ओरञोऽपवादः। त्रपुणो विकारः त्रापुषम्। जातुषम्। अप्राण्यादित्वान्नावयवे ॥

## ओरञ् ॥ १३९ ॥

उवर्णान्तात्प्रातिपदिकादञ्प्रत्ययो भवति विकारावयवयोरर्थयोः। अणोऽपवादः। अनुदात्तादेरन्यदिहोदाहरणम्। दैवदारवम्। भाद्रदारवम् ॥

### पदमञ्जरी

*कोपधाच्च ॥ अञोऽपवाद इति।* 'ओरञ्' 'अनुदात्तादेश्च' इति प्राप्तस्य, तित्तिडीकादयः 'लघावन्ते' इत्यादिना मध्योदात्ताः ॥

*त्रपुजतुनोः षुक् ॥ अप्राण्यादित्वादिति।* प्राण्योषधिवृक्षेष्वन्यतमत्वस्याभावादित्यर्थः ॥

*ओरञ् ॥* देवदारु-भद्रदारुशब्दौ 'पीतद्र्वर्थानाम्' इत्यादिनाद्युदात्तौ।

### न्यासः

यथाविहितमेवोच्येत ? नैवं शक्यम्; पाटलीशब्दो ह्यत्र वृद्धः पठ्यते, तस्मादञो बाधके मयटि प्राप्ते पुनर्वचनादञेव स्यात्। अण्ग्रहणात् त्वणेव भवति। तस्मादण्ग्रहणं क्रियते ॥

कोपधाच्च ॥ यथायोगमिति। प्राण्योषधिवृक्षेभ्यो विकारावयवयोः, अन्येभ्यस्तु विकारमात्र इत्येषो यथायोगार्थः। अञोऽपवाद इति। 'ओरञ्', 'अनुदात्तादेः' इत्येताभ्यां प्राप्तस्य। तित्तिडीक-माण्डूक-दर्दुरूक-मधूकशब्दाः 'लघावन्ते' इत्यादिना मध्योदात्ताः, तेनानुदात्तादयो भवन्ति ॥

त्रपुजतुनोः षुक् ॥ ओरञोऽपवाद इति। अनुदात्तत्वात्। अप्राण्यादीति। आदिशब्देनौषधित्वमवृक्षत्वं च गृह्यते ॥

ओरञ् ॥ अनुदात्तादेरन्यदिहोदाहरणमिति। अनुदात्तादेरुत्तरसूत्रेणैव सिद्धत्वात्। दैवदारवम्, भाद्रदारवमिति। देवदारु-भद्रदारुशब्दौ 'पीतद्र्वर्थानाम्'

## अनुदात्तादेश्च ॥ १४० ॥

अनुदात्तादेः प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अणोऽपवादः । दाधित्थम् । कापित्थम् । माहित्थम् ॥

## पलाशादिभ्यो वा ॥ १४१ ॥

पलाशादिभ्यः प्रातिपदिकेभ्यो वाऽञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । पालाशम् । खादिरम् । यावसम् । उभयत्रविभाषेयम् । पलाशखदिरशिंशपास्पन्दनानामनुदात्तादित्वात्प्राप्ते, अन्येषामप्राप्ते ।

पलाश । खदिर । शिंशपा । स्पन्दन । करीर । शिरीष । यवास । विकङ्कत । पलाशादिः ॥

पदमञ्जरी

पीतद्रुः = सरलो वनस्पतिः, पीतद्रुरर्थो येषां तेषामादिरुदात्तो भवतीत्यर्थः ॥

*अनुदात्तादेश्च* ॥ *दाधित्थं कापित्थमिति* । दधनि तिष्ठतीति 'सुपि स्थः', उपपदसमासः, पृषोदरादित्वात्सकारस्य तकारः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् ।

*पलाशादिभ्यो वा* ॥ *उभयत्रविभाषेयमिति* । कथमित्याह—*पलाशखदिरेत्यादि* । पलाशशब्दो घृतादित्वादन्तोदात्तः । खदिरशब्दः 'अजिरशिशिर' इत्यादौ

न्यासः

इत्याद्युदात्तौ । तस्यायमर्थः—पीतद्रुः अर्थो येषां ते पीतद्र्वर्थाः, तेषां पीतद्र्वर्थवचनानामादिरुदात्तो भवति ॥

अनुदात्तादेश्च ॥ दाधित्थमित्यादि । दध्नि तिष्ठतीति, कपौ तिष्ठतीति—'सुपि स्थः' इति कः, 'अतो लोपः' इत्यकारलोपः, पृषोदरादित्वात् सकारस्य तकारः, उपपदसमासः, समासस्वरेणान्तोदात्तौ । तेन दधित्थ-कपित्थशब्दावनुदात्तादी भवतः ॥

पलाशादिभ्यो वा ॥ उभयत्रविभाषेयमिति । प्राप्ते चाप्राप्ते च । तामेवोभयत्रविभाषां स्पष्टीकर्तुमाह—पलाशखदिरेत्यादि । पलाशब्दो घृतादित्वादन्तोदात्तः, खदिरशब्दोऽपि तित्स्वरेण । 'इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्' इत्यनुवर्तमाने 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः' इति किरच्प्रत्ययान्तो निपातितः । शिंशपाशब्दः 'पान्तानां गुर्वादीनाम्' इति मध्योदात्तः । तस्यायमर्थः—पाशब्दान्तानां गुर्वादीनां द्वितीयमुदात्तं भवतीति । अथ द्वितीयं प्रागीषादित्यत्रानुवर्तते, 'स्पदि किञ्चिच्चलने' अस्माद् 'अनुदात्तादेश्च हलादेः'

शम्याष्ट्लञ् ॥ १४२ ॥

शमीशब्दाट् ट्लञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अञोऽपवादः । शामीलं भस्म । शामीली स्रुक् ॥

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४३ ॥

प्रकृतिमात्राद्वा मयट् प्रत्ययो भवति, भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोर्भाषायां विषये यथायथं प्रत्ययेषु प्राप्तेषु । अश्ममयम् । आश्मनम् । मूर्वामयं मौर्वम् ।

भाषायामिति किम् ? बैल्वः खादिरो वा यूपः स्यात् । अभक्ष्याच्छादनयोरिति किम् ? मौद्गः सूपः । कार्पासमाच्छादनम् ।

एतयोरिति किमनेन, यावता विकारावयवौ प्रकृतावेव ? ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ्' इत्येवमादयः, तद्विषयेऽपि यथा

पदमञ्जरी

किरच्प्रत्ययान्तो निपातितः । शिंशपाशब्दो 'द्वितीयं प्रागीषात्' इति वर्तमाने 'पान्तादीनां गुर्वादीनाम्' इति मध्योदात्तः । 'स्पदि किञ्चिच्चलने,' 'अनुदात्तेतश्च हलादेः' इति युच्, किरतेरीरन्, करीरम्, 'कृशृभ्यामीषन्', शॄपॄभ्यां किच्च', शिरीषम्, शेषे नित्स्वरेणाद्युदात्तावेतौ । विकङ्कतमूलासयवासशब्दाः 'आमादीनां च' इत्याद्युदात्ताः ॥

*शम्याष्ट्लञ्* ॥ *अञोऽपवाद इति* । शमीशब्दो गौरादिङीषन्तः । *शामीली स्रुगिति* । चातुर्मास्ये वरुणप्रघासेषु शमीमय्यः स्रुचो भवन्तीति श्रुतम् ॥

*मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः* ॥ *मौद्गः सूपः, कार्पासमाच्छादनमिति* । उभयत्र बिल्वाद्यण्, विकारावयवयोरभक्ष्याच्छादनयोश्च यथासंख्यं न भवति; विकारावयवयोरसमासनिर्देशेन प्रत्येकमभिसम्बन्धात् ।

*तद्विषयेऽपि यथा स्यादिति* । यद्येतयोरिति नोच्येत, उत्तरैर्विशेषप्रत्ययैरन्या-

न्यासः

इति युच्—स्पन्दनः, चित्स्वरेणान्तोदात्तः । 'कॄशॄपॄकटिपटिशौटिभ्य ईरन्' । करीरशब्दो नित्स्वरेणाद्युदात्तः । 'कॄहृभ्यामीषन्' 'शॄपॄभ्यां किच्च' इति शिरीषशब्दोऽपि नित्स्वरेणाद्युदात्तः । विकङ्कतपूलासयवासाश्च 'आमादीनां च' इत्याद्युदात्ताः ॥

शम्याष्ट्लञ् ॥ अञोऽपवाद इति । शमीशब्दस्य गौरादित्वान् ङीषन्तस्य प्रत्ययस्वरेणान्तोदात्तस्यानुदात्तादित्वात् । टकारो ङीबर्थः ।

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ एतयोरिति । किमनेनेत्यादि चोद्यम् । ये विशेषप्रत्यया इत्यादि परिहारः । आदिशब्देन 'उष्ट्राद्वुञ्' इत्येवमादयो गृह्यन्ते । यदि

स्यात् – कपोतमयम्, कापोतम्। लोहमयम्, लौहमिति ॥

## नित्यं वृद्धशरादिभ्यः ॥ १४४ ॥

'भाषायामभक्ष्याच्छादनयोः' इत्येव। वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्चाभक्ष्याच्छादनयोर्विकारावयवयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवति। वृद्धेभ्यस्तावत् – आम्रमयम्। शालमयम्। शाकमयम्। शरादिभ्यः – शरमयम्। दर्भमयम्। मृण्मयम्।

नित्यग्रहणं किम्, यावताऽऽरम्भसामर्थ्यादेव नित्यं भविष्यति ?

पदमञ्जरी

दिभिः सम्प्रधारणायां परत्वात्त एव स्युः, पूर्वेषां विशेषप्रत्ययानां मयडभावपक्षे सावकाशत्वान्मयट्पक्षे परत्वान्मयडेव लभ्यत इति प्राणिरजतादिभ्योऽञादय इत्युक्तम्। 'एतयोः' इति वचनं पुनर्विधानार्थं सम्पद्यत इति परेषामपि विषये मयड् भवति ॥

*नित्यं वृद्धशरादिभ्यः* ॥ *नित्यं मयट्प्रत्ययो भवतीति*। प्राग्दीव्यतीयानामपवादः। अणं तु कोपधलक्षणमञेव परत्वाद्बाधते। *शाकमयम्, आम्रमयमिति*। आम्रशब्दः 'अमितम्योर्दीर्घश्च' इति रन्प्रत्ययान्तः।

न्यासः

ह्येतयोरिति नोच्येत, ततो य इत उत्तरे विशेषाः प्रत्यया अञादयः, तैः सह सम्प्रधारणायां परत्वात् त एव स्युः। 'एतयोः' इत्युच्यमाने तु विशेषप्रत्ययेष्वपि पक्षे भवन्ति; तेन कपोतमयमित्यादि सिद्धं भवति। अथ क्रियमाणे 'एतयोः' इत्येतस्मिन्, कथमपवादविषये मयड् भवति ? एतयोरित्यस्य द्वितीयविधानार्थत्वात् मयट् प्रत्ययो विकारावयवयोर्भवति। एकम्– विधानमेतयोरिति, मयड् भवतीति—द्वितीयम्। तत्र यद्येतद् द्वितीयं विधानं तदा प्रापणार्थम्। तेन यत्रापि निषेधप्रत्ययैर्बाधितो मयड् न प्राप्नोति तत्रापि भवति।

अथ वाग्रहणं किमर्थम्, यावतोत्तरसूत्रे नित्यग्रहणादेवेह विभाषा विज्ञायते ? नैतदस्ति; नित्यशब्दो ह्याभीक्ष्ण्येऽप्यस्ति—नित्यप्रहसितः, नित्यजल्पितमिति। प्रायेण च भवनमाभीक्ष्ण्यं भवतीति वृद्धशरादिलक्षण एव मयड् नित्यः स्यात्, अयं त्वनित्यः। इह तु वाग्रहणे सति नित्यग्रहणम्, तत्र नियमेनाव्यभिचारेण भवतीत्येषोऽर्थो विज्ञायते। तस्माद्वाग्रहणं कर्तव्यम् ॥

नित्यं वृद्धशरादिभ्यः ॥ प्राग्दीव्यतीयाणो ह्यपवादो मयडारभ्यते, अणं तु कोपधलक्षणम् अञमुवर्णान्तलक्षणमनुदात्तादिलक्षणं च परत्वाद् बाधते। आरम्भसामर्थ्यादेव

एकाचो नित्यं मयटमिच्छन्ति, तदनेन क्रियते । त्वङ्मयम् । स्रङ्मयम् । वाङ्मयमिति ।

शर । दर्भ । मृत् । कुटी । तृण । सोम । बल्वज । शरादिः ॥

## गोश्च पुरीषे ॥ १४५ ॥

गोशब्दात्पुरीषेऽभिधेये मयट् प्रत्ययो भवति । गोमयम् ।

पुरीष इति किम् ? गव्यं पयः । पुरीषं न विकारो न चावयवः । तस्येदंविषये विधानम् । विकारावयवयोस्तु गोपयसोर्यत्ं वक्ष्यति ॥

पदमञ्जरी

तदनेन *क्रियत इति* । नित्यंशब्दोऽतिरिच्यमानः पूर्वाचार्यपठितस्य वाक्यस्य स्मारक इति । एवं च मृच्छब्दस्य शरादिषु पाठोऽस्यैव प्रपञ्चार्थो द्रष्टव्यः ॥

*गोश्च पुरीषे* ॥ *गव्यं पय इति* । कथं पुनरत्र प्रसङ्गः, यावता विकारावयवयोरिति वर्तते, पयश्च न विकारो नावयवः ? तत्राह—*पुरीषं न विकार इत्यादि* । अक्रियमाणे पुरीषग्रहणे इष्टसिध्यर्थमेव 'तस्येदम्' इत्यधिकारे 'गोर्मयट्' इति सूत्रं कर्तव्यम्, ततश्चात्रापि प्रसङ्ग इत्यर्थः ॥

न्यासः

नित्यं भविष्यतीति । यदि ह्यनित्यः स्यात्, अस्य सूत्रस्यारम्भोऽनर्थकः स्यात्; पाक्षिकस्य मयटः पूर्वेणैव सिद्धत्वात् । तदनेन क्रियत इति । यत् तदेकेषामाचार्याणामिष्टम् । तदनेन नित्यग्रहणेन सफलं क्रियत इत्यर्थः । कथं योगविभागः क्रियते ? तद् यथा द्वारं द्वारमिति शब्दाधिक्यादर्थाधिक्यं भवतीति नित्यग्रहणेनायमर्थः सूच्यते । यद्येवम्, नित्यग्रहणादेव मृच्छब्दादपि नित्योऽयं मयट् सिद्धः, तदपार्थकोऽस्य शरादिषु पाठः ? नानर्थकः; नित्यग्रहणस्यैवोदाहरणप्रदर्शनार्थत्वात् ॥

गोश्च पुरीषे ॥ गव्यमिति । गोरिदमित्यर्थविवक्षायां सर्वत्र 'गोरजादिप्रसङ्गे यत्' इति यत्, 'वान्तो यि प्रत्यये' इत्यवादेशः । पुरीषं न विकारो नाप्यवयव इति । प्रकृतत्वाद् गोरिति गम्यते । तत्र विकारस्तावन्न भवति; प्रकृतेरवस्थान्तरं विकारः, न च गोरवस्थान्तरं पुरीषम्; [1]गोधर्मानन्वयात् । वस्तूपकारस्य[1] समुदायस्यैकदेशो ह्यारम्भकोऽवयवो भवति, यथा—हस्तादि शरीरस्य; न चैवं गोः पुरीषम् । क तर्हीदं विधानमित्याह—तस्येदंविषय इति । गवा भावितत्वात् पुरीषस्य, तत् तस्याः कार्यमिति तस्येदमर्थो भवति । तस्मात् तत्रैवेदं मयटो विधानम् । विकारावयवयोस्तर्हि केन भवितव्यम् ? इत्याह—विकारावयवयोस्त्वित्यादि ॥

---

१–१ 'गोधर्मान्वयादोदनवस्तूपकारस्य' इति मुद्रितः पाठोऽपपाठः; ग्रर्थासङ्गतेः ।

पिष्टाच्च ॥ १४६ ॥

पिष्टशब्दान्नित्यं मयट् प्रत्ययो भवति 'तस्य विकार' इत्येतस्मिन् विषये। अणोऽपवादः। पिष्टमयं भस्म ॥

संज्ञायां कन् ॥ १४७ ॥

पिष्टशब्दात्कन् प्रत्ययो भवति विकारे संज्ञायां विषये। मयटोऽपवादः। पिष्टकः ॥

व्रीहेः पुरोडाशे ॥ १४८ ॥

व्रीहिशब्दान्मयट् प्रत्ययो भवति पुरोडाशे विकारे। बिल्वाद्यणोऽपवादः। व्रीहिमयः पुरोडाशः। व्रैहमन्यत् ॥

असंज्ञायां तिलयवाभ्याम् ॥ १४९ ॥

तिल-यवशब्दाभ्यामसंज्ञाविषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। तिलमयम्। यवमयम्।

असंज्ञायामिति किम्? तैलम्। यावकः। 'यावादिभ्यः कन्' ॥

पदमञ्जरी

*पिष्टाच्च* ॥ *पिष्टमयं भस्मेति* ॥ पैष्टी सुरेति तु सामान्यविवक्षायाम् 'तस्येदम्' इत्यण्, 'प्रदीयतां दाशरथाय मैथिली' इतिवत् ॥

*असंज्ञायां तिलयवाभ्याम्* ॥ *यावक इति*। यवशब्दाद्विकारेऽण्, तदन्ताद् 'यावादिभ्यः' इति स्वार्थे कन् ॥

न्यासः

पिष्टाच्च ॥ अणोऽपवाद इति। पिष्टशब्दोऽयम् 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तः, तेन तस्मादौत्सर्गिकः प्राप्नोति, ततस्तस्यायमपवादः ॥

संज्ञायां कन् ॥ मयटोऽपवाद इति। पूर्वसूत्रेण प्राप्तस्य। ननु च संज्ञायां कनं वक्ष्यत्येव, तदपार्थकं तद्विधानम्? नैतदस्ति; स ह्यल्पादिष्वर्थेषु, अयं तु विकारे। तदिदं सार्थकम्; अर्थभेदात् ॥

व्रीहेः पुरोडाशे ॥ असंज्ञायां तिलयवाभ्याम् ॥ तिलयवशब्दावाद्युदात्ताविति। तस्मादण्प्राप्नोति, अतस्तस्यायमपवादः। आद्युदात्तत्वं तु तयोः 'तृणधान्यानां द्व्यषाम्' इत्यनेनैव भवितव्यम्। अस्यायमर्थः—तृणधान्यानां द्व्यचामादिरुदात्तो भवतीति।

यावक इति। विकारेऽण्। तदन्तात् तु 'यावादिभ्यः कन्' इति कन् ॥

## द्व्यचश्छन्दसि ॥ १५० ॥

द्व्यचः प्रातिपदिकाच् छन्दसि विषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः। भाषायां मयडुक्तः, छन्दस्यप्राप्तो विधीयते – यस्य पर्णमयी जुहूर्भवति। दर्भमयं वासो भवति। शरमयं बर्हिर्भवति ॥

## नोत्वद्वर्ध्रबिल्वात् ॥ १५१ ॥

उत्वतः प्रातिपदिकाद् वर्ध्र-बिल्वशब्दाभ्यां च मयट् प्रत्ययो न भवति। 'द्व्यचश्छन्दसि' इति प्राप्तः प्रतिषिध्यते। मौञ्जं शिक्यम्। गार्मुतं चरुम्। वार्ध्री=बालप्रग्रथिता भवति। बैल्वो ब्रह्मवर्चसकामेन कार्यः।

तपरकरणं तत्कालार्थम्। धूममयान्यभ्राणि।

मतुब्निर्देशस्तदन्तविधिनिरासार्थः। इहैव स्यात्–वैणवी यष्टिरिति ॥

### पदमञ्जरी

*नोत्वद्वर्ध्रबिल्वात्* ॥ *मौञ्जमिति*। मुञ्जशब्दात् 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तत्वादौत्सर्गिकोऽण्। *गार्मुतमिति*। गर्मुच्छब्दः 'मृग्रोरुतिः', 'ग्रोमुट् च' इत्युतिप्रत्ययान्तत्वादन्तोदात्त इति 'अनुदात्तादेश्च' इत्यञ्। कथं तर्हि 'तस्मा एतं गार्मुतं चरुं निर्वपेत्' इत्यन्तोदात्तत्वम्? सर्वविधीनां छन्दसि विकल्पितत्वादण् भविष्यति। *वार्ध्रीति*। वर्ध्रशब्दः 'लघावन्ते' इत्याद्युदात्तः, तस्मादण्, 'टिड्ढाणञ्' इति ङीप्।

*मतुब्निर्देशे इत्यादि*। असति तस्मिन्वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिः स्यात्। *वैणवीति*। बिल्वाद्यण् ॥

### न्यासः

द्व्यचश्छन्दसि ॥ नोत्वद्वर्ध्रबिल्वात् ॥ मौञ्जमिति। मुञ्जशब्दस्य पूर्वपदाद्युदात्तत्वेन तस्मादौत्सर्गिक एवाण्। गार्मुतमिति। 'मृग्रोरुतिः', 'ग्रोमुट् च' इति प्रत्ययस्वरेण गर्मुच्छब्दोऽन्तोदात्तः। तस्माद् 'अनुदात्तादेश्च' इत्यञ्। वार्ध्रीति, 'वृधिवपिभ्यां रन्' वर्ध्रशब्दो नित्स्वरेणाद्युदात्तः, तस्मात् 'प्राग्दीव्यतोऽण्', 'टिड्ढाणञ्' इति ङीप्। बैल्वमिति। 'बिल्वादिभ्योऽण्'।

अथ मतुपा निर्देशः किमर्थः? न नोद्वर्ध्रबिल्वादित्येवोच्येतेत्यत आह—मतुब्निर्देश इति। 'नोत्वद्वर्ध्रबिल्वात्' इत्युच्यमान उदिति वर्णग्रहणं स्यात्। अत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयतीति तस्मात्तन्निषेधाय मतुब्निर्देशः। कः पुनस्तदन्तविधौ सति दोषः स्यादित्यत आह – इहैवेत्यादि। एवकारेण मुञ्जादिभ्यो न स्यादिति दर्शयति। वैणवीति। बिल्वादित्वादण् ॥

## तालादिभ्योऽण् ॥ १५२ ॥

तालादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति विकारावयवयो-रर्थयोः । मयडादीनामपवादः । तालं धनुः । बार्हिणम् । ऐन्द्रालिशम् ।

* तालाद्धनुषि[1] * । बार्हिण । इन्द्रालिश । इन्द्रादृश । इन्द्रा-

### पदमञ्जरी

*तालादिभ्योऽण् ॥ मयडादीनामपवाद इति* । आदिशब्देनाञो ग्रहणम्, बहुवचनं तु तयोरेव प्रकृतिभेदेन बहुत्वात् । तत्र तालश्यामाकाभ्यां वृद्धत्वान्मयट् प्राप्तः, बर्हिणस्य विकारो बार्हिणम्–'प्राणिरजतादिभ्योऽञ्', तस्माद् 'ञितश्च तत्प्रत्ययात्' इत्यञ् प्राप्तः, शेषेभ्योऽनुदात्तादिलक्षणस्य । लिशिदृशिभ्यामिन्द्र-शब्द उपपदे मूलविभुजादित्वात्कः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । 'चप् सान्त्वने', पचाद्यच् । पीयूक्षाशब्दः 'लघावन्ते' इति मध्योदात्तः, तत्र हि 'फिष' इत्यधिकारात्प्रागेव टापः स्वरप्रवृत्तिः, इन्द्रायुधशब्द समासस्वरेणान्तोदात्तः ।

*तालाद्धनुषीति* । अन्यत्र तालमयमित्येव भवति । अण्ग्रहणं बाधकबाधना-

### न्यासः

तालादिभ्योऽण् ॥ मयडादीनामपवाद इति । आदिशब्देनाञः । प्रकृतिभेदात् तयोर्बहुत्वस्य विवक्षितत्वाद् द्वयोरपि बहुवचनम् । तत्र तालश्यामाकशब्दाभ्यां वृद्ध-लक्षणस्य मयटोऽपवादः । बर्हिणो विकारोऽवयवो वेति 'प्राणिरजतादिभ्योऽञ्' इत्यनेन बार्हिणशब्दोऽपि विकारावयवप्रत्ययान्तः, तेन तस्मादञ् 'ञितश्च तत्प्रत्ययात्' इति प्राप्तस्याञोऽपवादः । शेषेभ्यस्त्विन्द्रालिशादिभ्योऽनुदात्तादिलक्षणस्याञः । लिशिदृशि-भ्यामिन्द्र उपपदे 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' इति कप्रत्ययः । 'अन्ये-षामपि दृश्यते' दीर्घत्वम् । 'गतिकारकोपपदात् कृत्' इति कृत्स्वरेणान्तोदात्तौ इन्द्रा-लिशेन्द्रादृशशब्दौ । इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । 'चप सान्त्वने' पचाद्यच्' चपशब्दोऽन्तोदात्तः । पीयूक्षाशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः । यद्यप्यस्य टापि कृते 'लघावन्ते' इति नास्ति, प्राक् तु टापो विद्यत एव, तस्यामेवाव-स्थायां मध्योदात्तत्वं भवति ।

तालाद् धनुषीति पठ्यते । तालशब्दादण् प्रत्ययो भवति धनुष्यभिधेय इति । तालं धनुः, तालमयमन्यत् । अथाण्ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत ? नैवं शक्यम्; बार्हिणशब्दाद् वृद्धिलक्षणो मयड् 'ञितश्च तत्प्रत्ययात्' इत्यणा बाधितः ।

---

१. इतोऽग्रे 'तालमयमन्यत्, नित्यं वृद्धेति मयट्'–इत्यधिकमन्यत्र । काशि० ३ : ४७

युघ । चाप[1] । श्यामाक । पोयुक्षा । तालादिः ॥

## जातरूपेभ्यः परिमाणे ॥ १५३ ॥

जातरूपम्=सुवर्णम् । बहुवचननिर्देशात्तद्वाचिनः सर्वे गृह्यन्ते । जातरूपवाचिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति परिमाणे विकारे । मयडादीनामपवादः । हाटको निष्कः । हाटकं कार्षापणम् । जातरूपम् । तापनीयम् ।

परिमाण इति किम् ? यष्टिरियं हाटकमयी ॥

## प्राणिरजतादिभ्योऽञ् ॥ १५४ ॥

प्राणिवाचिभ्यः प्रातिपदिकेभ्यो रजतादिभ्यश्चाञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अणादीनामपवादः । अनुदात्तादेरञ् विहित

पदमञ्जरी

र्थम्, अन्यथा यथाविहितमित्युच्यमाने बार्हणशब्दाद्वृद्धलक्षणो मयट् स्यात्, वचनं तु 'ञितश्च तत्प्रत्ययात्' इत्यञो बाधनार्थं स्यात् ॥

*जातरूपेभ्यः परिमाणे* ॥ *मयडादीनामपवाद इति* । आदिशब्देनाञो ग्रहणम्, बहुवचनं तु पूर्ववत् । तत्र वृद्धेभ्यो हाटकादिभ्यो मयटोऽपवादः, तपनीयादिभ्योनुदात्तादिभ्योऽञः ॥

*प्राणिरजतादिभ्योऽञ्* ॥ *अणादीनामिति* । आदिशब्देन मयड् गृह्यते, बहुवचनं तु पूर्ववत् । तत्राद्युदात्तेभ्यः प्राणिशब्देभ्योऽणोऽपवादः, वृद्धेभ्यो मयटः,

न्यासः

तत्रारम्भसामर्थ्याद् मयडेव स्यात् । श्यामाकशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः । तस्माद् 'अनुदात्तादेरञ्' परत्वाद् वृद्धलक्षणेन मयटा बाधित इति पुनरारम्भसामर्थ्यादञेव स्यात् । अणग्रहणादणेव भवति ॥

जातरूपेभ्यः परिमाणे ॥ बहुवचननिर्देशादित्यादि । यदि स्वरूपग्रहणमभीष्टं स्यात् तस्यैकत्वादेकवचनेनैव निर्देशं कुर्यादिति भावः । मयडादीनामिति । आदिशब्देनाञो ग्रहणम् । बहुवचनं तु पूर्ववत् । तत्र ये वृद्धा हाटकजातरूपप्रभृतयः, तेभ्यो मयटोऽपवादः । ये तु तपनीयप्रभृतयोऽनुदात्तादयस्तेभ्योऽञः । तापनीयमिति । तपनीयशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः ॥

प्राणिरजतादिभ्योऽञ् ॥ अणादीनामपवाद इति । आदिशब्देन मयट् परि-

---

१. चर्ग'—इति पाठः ।

एव, परिशिष्टमिहोदाहरणम्। प्राणिभ्यस्तावत् – कापोतम्। मायूरम्। तैत्तिरम्। रजतादिभ्यः – राजतम्। सैसम्। लौहम् ?

रजतादिषु येऽनुदात्तादयः पठ्यन्ते – रजत-कण्टकारप्रभृतयः, तेभ्योऽञि सिद्धे पुनर्वचनं मयड्बाधनार्थम्।

रजत। सीस। लोह। उदुम्बर। नीलदारु[1]। रोहितक। बिभीतक। पीतदारु। तीव्रदारु। त्रिकण्टक। कण्टकार। रजतादिः॥

पदमञ्जरी

रजतादिष्वपि यदाद्युदात्तं तस्मादणोऽपवादः, अनुदात्तादेस्तु मयटः। *कापोतम्, मायूरम्, तैत्तिरमिति*। तित्तिरिशब्दस्तरतेः 'सन्वच्चाभ्यासस्य' इति किप्रत्ययान्तोऽन्तोदात्तः, शेषौ 'लघावन्ते' इति मध्योदात्तौ। *परिशिष्टमिहोदाहरणमिति* चोक्तम्, तस्माच्छुक-बक-गृध्रादय इहोदाहार्याः। शुकबकशब्दौ 'प्राणिनां कुपूर्वाणाम्' इत्याद्युदात्तौ। गृध्रशब्दो रन्प्रत्ययान्त आद्युदात्तः। कथं तर्हि कापोतमित्याद्युदाहृतम्, सत्युदात्तार्थे प्राणिग्रहणेऽनुदात्तादेरपि प्राणिनः परत्वादनेनैवाऽभवितुमर्हतीति मन्यते, आह च 'अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन' इति ? कः पुनरत्र विशेषस्तेन वा सत्यनेन वा ? सापवादकः स विधिर्मयटा परेण बाध्यते, अयं पुनर्निरपवादः, अनेनैव हि परत्वान्मयड् बाध्यते। किं सिद्धं भवति ? श्वाविधो विकारः शौवाविध इति सिद्धं भवति। कथं सिद्धं भवति ? श्वानं विध्यतीति क्विप्, 'नहिवृति' इति दीर्घः, ग्रहिज्यादिसम्प्रसारणम्, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वादनुदात्तादिः। तत्रानुदात्तलक्षणस्याञो बाधकं मयटं परत्वादयमञ् बाधते, द्वारादित्वाद्वृद्धिप्रतिषेधः, ऐजागमश्च॥

न्यासः

गृह्यते। बहुवचनं तु पूर्ववत्। तत्र ये प्राणिशब्दा आद्युदात्तास्तेभ्योऽणपवाद इति। ये तु वृद्धास्तेभ्यो मयट् परिगृह्यते। रजतादिष्वपि यदाद्युदात्तं तस्मादणोऽपवादः। यत् पुनरनुदात्तादि तस्मान् मयटः। ततो हि 'अनुदात्तादेश्च' इत्यनेनैवाञि सिद्धे पुनर्वचनमञेव यथा स्याद्, 'मयड्वैतयोः' इत्यादिना मयड् मा भूदित्येवमर्थम्। तत्र रजतं घृतादिपाठादन्तोदात्तम्। सीस, लोहेति 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तम्। अस्यायमर्थः— नपुंसकविषयस्य शब्दस्यानिसन्तस्यादिरुदात्तो भवतीति। नबिति नपुंसकस्य संज्ञा। अन्त्यात् पूर्वमित्यनुवर्तमाने 'शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च' इत्युदुम्बरेऽन्त्यात् पूर्वमक्षरमुदात्तम्। नीलदारु-रोहितक-बिभीतक—इत्येतेषां 'लघावन्ते' इत्यादिना

1. 'नीचदारु' इति पाठ०।

## ञितश्च तत्प्रत्ययात् ॥ १५५ ॥

'अञ्' इत्येव । तदिति विकारावयवयोरर्थयोः प्रत्यवमर्शः । ञितो विकारावयवप्रत्ययस्तदन्तात्प्रातिपदिकादञ्प्रत्ययो भवति 'विकारावयवयोः' इत्येव[1]। मयटोऽपवादः। 'ओरञ्', 'प्राणिरजतादिभ्योऽञ्', 'पलाशादिभ्यो वा', 'शम्याष्ट्लञ्', 'प्राणिरजतादिभ्योऽञ्', 'उष्ट्राद्वुञ्', 'एण्या ढञ्', 'कंसीयपरशव्ययोर्यञञौ' – इत्येते प्रत्यया गृह्यन्ते । दैवदारवस्य

पदमञ्जरी

ञितश्च तत्प्रत्ययात् ॥ तयोर्वाचकत्वेन यः सम्बन्धी प्रत्ययः स तत्प्रत्ययः, षष्ठीसमासः । *विकारावयवयोरेवेति* । यदि तु ञित्प्रत्ययान्तः प्राण्योषधिवृक्षवाची सम्भवति ततोऽवयवेऽपि भवति; द्वयोः प्रकृतत्वात् । लक्ष्यमनपेक्ष्यैवमुक्तम् । ननु च पूर्वे पञ्चालाः, पटो दग्ध इत्यवयवे समुदायशब्दो दृष्टः, विकारे च प्रकृतिशब्दः–शालीन्भुङ्क्ते मुद्गैरिति शालिविकारान्मुद्गविकारैरित्यर्थः; ततश्च देवदार्वाद्यवयवविकारवृत्तेर्दैवदार्वादिशब्दात्तद्विकारावयवयोस्तेन तेनाणादयो भविष्यन्ति, नार्थोऽनेनेत्याशङ्क्याह—*मयटोऽपवाद इति* । सत्यमस्ति यथाकथञ्चिदिष्टसिद्धिः, तथापि वृद्धलक्षणो मयण्मा भूदित्येवमर्थमेवाञ्विधेयः । अन्यथा येनैव हेतुनैतद्वाक्यं भवति—दैवदारवस्य विकारः, शामलस्य विकारः, तेनैव मयडपि स्यात्, विकारार्थात्तेनैव हेतुना मयडपि प्राप्नोति ? अनभिधानान्न भविष्यति, तदेव तद्यनभिधानं विधानेन प्रतिपाद्यते । यद्येवम्, 'तस्य विकारः', 'उष्ट्राद् वुञ्', औष्ट्रकं

न्यासः

मध्योदात्तत्वम् । पीतदारुशब्दमपि केचित् पठन्ति, स 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः 'तरतेर्ड्रिः' इति ड्रिप्रत्ययान्तत्वात् त्रिशब्दस्य प्रत्ययस्वरेणाद्युदात्तत्वम् । त्रयः कण्टका अस्येति बहुव्रीहिः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति त्रिकण्टकशब्द आद्युदात्तः । कण्टं करोतीति कर्मण्यण् । कण्टकारकशब्दः कृत्स्वरेणान्तोदात्तः ॥

ञितश्च तत्प्रत्ययात् ॥ मयटोऽपवाद इति । वृद्धलक्षणस्य सर्वस्य ञित्प्रत्ययान्तस्य वृद्धत्वात् । एते प्रत्यया गृह्यन्त इति । ननु चैकानुबन्धपरिभाषया ष्ट्लञो ग्रहणं न प्राप्नोति ? नैष दोषः; 'ञितश्च' इति हि चकारस्तत्समुच्चयार्थः । तेन तस्यापि ग्रहणं भविष्यति । ओरञो ग्रहणेन 'अनुदात्तादेश्च' 'पलाशादिभ्यो वा' इत्येतत्सूत्रग्रहणं वेदितव्यम्; अभिन्नत्वात् । य एवम् 'ओरञ्' इत्यनेनाञ्विहितः स एवास्मिन् सूत्रद्वयेऽनुवर्तते । दैवदारवस्य विकारोऽवयवो वेत्यादिना यथायोगमेषां प्रत्ययानामुदा-

---

१. 'विकारावयवयोरेव'–इति पाठा० ।

विकारोऽवयवो वा दैवदारवम्। दाधित्थस्य दाधित्थम्। पालाशस्य पालाशम्। शामीलस्य शामीलम्। कापोतस्य कापोतम्। औष्ट्रकस्य औष्ट्रकम्। ऐणेयस्य ऐणेयम्। कांस्यस्य कांस्यम्। पारशवस्य पारशवम्।

ञित इति किम्? बैल्वमयम्। तत्प्रत्ययादिति किम्? बैदमयम्॥

## क्रीतवत्परिमाणात् ॥ १५६ ॥

'प्राग्वतेष्ठञ्' इत्यत आरभ्य क्रीतार्थे ये प्रत्ययाः परिमाणाद्विहितास्ते विकारेऽतिदिश्यन्ते। परिमाणात् क्रीत इव प्रत्यया भवन्ति 'तस्य विकारः' इत्येतस्मिन्विषये। अणादीनामपवादः। संख्यापि परिमाणग्रहणेन

पदमञ्जरी

चर्म, तस्य विकार औष्ट्रिकोपानदिति, 'टिड्ढाणञ्' इति ङीप्प्राप्नोति, न चेष्यते, एवं हि *सौनागाः* पठन्ति–'वुञश्चाञ्ञ ईतः प्रसङ्गः' इति। तस्मादवयवे समुदायशब्दो विकारे च प्रकृतिशब्द इति तेन तेन लक्षणेनाञादयो भविष्यन्ति। अनभिधानात्तु विकारावयवप्रत्ययान्तान्न मयड् भविष्यतीत्येतदेव साम्प्रतम्। *बैल्वमयमिति*। 'ञितो यत्नेन मयटं सूत्रकारो निवर्त्तयन् अन्यतो वष्टि मयटम्' इति वृत्तिकृतो मतम्। *भाष्यवार्त्तिककारौ* पुनराहतुः– 'तच्चानभिधानमाश्रयितव्यम्, अभिधाने ह्यन्यतोऽपि मयटः प्रसङ्गः–बैल्वस्य विकारः' इति॥

*क्रीतवत्परिमाणात्*॥ 'चरणेभ्यो धर्मवत्' इत्यनेन तुल्यमेतत्। *सङ्ख्या च परिमाणग्रहणेन गृह्यत इति*। चकारादुन्मानं च, परिमीयतेऽनेनेति परिमाणमिति

न्यासः

हरणादीनि दर्शयति। कांस्यम्। पारशवमिति। कंसाय हितमिति 'प्राक् क्रीताच्छः' कंसीयः। परशवे हितमित्युगवादित्वाद् यत्। परशव्यस्य विकारोऽवयवो वेति 'कंसीयपरशव्ययोर्यञञौ लुक् च' इति यथासंख्यं यञञौ भवतः, छंयतोश्च लुक्– कांस्यम्, पारशवः; तयोर्विकारोऽवयवो वेत्यनेनाञ्। बैल्वमयमिति। बिल्वशब्दो 'बिल्वादिभ्योऽण्' इत्यणन्तः, ततो वृद्धलक्षणो मयडेव भवति। बैदमयमिति। 'अनृष' इत्यादिनाञ्– बैदः। भवत्ययमञ्प्रत्ययो ञित्, न तु विकारावयवलक्षणः, तेन मयडेव भवति॥

क्रीतवत् परिमाणात्॥ अणादीनामपवाद इति। आदिशब्देनाञादीनां ग्रहणम्। संख्यापि परिमाणग्रहणेन गृह्यत इति। कथं पुनरेतल्लभ्यते, यावता परिमाण-

गृह्यते, न रूढिपरिमाणमेव । निष्केण क्रीतं नैष्किकम् । एवं निष्कस्य विकारो नैष्किकः । शतेन क्रीतं शत्यम्, शतिकम् । शतस्य विकारः शत्यः, शतिकः । साहस्रः ।

वतिः सर्वसादृश्यार्थः । अद्ध्यर्द्धपूर्वाद् 'द्विगोर्लुगसंज्ञायाम्' इत्येवमादिकमप्यतिदिश्यते । द्विसहस्रः, द्विसाहस्रः । द्विनिष्कः, द्विनैष्किकः ॥

पदमञ्जरी

यौगिकः परिमाणशब्द इत्यर्थः । तदाह—*न रूढिपरिमाणमेवेति* । *नैष्किक इति* । 'असमासे निष्कादिभ्यः' इति ठक् । *शत्यः, शतिक इति* । 'शताच्च ठन्यतावशते' । *साहस्रमिति* । 'शतमानविंशतिकसहस्रवसनादण्' ।

*वतिः सर्वसादृश्यार्थं इति* । किमेवं सति सिद्धं भवति ? तदाह—*अध्यर्द्धपूर्वेत्यादि* । आदिशब्देन प्रकृतिप्रत्यययोः प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुक्' इति तदन्तविधेश्च परिग्रहः । एतदुक्तं भवति—याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया विकारे भवन्ति । *द्विसाहस्रमिति* । पक्षे लुक्, 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धिः । *द्विनैष्किकमिति* । प्राग्वतीयस्य ठञः 'द्वित्रिपूर्वान्निष्कात्' इति पक्षे लुक्, 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः ॥

न्यासः

शब्दः प्रस्थादिषु रूढः, न संख्यायाम् ? नैषः दोषः; यथैव हि प्रस्थादि परिच्छेदहेतुस्तथा संख्यापि । अत उपमानात् संख्यायामपि परिमाणशब्दो वर्तिष्यते परिमाणमिव परिमाणमिति । नन्वेवं मुख्ये सति गौणग्रहणमयुक्तम् ? अयमत्र दोषः—इह हि तन्त्रेण द्वौ परिमाणशब्दावुच्चारितौ, तत्र द्वितीयं पदमुपात्तम्, तेन संख्यापि गृह्यते । नैष्किकमिति । प्राग्वतेष्ठञ् । शत्यः, शतिक इति । 'शताच्च ठन्यतावशते' । साहस्रमिति । 'शतमानविंशतिकसहस्रवसनादण्' ।

अध्यर्धपूर्वेत्यादिना । सादृश्यार्थे वतौ सति यदिष्टं सम्पद्यते तद्दर्शयति । आदिशब्देन प्रकृत्यादिपरिग्रहः । द्विसहस्रमिति । द्वयोः सहस्रयोर्विकार इति तद्धितार्थे द्विगुः । 'प्राग्वतेः संख्यापूर्वपदात् तदन्तविधिरलुकि' इति तदन्तविधेरभ्यनुज्ञानाद् यथा क्रीतार्थे 'शतमानविंशतिकसहस्रवसनात्' इति द्विसहस्रादण् भवति, तथा विकारेऽपि । तस्य च क्रीतार्थे 'विभाषा कार्षापणसहस्राभ्याम्' इति पक्षे लुग् भवति, तथेहापि । द्विसाहस्रमिति । 'संख्यायाः संवत्सरपूर्वस्य' इत्युत्तरपदवृद्धिः । द्विनिष्क इति । यथा क्रीतार्थे निष्कशब्दात् प्राग्वतेष्ठञ् भवति तस्य 'द्वित्रिपूर्वान्निष्कात्' इति पक्षे लुक्, तथेहापि । द्विनैष्किकमिति । 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्युत्तरपदवृद्धिर्भवति ॥

## उष्ट्राद् वुञ् ॥ १५७ ॥

उष्ट्रशब्दाद्वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । प्राण्यञोऽपवादः । उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः ॥

## उमोर्णयोर्वा ॥ १५८ ॥

उमाशब्दादूर्णाशब्दाच्च वा वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । औमम्, औमकम् । और्णम्, और्णकम् ॥

## एण्या ढञ् ॥ १५९ ॥

एणीशब्दाद ढञ् प्रययो भवति विकारावयवयोरर्थयोः । प्राण्यञोऽपवादः । ऐणेयं मांसम् । पुंसस्त्वञेव भवति—एणस्य मांसमैणम्[1] ॥

## गोपयसोर्यत् ॥ १६० ॥

गो, पयस् – शब्दाभ्यां यत् प्रत्ययो भवति विकारावयवयोरर्थयोः। गव्यम् । पयस्यम् ।

सर्वत्र गोरजादिप्रसङ्गे यदस्त्येव, मयड्विषये तु विधीयते ॥

पदमञ्जरी

*उमोर्णयोर्वा* ॥ उमाशब्दस्तृणधान्यानां वेत्याद्युदात्तः, ऊर्णाशब्दःप्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां वुञभावे यथाक्रममणञौ ॥

*एण्या ढञ्* ॥ स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह—*पुंसस्त्वञेव भवतीति* ॥

*गोपयसोर्यत्* ॥ *मयड्विषये त्विति* । 'मयड्वैतयोः' इति विहितस्य मयटो विषये ॥

न्यासः

उष्ट्राद् वुञ् ॥ उमोर्णयोर्वा ॥ उमाशब्दस्तृणधान्यमित्यादिनाद्युदात्तः, ऊर्णाशब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां यथासंख्यमणञोः प्राप्तयोर्विभाषा वुञारभ्यते ।

एण्या ढञ् ॥ पुंसस्त्वञेव भवतीति । यदिह पुंसो ढञ् स्यात् पुंल्लिङ्गेनैव निर्देशं कुर्यादिति । पुंल्लिङ्गेन हि निर्देशे प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येणीशब्दादपि प्रत्ययो लभ्यत एव । तस्मात् स्त्रीलिङ्गनिर्देशादेव पुंसोऽञ् भवति, न ढञ् ॥

गोपयसोर्यत् ॥ मयड्विषये तु विधीयत इति । अजादिप्रसङ्ग इति वचनात् ।

---

१. इतोऽग्रे '* कोशाड्ढञ् वक्तव्यः *। कौशेयं वासः, सूत्रं च' इत्यधिकं क्वचित् ।

## द्रोश्च ॥ १६१ ॥

द्रुशब्दाद्यत्प्रत्ययो भवति विकारावयवयोरर्थयोः । ओरञोऽपवादः । द्रव्यम् ॥

## माने वयः ॥ १६२ ॥

द्रुशब्दान्माने विकारविशेषे वयः प्रत्ययो भवति । यतोऽपवादः । द्रुवयम् ॥

## फले लुक् ॥ १६३ ॥

विकारावयवयोरुत्पन्नस्य फले तद्विषये विवक्षिते लुग्भवति । आमलक्याः फलम् आमलकम् । कुवलम् । बदरम् । फलितस्य वृक्षस्य फलमवयवो भवति विकारश्च । पल्लवितस्येव पल्लवः ॥

पदमञ्जरी

द्रोश्च ॥ *अञोऽपवाद इति* । 'ओरञ्' इत्यस्य, सूत्रप्राप्त्यभिप्रायं चैतत् । एकाचो नित्यं मयटमिच्छन्तीति मयट् त्वस्मात्प्राप्नोति । *द्रव्यमिति* । गुणैः संद्रूयते प्राप्यत इति गुणसंद्रावः ॥

*माने वयः* ॥ मीयते येन तन्मानं प्रस्थादि ॥

फले लुक् ॥ *तद्विशेष इति* ॥ विकारावयवविशेषे । उदाहरणेषु आमलकीशब्दाद् वृद्धान्मयटो लुक्, इतरयोर्गौरादित्वान्ङीष्, ताभ्यामनुदात्तादिलक्षणस्याञः, सर्वत्र 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । ननु च न फलं वृक्षस्य विकारः, स हि द्विविधो भवति—यो वा प्रकृतिमुपमृद्नाति खादिरं भस्मेति, यो वा प्रकृतेर्व्यपदेशान्तरं करोति खादिरः स्रुव इति; फलं तु नैवंविधमिति वृक्षे स्थितमपि काकादिवन्न तस्य विकारः, नाप्यवयवः, अनारम्भकत्वात् ; उत्पन्ने हि वृक्षे पश्चात्फलमुपजायते तत्कथं विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुग्विधीयते ? इत्याह–*फलितस्येति* । फलशब्दस्तारकादिः, 'प्रकृतेरवस्थान्तरं विकारः' इत्युक्तम्,

न्यासः

मयटोऽनन्नादित्वात् तद्विषये न प्राप्नोतीत्यतस्तत्र गोशब्दाद् विधीयते । पयःशब्दस्तु पिबतेरित्यसुन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः, तस्मात् 'प्राग्दीव्यतोऽण्' इत्यण् प्राप्नोति । अतस्तदपवादोऽयं यद्विधीयते ॥

द्रोश्च ॥ माने वयः ॥ फले लुक् ॥ तद्विषय इति । विकारावयवविषये । आमलकमिति । 'नित्यं वृद्धशरादिभ्यः' इति मयट्, तस्य लुक् । स्त्रीप्रत्ययस्य लुक्

## प्लक्षादिभ्योऽण् ॥ १६४ ॥

'फले' इत्येव। प्लक्षादिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षितेऽण् प्रत्ययो भवति। अञोऽपवादः। विधानसामर्थ्या-

पदमञ्जरी

अफलितावस्थायाश्च फलिताऽवस्थान्तरं भवत्येव। तत्र वृक्षत्वं तूभयत्रानुवर्तते, सर्वत्र चोत्तरावस्था विकारः, सर्वश्चावयवः स्वोत्पत्तेः प्रागनोपस्थितो नास्यारम्भकः, यथा शृङ्गदन्तादिरथ च गवादेरवयवो भवति, तदेतत्फलेऽपि समानम्। पल्लवशब्दोऽर्द्धर्चादिः। फले लुग्विधानमनर्थकम्; प्रकृत्यन्तरत्वात्। आमलकादिशब्दः फले वर्तते, न यौगिकः—आमलक्याः फलमिति, यथा नामलकयोगाद्वृक्षे आमलकशब्दः, आमलकफलस्येयमामलकीति, यथाङ्गादिशब्दः क्षत्रिये जनपदे च। प्रत्ययनिवृत्त्यर्थं तु यथैतद्वाक्यं भवति—आमलक्या विकारः कुवल्या विकार इति, तथा प्रत्ययोऽपि स्यात्॥

*प्लक्षादिभ्योऽण्*॥ *अञोऽपवाद इति*। शिग्रु-काक्षतुशब्दाभ्यामुवर्णान्तलक्षणस्य, शेषेभ्यस्त्वनुदात्तलक्षणस्य। तत्र प्लक्षशब्दः 'फिषः' इत्यन्तोदात्तः, फिषिति प्रातिपदिकस्य नाम। न्यग्रोधशब्दः 'लघावन्ते' इति मध्योदात्तः। अश्वत्थशब्दो घृतादित्वादन्तोदात्तः। इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ। *विधानसामर्थ्यादिति*। यद्यस्य लुक् स्याद्विधानमनर्थकं स्यात्। न ह्यणोऽञो वा

न्यासः

पूर्ववत्। ननु च फलं वृक्षस्य न विकारः, नाप्यवयवः। विकारो द्विधा भवति—यो वा प्रकृतं निगृह्णाति : खादिरं भस्मेति, यो वा प्रकृतिव्यपदेशं करोति : खादिरो यूप इति। नच फलं वृक्षमपगृह्णाति, नापि फलेन युक्तस्य व्यपदेशान्तरं भवतीत्यत आह—फलितस्येत्यादि। यथा पल्लवो न वृक्षमपगृह्णाति, नापि तस्य व्यपदेशान्तरं जनयति, अथ च तस्य विकारस्तथा फलमपि। स्यादेतत्। पल्लवितावस्थां वृक्षस्यापगृह्णन् पल्लव उपजायते, अतो युक्ता तस्य तद्विकारावयवतेति; फलमपि तस्य फलितावस्थां वृक्षस्यापगृह्णन् फलमुपजायते, तस्यापि युक्त एव तद्विकारभावः। यदप्युक्तम्—नावयवोऽनारम्भकत्वादिति, तदप्ययुक्तम्; फलं ह्युपजायमानं शाखाद्यवयवसहायमन्यमेव विशिष्टं वृक्षावयवमारभते। तद् यथा पल्लवो विशिष्टं समुदायान्तरमारभमाणोऽवयवो भवति तथा फलमपीति वेदितव्यम्॥

प्लक्षादिभ्योऽण्॥ अञोऽपवाद इति। तत्रेक्षुककर्कन्धूशब्दाभ्यामुवर्णान्तलक्षणस्याञोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्य। सर्वे हि तेऽन्तोदात्तत्वादनुदात्तादयः। तत्र प्लक्षन्यग्रोधाश्वत्थशब्दाः प्रातिपदिकस्वरेणान्तोदात्ताः। इङ्गुदीबृहतीशब्दौ तु गौरादिङीषन्तत्वात् प्रत्ययस्वरेणान्तोदात्तौ। विधानसामर्थ्यादित्यादि।

## द्रोश्च ॥ १६१ ॥

द्रुशब्दाद्यत्प्रत्ययो भवति विकारावयवयोरर्थयोः । ओरञोऽपवादः । द्रव्यम् ॥

## माने वयः ॥ १६२ ॥

द्रुशब्दान्माने विकारविशेषे वयः प्रत्ययो भवति । यतोऽपवादः । द्रुवयम् ॥

## फले लुक् ॥ १६३ ॥

विकारावयवयोरुत्पन्नस्य फले तद्विषये विवक्षिते लुग्भवति । आमलक्याः फलम् आमलकम् । कुवलम् । बदरम् । फलितस्य वृक्षस्य फलमवयवो भवति विकारश्च । पल्लवितस्येव पल्लवः ॥

### पदमञ्जरी

द्रोश्च ॥ *अञोऽपवाद इति* । 'ओरञ्' इत्यस्य, सूत्रप्राप्त्यभिप्रायं चैतत् । एकाचो नित्यं मयटमिच्छन्तीति मयट् त्वस्मात्प्राप्नोति । *द्रव्यमिति* । गुणैः संद्रूयते प्राप्यत इति गुणसंद्रावः ॥

*माने वयः* ॥ मीयते येन तन्मानं प्रस्थादि ॥

फले लुक् ॥ *तद्विशेष इति* ॥ विकारावयवविशेषे । उदाहरणेषु आमलकीशब्दाद् वृद्धान्मयटो लुक्, इतरयोर्गौरादित्वान्ङीष्, ताभ्यामनुदात्तादिलक्षणस्याञः, सर्वत्र 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । ननु च न फलं वृक्षस्य विकारः, स हि द्विविधो भवति—यो वा प्रकृतिमुपमृद्नाति खादिरं भस्मेति, यो वा प्रकृतेर्व्यपदेशान्तरं करोति खादिरः स्रुव इति; फलं तु नैवंविधमिति वृक्षे स्थितमपि काकादिवन्न तस्य विकारः, नाप्यवयवः, अनारम्भकत्वात् ; उत्पन्ने हि वृक्षे पश्चात्फलमुपजायते तत्कथं विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुग्विधीयते ? इत्याह–*फलितस्येति* । फलशब्दस्तारकादिः, 'प्रकृतेरवस्थान्तरं विकारः' इत्युक्तम्,

### न्यासः

मयटोऽनन्नादित्वात् तद्विषये न प्राप्नोतीत्यतस्तत्र गोशब्दाद् विधीयते । पयःशब्दस्तु पिबतेरित्यसुन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः, तस्मात् 'प्राग्दीव्यतोऽण्' इत्यण् प्राप्नोति । अतस्तदपवादोऽयं यद्विधीयते ॥

द्रोश्च ॥ माने वयः ॥ फले लुक् ॥ तद्विषय इति । विकारावयवविषये । आमलकमिति । 'नित्यं वृद्धशरादिभ्यः' इति मयट्, तस्य लुक् । स्त्रीप्रत्ययस्य लुक्

## प्लक्षादिभ्योऽण् ॥ १६४ ॥

'फले' इत्येव। प्लक्षादिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षितेऽण् प्रत्ययो भवति। अञोऽपवादः। विधानसामर्थ्या-

पदमञ्जरी

अफलितावस्थायाश्च फलिताऽवस्थान्तरं भवत्येव। तत्र वृक्षत्वं तूभयत्रानुवर्तते, सर्वत्र चोत्तरावस्था विकारः, सर्वश्चावयवः स्वोत्पत्तेः प्राग्नोपस्थितो नास्यारम्भकः, यथा शृङ्गदन्तादिरथ च गवादेरवयवो भवति, तदेतत्फलेऽपि समानम्। पल्लवशब्दोऽर्धर्चादिः। फले लुग्विधानमनर्थकम्; प्रकृत्यन्तरत्वात्। आमलकादिशब्दः फले वर्तते, न यौगिकः—आमलक्याः फलमिति, यथा नामलकयोगाद्वृक्षे आमलकशब्दः, आमलकफलस्येयमामलकीति, यथाङ्गादिशब्दः क्षत्रिये जनपदे च। प्रत्ययनिवृत्त्यर्थं तु यथैतद्वाक्यं भवति—आमलक्या विकारः कुवल्या विकार इति, तथा प्रत्ययोऽपि स्यात्॥

*प्लक्षादिभ्योऽण्*॥ *अञोऽपवाद इति*। शिग्रु-काक्षतुशब्दाभ्यामुवर्णान्तलक्षणस्य, शेषेभ्यस्त्वनुदात्तलक्षणस्य। तत्र प्लक्षशब्दः 'फिषः' इत्यन्तोदात्तः, फिषिति प्रातिपदिकस्यं नाम। न्यग्रोधशब्दः 'लघावन्ते' इति मध्योदात्तः। अश्वत्थशब्दो घृतादित्वादन्तोदात्तः। इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ। *विधानसामर्थ्यादिति*। यद्यस्य लुक् स्याद्विधानमनर्थकं स्यात्। न ह्यणोऽञो वा

न्यासः

पूर्ववत्। ननु च फलं वृक्षस्य न विकारः, नाप्यवयवः। विकारो द्विधा भवति—यो वा प्रकृतं निगृह्णाति: खादिरं भस्मेति, यो वा प्रकृतिव्यपदेशं करोति: खादिरो यूप इति। नच फलं वृक्षमपगृह्णाति, नापि फलेन युक्तस्य व्यपदेशान्तरं भवतीत्यत आह—फलितस्येत्यादि। यथा पल्लवो न वृक्षमपगृह्णाति, नापि तस्य व्यपदेशान्तरं जनयति, अथ च तस्य विकारस्तथा फलमपि। स्यादेतत्। पल्लवितावस्थां वृक्षस्यापगृह्णन् पल्लव उपजायते, अतो युक्ता तस्य तद्विकारावयवतेति; फलमपि तस्य फलितावस्थां वृक्षस्यापगृह्णन् फलमुपजायते, तस्यापि युक्त एव तद्विकारभावः। यदप्युक्तम्—नावयवोऽनारम्भकत्वादिति, तदप्ययुक्तम्; फलं ह्युपजायमानं शाखाद्यवयवसहायमन्यमेव विशिष्टं वृक्षावयवमारभते। तद् यथा पल्लवो विशिष्टं समुदायान्तरमारभमाणोऽवयवो भवति तथा फलमपीति वेदितव्यम्॥

प्लक्षादिभ्योऽण्॥ अञोऽपवाद इति। तत्रेक्षुककर्कन्धूशब्दाभ्यामुवर्णान्तलक्षणस्याञोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्य। सर्वे हि तेऽन्तोदात्तत्वादनुदात्तादयः। तत्र प्लक्षन्यग्रोधाश्वत्थशब्दाः प्रातिपदिकस्वरेणान्तोदात्ताः। इङ्गुदीबृहतीशब्दौ तु गौरादिङीषन्तत्वात् प्रत्ययस्वरेणान्तोदात्तौ। विधानसामर्थ्यादित्यादि।

त्तस्य न लुग्भवति । प्लाक्षम् । नैयग्रोधम् ।

प्लक्ष । न्यग्रोध । अश्वत्थ । इङ्गुदी । शिग्रु । ककंन्धु[1] । बृहती[2] । प्लक्षादिः ॥

जम्ब्वा वा ॥ १६५ ॥

'फले' इत्येव । जम्बूशब्दात्फलेऽभिधेये वाऽण् प्रत्ययो भवति । अञोऽपवादः । अत्राणो विधानसामर्थ्याल्लुग्न भवति, अञस्तु भवत्येव — जाम्बवानि फलानि, जम्बूनि वा ॥

लुप् च ॥ १६६ ॥

'वा' इत्येव । जम्ब्वाः फलेऽभिधेये प्रत्ययस्य वा लुब्भवति । युक्तवद्भावे विशेषः । जम्ब्वाः फलं जम्बूः फलम् , जम्बु फलम् , जाम्बवमिति वा ॥

पदमञ्जरी

लुकि कृते कश्चिद्विशेषः । *नैयग्रोधमिति* । न्यग्रोधस्य च 'केवलस्य' इत्यैजागमः ॥

*जम्ब्वा वा* ॥ अञस्तु भवत्येव । न ह्यञो विधानसामर्थ्यम् ; फलादन्यत्र श्रवणात् । *जम्बूनीति* । फलस्याभिधेयत्वान्नपुंसकह्रस्वे 'जश्शसोः शिः', नुम्, 'सर्वनामस्थाने च' इति दीर्घः ॥

*लुप् च* ॥ *युक्तवद्भावे विशेष इति* । लुपि हि सति 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृत्यर्थगते लिङ्गवचने भवतः, लुकि त्वभिधेयवल्लिङ्गवचने स्याताम् ।

न्यासः

यद्यणो लुक् स्याद् वचनमनर्थकं स्यात् । न ह्यणो वाञो वा लुकि कृते कश्चिद् विशेषोऽस्ति । नैयग्रोधमिति । 'न्यग्रोधस्य च केवलस्य' इत्यैजागमः ॥

जम्ब्वा वा ॥ अञस्तु भवत्येवेति । तस्य हि लुकि सति विधानमनर्थकं भवति; अश्रूयमाणत्वात् । जम्बूनीति । लुकि कृतेऽभिधेयलिङ्गं नपुंसकं भवति । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति, 'जश्शसोः शि', नुम्, 'नोपधायाः' इति दीर्घः ॥

लुप् च ॥ कः पुनर्लुपि सति विशेषो यतो लुकि प्रकृते स विधीयते ? इत्याह — युक्तवद्भावो विशेष इति । लुपि सति युक्तवद्भावो भवति 'लुपि युक्तवद्व्यक्तिवचने' इति—लुपि सत्येष विशेष इति । जम्बूः फलमिति । अत्र युक्तवद्भावेन प्रकृतिगतमेव लिङ्गं भवति, तेन नपुंसकलिङ्गं न प्रवर्तते ।

---

१. 'ऋक्तु', 'ककंन्तु'—इति पाठा० ।

२. 'काक्ष, तुरुर'—इत्यधिकं कुत्रचित् ।

* लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् *। व्रीहयः। यवाः। माषाः। मुद्गाः। तिलाः।

* पुष्पमूलेषु बहुलम् *। मल्लिकायाः पुष्पं मल्लिका। नवमल्लिका[1] जातिः। विदार्याः मूलं विदारी। अंशुमती। बृहती। न च भवति पाटलानि पुष्पाणि शाल्वानि मूलानि।

बहुलवचनात्क्वचिदन्यदपि भवति—कदम्बं पुष्पम्, अशोकम्, करवीरम्, बैल्वानि फलानीति॥

पदमञ्जरी

*फलपाकशुषामिति*। फलपाकेन शुष्यन्तीति फलपाकशुषः। *व्रीहयो मुद्गा इति*। बिल्वाद्यणो लुक्, यवमाषतिलशब्दाः 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्ताः, तेभ्य औत्सर्गिकस्याणो लुक्। मल्लिकाशब्दो मादीनामिति मध्योदात्तः। अस्यार्थः—अत्र 'द्वितीयः प्रागीषात्' इति त्र्यषामिति वर्तते, मकारादीनां त्र्यषां द्वितीयमक्षरमुदात्तं भवति। नवमालिकाशब्दः 'लघावन्ते' इति मध्योदात्तो जातिशब्दः। विदारीबृहतीशब्दौ गौरादिङीषन्तौ। अंशुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ततो मतुप् 'ह्रस्वनुड्भ्यां मतुप्' इति मतुबाद्युदात्तः, ङीबनुदात्तः। तदेवमंशुमतीशब्दे मतुबकार उदात्तः। *पाटलानीति*। बिल्वादित्वादण्, साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। *क्वचिदन्यदपि भवतीति*। लुपोऽन्यदपि क्वचित्कार्यं भवति, तत्पुनर्लुग्लुपोरभावश्च। कदम्बमित्यादावनुदात्तादिलक्षणस्याञो लुक्। कदम्बादयः शब्दाः 'लघावन्ते' इति मध्योदात्ताः। *बैल्वानीति*। अत्रोभयाभावः, बिल्वाद्यण्॥

न्यासः

लुप्प्रकरण इत्यादि। फलपाकेन शुष्यन्तीति फलपाकशुषः। 'अन्येभ्योऽपि दृश्यते' इति क्विप्। व्रीहयः, मुद्गा इति। बिल्वादिभ्योऽणो लुप्। यवाः, माषा इति। अत औत्सर्गिकस्याणः। एते 'तृणधान्यानाम्' इत्यादिनाद्युदात्ताः।

पुष्पमूलेषु बहुलमिति। पुष्पमूलेषु चाभिधेयेषु बहुलं लुब्भवति। मल्लिका, वनमल्लिका, जातिः, विदारी, अंशुमती, बृहती—अत्रानुदात्तादिलक्षणस्याञो लुप्। मल्लिका-नवमल्लिकाशब्दौ 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तौ। जातिशब्दश्च 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्प्रत्ययान्तत्वादन्तोदात्तः। बदरीबृहतीशब्दावपि गौरादिङीषन्तत्वादन्तोदात्तावेव। अंशुमतीशब्दः 'उगितश्च' इति ङीबन्तः। अंशुशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वान् मध्योदात्तः। पाटलानीति। बिल्वादित्वादण्। शाल्वानि मूलानीति।

१. 'नवमालिका'—इति पाठ०।

## हरीतक्यादिभ्यश्च ॥ १६७ ॥

'हरीतकी' इत्येवमादिभ्यः शब्देभ्यः फले प्रत्ययस्य लुब् भवति । लुकि प्राप्ते लुपो विधाने युक्तवद्भावे स्त्रीप्रत्ययश्रवणे च विशेषः । हरीतक्याः फलं हरीतकी । कोशातकी । नखरजनी । अत्र च व्यक्तियुक्तवद्भावेनेष्यते, वचनं त्वभिधेयवदेव भवति । हरीतक्याः फलानि हरीतक्यः ।

हरीतकी । कोशातकी । नखरजनी[1] । शष्कण्डी[2] । दाडी । दोडी । दीडी । श्वेतपाकी । अर्जुनपाकी । काला । द्राक्षा । ध्वाङ्क्षा । गर्गरिका । कण्टकारिका । शेफालिका । येषां[3] च फलपाकनिमित्तः शोषः । पुष्पमूलेषु बहुलम्[3] । हरीतक्यादिः ॥

पदमञ्जरी

*हरीतक्यादिभ्यश्च* ॥ हरीतक्यादिषु द्राक्षाप्रभृतिभ्यो मयटो लुप्, उदात्तादिभ्योऽणः, अनुदात्तादिभ्योऽञः ॥

न्यासः

शाल्वानीत्यनुदात्तादिलक्षणोऽञ् । शाल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । शाल्व इति = शाक इति यस्य प्रसिद्धिः । क्वचिदन्यदपीति । लुपोऽन्यत्रापि क्वचित् कार्यं भवति । तद् पुनर्लुक्लुपोरभावश्च । कदम्बमित्यादावनुदात्तलक्षणस्याञो लुक् । कदम्बादयः शब्दाः 'लघावन्ते' इत्यादिना मध्योदात्ताः । बैल्वानीति । अत्रोभयाभावः । 'बिल्वादिभ्योऽण्' । एतत् तु सर्वं हरीतक्यादिपाठादेव सिद्धमिति नापूर्वं वक्तव्यम् । यतः हरीतक्यादिषु 'येषाञ्च फलपाकनिमित्त शोषः, पुष्पमूलेषु बहुलम्' इति पठ्यन्ते ॥

हरीतक्यादिभ्यश्च ॥ हरीतक्यादिषु कण्टकारिका, गर्गरिका, शेफालिका—इत्येते 'संज्ञायां कन्' इति कन्नन्तत्वान् नित्स्वरेणाद्युदात्ताः । तेनैव तेभ्य औत्सर्गिकस्याणो लुप् । शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः सर्वे हि तेऽन्तोदात्तत्वादनुदात्तादयः । तत्र काला, द्राक्षा, ध्राक्षा—इत्येतेभ्यः प्राग्ये पठ्यन्ते ते ङीषन्तत्वादन्तोदात्ताः । तत्र श्वेतपाकी, अर्जुनपाकी—इत्येतौ 'पाककर्ण' इत्यादिना ङीषन्तौ । शेषेभ्यस्तु गौरादित्वाद् 'गौरादिभ्यश्च' । कालाद्राक्षाध्राक्षाशब्देभ्यः प्रातिपदिकस्वरेणान्तोदात्तेभ्यष्टाप्, सवर्णदीर्घत्वम्, 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम् । अतः कालादयोऽप्यन्तोदात्ताः ॥

---

१. 'नखररजनी'—इति पाठा० ।

२. 'शाकण्डी'—इति पाठा० ।

३-३. पाठोऽयं बहुत्र नास्ति ।

## कंसीयपरशव्ययोर्यञञौ लुक्च ॥ १६८ ॥

'प्राक्क्रीताच्छः'—कंसीयः । 'उगवादिभ्यो यत्'—परशव्यः । कंसीयपरशव्यशब्दाभ्यां यथासंख्यं यञञौ प्रत्ययौ भवतः 'तस्य विकारः' इत्येतस्मिन्विषये, तत्सन्नियोगेन च कंसीयपरशव्ययोर्लुग्भवति । कंसीयस्य विकारः कांस्यः । परशव्यस्य विकारः पारशवः ।

प्रातिपदिकाधिकाराद्धातुप्रत्ययस्य न लुग्भवति । परशव्यशब्दादनुदात्तादित्वादेवाञि सिद्धे लुगर्थं वचनम् ।

### पदमञ्जरी

*कंसीयपरशव्ययोर्यञञौ लुक् च ॥ प्राक् क्रीताच्छेन कंसीय इति* । 'प्राक् क्रीताच्छः' इत्यधिकारे 'तस्मै हितम्' इतिच्छप्रत्ययेन कंसीयशब्दो व्युत्पाद्यत इत्यर्थः । एतेनोगवादिभ्यो यता परशव्यशब्द इति व्याख्यातम् । *तत्सन्नियोगेन च कंसीयपरशव्ययोर्लुग्भवतीति* । प्रत्ययादर्शनस्य लुक्संज्ञाविधानात्तदवयवयोः प्रत्यययोर्लुग्भवतीत्यर्थः ।

अथ 'वृतृवदिहनिकमिकषिभ्यः सः' इति सः, कंसशब्दे सप्रत्ययः । यश्च परान्शृणोतीति परशुः, 'आङ्परयोः खनिशृभ्यां डिच्च' इति कुप्रत्ययस्तयोर्लुक्कस्मान्न भवति ? तत्राह— *प्रातिपदिकाधिकारादिति* । प्रातिपदिकाधिकारे हि ततः परयोश्छयतोर्लुग्भवति, न धातुप्रत्ययस्य, आह—'ङ्याप्प्रातिपदिकग्रहणमङ्गपदसंज्ञार्थं यच्छयोश्च लुगर्थम्' इति, ननु च 'अतः कृकमि' इत्यत्र कंसग्रहणं लिङ्गम्—नावयमुणादिषु व्युत्पत्तिकार्यं भवतीति, तेनोकारसकारयोर्लुग्न भविष्यति ? सत्यम्; वृद्धावृद्धावर्णस्वरद्व्यच्लक्षणप्रत्ययविधौ तत्सम्प्रत्ययार्थमवश्यकर्तव्यस्य, ङ्या-

### न्यासः

कंसीयपरशव्ययोर्यञञौ लुक् च । कंसीय इति । उणादौ कंसशब्दः सप्रत्ययान्तो व्युत्पादितः । परशुशब्दोऽपि 'पृभिदिव्यधिगृधिधृषिभ्यः कुः' इत्यनुवर्तमाने 'आङ्परयोः खनिशृभ्यां डिच्च' इति कुप्रत्ययान्तः; तदनयोरपि धातुप्रत्यययोर्लुक्कस्मान्न भवति ? इत्याह—प्रातिपदिकाधिकारादित्यादि । प्रातिपदिकादिति वर्तते, तेन प्रातिपदिकेभ्यो यो विहितस्तस्य लुग् भवति । न चेमौ प्रातिपदिकाद् विहितौ, किं तर्हि ? धातोः 'अतोऽनयोर्लुग् न प्रवर्तते । अनुदात्तत्वादेवेति । परशव्यशब्दो हि 'तित्स्व-

ननु च यस्येति लोपे कृते 'हलस्तद्धितस्य' इति यलोपो भविष्यति ? नैतदस्ति; 'ईति' इति तत्र वर्त्तते ॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य तृतीयः पादः

पदमञ्जरी

प्रातिपदिकग्रहणस्यानुषङ्गिकं प्रयोजनं दर्शितम् । अत एव च 'ङ्याप्प्रातिपदिकात्' इत्यत्र नेदं पुंस्त्रिकृता दर्शितम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
चतुर्थस्याध्यायस्य तृतीयश्चरणः

न्यासः

रितय' इत्यन्तस्वरितः । तेनानुदात्तादिरिति । ईतीति तत्र वर्तत इति । 'यस्येति च' इत्यतः ॥

बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य
तृतीयः पादः समाप्तः

# अथ चतुर्थाध्याये चतुर्थः पादः

## प्राग्वहतेष्ठक् ॥ १ ॥

'तद्वहति रथयुगप्रासङ्गम्' इति वक्ष्यति। प्रागेतस्माद्वहतिसंशब्द-नाद्यानर्थाननुक्रमिष्यामः, ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति – "'तेन दीव्यति खनति जयति जितम्' इति। अक्षैर्दीव्यति आक्षिकः"।

* ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् *। माशब्द इत्याह माशब्दिकः। नैत्यशब्दिकः। कार्यशब्दिकः। वाक्यादेतत्प्रत्यय-विधानम्।

पदमञ्जरी

*प्राग्वहतेष्ठक्* ॥ *तदाहेति*। 'वाक्यादेतत्प्रत्ययविधानम्' इति वक्ष्यति, न च वाक्याद् द्वितीया सम्भवति; अप्रातिपदिकत्वात्। तेन तदिति कर्ममात्रं निर्दिश्यते, न तु द्वितीयासमर्थविभक्तिः।

*माशब्द इत्याहेति*। शब्दो मा कारीत्याहेत्यर्थः। संसर्गरूपस्य वाक्यार्थस्येति-करणेन प्रत्यवमर्शे सति वचनक्रियां प्रति कर्मत्वं सम्भवति, नान्यथेति मत्वैष विग्रहः। *वाक्यादेतत्प्रत्ययविधानमिति*। एतच्चाहो प्रभूतादिभ्यः पुनर्वचनाल्लभ्यते, अन्यथा प्रभूतादयो माशब्दादय एव भवन्तु, किं पृथग्वचनेन!

न्यासः

प्राग्वहतेष्ठक् ॥ अथ प्राग्ग्रहणं किमर्थम्? अर्थविशेषे प्रत्ययान्तरेणापवादेन निवर्तितस्य ठक उत्तरस्मिन् ग्रन्थान्तरे पुनरुपस्थानं यथा स्यादित्येवमर्थम्। तद्यथा— 'संस्कृतम्' इत्येतस्मिन्नर्थविशेषे 'कुलत्थकोपधात्' इत्यणा निवर्तितस्योत्तरत्रार्थान्तरे 'तरति' इत्येतस्मिन्नर्थे पुनरुपस्थानं यथा स्यादिति।

ठक्प्रकरण इत्यादि। तदिति कर्माभिधायिभ्य आहेत्येतस्मिन्नर्थे माशब्दादिभ्यष्ठक उपसंख्यानम्। वाक्यादेतत् प्रत्ययविधानमिति। स एव हि वाक्यार्थ इति नावमृष्टः कर्मभावमुपगतः। तदाहेति निर्दिश्यते—तदभिधायिन एव वाक्यात् प्रत्यय इति। पदसमुदायो हि वाक्यमिति। 'मा' इत्येतस्य च 'शब्द' इत्येतस्य च पदस्य यः समुदायस्तद् वाक्यम्। एवमन्यत्रापि वेदितव्यम्।

ननु च यस्येति लोपे कृते 'हलस्तद्धितस्य' इति यलोपो भविष्यति ? नैतदस्ति; 'ईति' इति तत्र वर्त्तते ॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य तृतीयः पादः

पदमञ्जरी

प्रातिपदिकग्रहणस्यानुषङ्गिकं प्रयोजनं दर्शितम् । अत एव च 'ङ्याप्प्रातिपदिकात्' इत्यत्र नेदं वृत्तिकृता दर्शितम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
चतुर्थस्याध्यायस्य तृतीयश्चरणः

न्यासः

रितम्' इत्यन्तस्वरितः । तेनानुदात्तादिरिति । ईतीति तत्र वर्तत इति । 'यस्येति च' इत्यतः ॥

बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य
तृतीयः पादः समाप्तः

# अथ चतुर्थाध्याये चतुर्थः पादः

## प्राग्वहतेष्ठक् ॥ १ ॥

'तद्वहति रथयुगप्रासङ्गम्' इति वक्ष्यति । प्रागेतस्माद्वहतिसंशब्द-नाद्यानर्थाननुक्रमिष्यामः, ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति – "'तेन दीव्यति खनति जयति जितम्' इति । अक्षैर्दीव्यति आक्षिकः" ।

※ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् ※ । माशब्द इत्याह माशब्दिकः । नैत्यशब्दिकः । कार्यशब्दिकः । वाक्यादेतत्प्रत्यय-विधानम् ।

पदमञ्जरी

*प्राग्वहतेष्ठक् ॥ तदाहेति* । 'वाक्यादेतत्प्रत्ययविधानम्' इति वक्ष्यति, न च वाक्याद् द्वितीया सम्भवति; अप्रातिपदिकत्वात् । तेन तदिति कर्ममात्रं निर्दिश्यते, न तु द्वितीयासमर्थविभक्तिः ।

*माशब्द इत्याहेति* । शब्दो मा कारीत्याहेत्यर्थः । संसर्गरूपस्य वाक्यार्थस्येति-करणेन प्रत्यवमर्शे सति वचनक्रियां प्रति कर्मत्वं सम्भवति, नान्यथेति मत्वैष विग्रहः । *वाक्यादेतत्प्रत्ययविधानमिति* । एतच्चाहौ प्रभूतादिभ्यः पुनर्वचनाल्लभ्यते, अन्यथा प्रभूतादयो माशब्दादय एव भवन्तु, किं पृथग्वचनेन !

न्यासः

प्राग्वहतेष्ठक् ॥ अथ प्राग्ग्रहणं किमर्थम् ? अर्थविशेषे प्रत्ययान्तरेणापवादेन निवर्तितस्य ठक उत्तरस्मिन् ग्रन्थान्तरे पुनरुपस्थानं यथा स्यादित्येवमर्थम् । तद्यथा— 'संस्कृतम्' इत्येतस्मिन्नर्थविशेषे 'कुलत्थकोपधात्' इत्यणा निवर्तितस्योत्तरत्रार्थान्तरे 'तरति' इत्येतस्मिन्नर्थे पुनरुपस्थानं यथा स्यादिति ।

ठक्प्रकरण इत्यादि । तदिति कर्माभिधायिभ्य आहेत्येतस्मिन्नर्थे माशब्दादिभ्यष्ठक उपसंख्यानम् । वाक्यादेतत् प्रत्ययविधानमिति । स एव हि वाक्यार्थ इति नावमृष्टः कर्मभावमुपगतः । तदाहेति निर्दिश्यते—तदभिधायिन एव वाक्यात् प्रत्यय इति । पदसमुदायो हि वाक्यमिति । 'मा' इत्येतस्य च 'शब्द' इत्येतस्य च पदस्य यः समुदायस्तद् वाक्यम् । एवमन्यत्रापि वेदितव्यम् ।

ननु च यस्येति लोपे कृते 'हलस्तद्धितस्य' इति यलोपो भविष्यति ? नैतदस्ति; 'ईति' इति तत्र वर्त्तते ॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य तृतीयः पादः

पदमञ्जरी

प्प्रातिपदिकग्रहणस्यानुषङ्गिकं प्रयोजनं दर्शितम्। अत एव च 'ङ्याप्प्रातिपदिकात्' इत्यत्र नेदं वृत्तिकृता दर्शितम्॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
चतुर्थस्याध्यायस्य तृतीयश्चरणः

न्यासः

रितम्' इत्यन्तस्वरितः। तेनानुदात्तादिरिति। ईतीति तत्र वर्तत इति। 'यस्येति च' इत्यतः॥

बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य
तृतीयः पादः समाप्तः

## अथ चतुर्थाध्याये चतुर्थः पादः

### प्राग्वहतेष्ठक् ॥ १ ॥

'तद्वहति रथयुगप्रासङ्गम्' इति वक्ष्यति । प्रागेतस्माद्वहतिसंशब्दनाद्यानर्थाननुक्रमिष्यामः, ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति – "'तेन दीव्यति खनति जयति जितम्' इति । अक्षैर्दीव्यति आक्षिकः" ।

* ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् * । माशब्द इत्याह माशब्दिकः । नैत्यशब्दिकः । कार्यशब्दिकः । वाक्यादेतत्प्रत्ययविधानम् ।

पदमञ्जरी

*प्राग्वहतेष्ठक्* ॥ *तदाहेति* । 'वाक्यादेतत्प्रत्ययविधानम्' इति वक्ष्यति, न च वाक्याद् द्वितीया सम्भवति; अप्रातिपदिकत्वात् । तेन तदिति कर्ममात्रं निर्दिश्यते, न तु द्वितीयासमर्थविभक्तिः ।

*माशब्द इत्याहेति* । शब्दो मा कारीत्याहेत्यर्थः । संसर्गरूपस्य वाक्यार्थस्येतिकरणेन प्रत्यवमर्शे सति वचनक्रियां प्रति कर्मत्वं सम्भवति, नान्यथेति मत्वैष विग्रहः । *वाक्यादेतत्प्रत्ययविधानमिति* । एतच्चाहौ प्रभूतादिभ्यः पुनर्वचनाल्लभ्यते, अन्यथा प्रभूतादयो माशब्दादय एव भवन्तु, किं पृथग्वचनेन !

न्यासः

प्राग्वहतेष्ठक् ॥ अथ प्राग्ग्रहणं किमर्थम् ? अर्थविशेषे प्रत्ययान्तरेणापवादेन निवर्तितस्य ठक उत्तरस्मिन् ग्रन्थान्तरे पुनरुपस्थानं यथा स्यादित्येवमर्थम् । तद्यथा— 'संस्कृतम्' इत्येतस्मिन्नर्थविशेषे 'कुलत्थकोपधात्' इत्यणा निवर्तितस्योत्तरत्रार्थान्तरे 'तरति' इत्येतस्मिन्नर्थे पुनरुपस्थानं यथा स्यादिति ।

ठक्प्रकरण इत्यादि । तदिति कर्माभिधायिभ्य आहेत्येतस्मिन्नर्थे माशब्दादिभ्यष्ठक उपसंख्यानम् । वाक्यादेतत् प्रत्ययविधानमिति । स एव हि वाक्यार्थ इति नावमृष्टः कर्मभावमुपगतः । तदाहेति निर्दिश्यते—तदभिधायिन एव वाक्यात् प्रत्यय इति । पदसमुदायो हि वाक्यमिति । 'मा' इत्येतस्य च 'शब्द' इत्येतस्य च पदस्य यः समुदायस्तद् वाक्यम् । एमन्यत्रापि वेदितव्यम् ।

* आहौ प्रभूतादिभ्यः * । प्रभूतमाह प्राभूतिकः । पार्याप्तिकः । क्रियाविशेषणात्प्रत्ययः ।

* पृच्छतौ सुस्नातादिभ्यः * । सुस्नातं पृच्छति सौस्नातिकः । सौखरात्रिकः । सौखशायनिकः ।

* गच्छतौ परदारादिभ्यः * । परदारान् गच्छति पारदारिकः । गौरुतल्पिकः ॥

**तेन दीव्यति खनति जयति जितम् ॥ २ ॥**

'तेन' इति तृतीयासमर्थाद् दीव्यति खनति जयति जितमित्येतेष्वर्थेषु ठक् प्रत्ययो भवति । अक्षैर्दीव्यति आक्षिकः । शालाकिकः । अभ्र्या खनति आभ्रिकः । कौद्दालिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् । शालाकिकम् । सर्वत्र करणे तृतीया समर्थविभक्तिः ।

पदमञ्जरी

*आहाविति* । आहेति पदे प्रकृतिभागस्यागन्तुकेनेकारेणेदमोऽनुकरणम् । तत्र शब्दे कार्यस्यासम्भवादर्थप्रत्ययविधिः । *क्रियाविशेषणादिति* । तदन्ताभिधायिन इत्यर्थः ।

*पृच्छताविति* । तिङन्तानुकरणमेतत् । एवं *गच्छताविति* । तिङन्तार्थे तु प्रत्ययः । *सुस्नातं पृच्छतीति* । सुस्नातं भवता, सुस्नातो भवानित्येवं वा पृच्छतीत्यर्थः । *सौखरात्रिक इति* । सुखरात्रिं पृच्छति । एवं यः पृच्छति, स एवमुच्यते । एतेन सौखशायनिको व्याख्यातः । अनुशतिकादित्वादुभयपदवृद्धिः । *गौरुतल्पिक इति* । तल्पशब्देन भार्या लक्ष्यते ॥

*तेन दीव्यति खनति जयति जितम्* ॥ *सर्वत्र करणे तृतीयेति* । दीव्यत्यादाव-

न्यासः

कथं पुनः प्रातिपदिकाधिकारे वाक्यात् प्रत्ययविधिः ? इत्यत आह—प्रभूतादिभ्य इति । पुनर्वचनात् । यदि ह्यनेनापि प्रातिपदिकादेव प्रत्ययविधिः स्यादेवं सति 'आहौ प्रभूतादिभ्यः' इति पुनरुपसंख्यानमनर्थकं स्यात् ; अनेनैव सिद्धत्वात् । प्रभूतादयोऽपि हि माशब्दादयो भविष्यन्ति, ते च कर्माभिधायिन एव प्रत्ययमुत्पादयन्ति; क्रियाविशेषणाभिधायित्वात् । क्रियाविशेषणानां हि कर्मत्वम् 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इत्यत्र प्रतिपादयिष्यते—प्रत्ययार्थोऽप्याहेति । स एव तस्मादाहेति प्रभूतादिभ्य इति पुनर्वचनाद् वाक्यादेव प्रत्ययविधानं विज्ञायते । क्रियाविशेषणादिति । प्रभूतादिशब्दः क्रियाविशेषणाभिधायित्वादभिधानेऽभिधेयोपचारं कृत्वा क्रियाविशेषणशब्देनोक्तः ॥

तेन दीव्यति खनति जयति जितम् ॥ 'तेन' इति प्रत्येकमभिसम्बध्यते । सर्वत्र

देवदत्तेन जितमिति प्रत्ययो न भवति; अनभिधानात्। अङ्गुल्या खनतीति च। प्रत्ययार्थे संख्याकालयोरविवक्षा।

पदमञ्जरी

भिहितत्वात्कर्तरि तृतीया नोपपद्यत इति तत्साहचर्याज्जितमित्यनेनापि योगे करण एव तृतीयेति सर्वशब्दार्थः। तेन देवदत्तेन जितमित्यत्र न भवति। हेतुतृतीया तु नाशङ्किता; अनभिधानात्। न हि हेतुतृतीयान्तादुत्पद्यमानेन ठका विग्रहवाक्यार्थस्याभिधानमस्ति।

*प्रत्ययार्थ इति*। निर्द्धारण एषा सप्तमी, सामान्यापेक्षमेकवचनम्। इह दीव्यतीत्यादौ तिपो बहवोऽर्थाः—एकत्वसङ्ख्या, वर्त्तमानकाले, युष्मदस्मद्व्यतिरेक इति, तेषु मध्य इत्यर्थः। तदेव दर्शितम्। *सङ्ख्याकालयोरविवक्षेति*। नान्तरीयकत्वात्। अवश्यं हि यया कयाचित्सङ्ख्यया येन केनचित्कालेन निर्देश इति तयोरुपादानम्, न तु तयोर्विवक्षा। तत आक्षिकौ आक्षिका इति द्विवह्वोरपि भवति, अक्षैरदीव्यदित्यादौ कालान्तरे चाक्षिक इति भवति, न्यायस्य तुल्यत्वात् पुरुषस्याप्यविवक्षा, तेनाक्षिकस्त्वम्, आक्षिकोऽहमित्यत्रापि भवति। यथैव तर्हि सङ्ख्याकालपुरुषाणामविवक्षा तथा कर्तुरपि प्राप्नोति, एकप्रत्ययवाच्यत्वात्? नैष दोषः; कर्तुरविवक्षायामाख्यातोपादानमकिञ्चित्करं स्यात्। विपर्ययस्तु न भवति—कर्तुरविवक्षा कालादीनां विवक्षेति; कर्तुः प्रधानत्वात्। सङ्ख्यादिविशिष्टो हि कर्त्ताऽऽख्यातानां प्रधानभूतोऽर्थः, तेन स तावद्विवक्ष्यते, इतरेषां नान्तरीयकत्वादविवक्षा। किञ्च, साधनस्याप्यविवक्षायां जितमित्यस्योपादानमनर्थं स्यात्।

इहाख्यातेषु क्रिया प्रधानभूता, गुणभूतः कर्त्ता, अत एव किं करोति देवदत्त इति क्रियाप्रश्ने पचतीत्याख्यातेनोत्तरं दीयते, न तु कृदन्तेन पाचक इति; तस्य सत्त्वप्रधानत्वात्। किञ्च, यदि कृदन्तेष्विवाख्यातेष्वपि कर्ता प्रधानभूतः स्याद्,

न्यासः

करणे तृतीयेति। दीव्यतीत्यादौ कर्तरि लकार इति तेनैव कर्तुरभिहितत्वात् ,कर्तरि तृतीया नोपपद्यते। तस्मात् करण एव तृतीया। अथ हेतौ तृतीया कस्मान्न भवति? अनभिधानात्। जितमित्यत्र कर्मणि निष्ठाविधानाद् यद्यपि कर्तर्यपि तृतीया सम्भवति, तथापि दीव्यतीत्यादिभिः साहचर्यात् करण एव तृतीय विज्ञायते। देवदत्तेन जितमित्यत्र कर्तरि तृतीया; तेन वाक्यमेव भवति; न प्रत्ययः।

इह सूत्रे दीव्यतीत्यादिनैकवचनान्तेनैकसंख्यस्य प्रत्ययार्थस्य, वर्तमानेन च कालेन निर्देशः। ततश्चैकस्मिन्नेव प्रत्ययः स्यात्, न द्विवह्वोः। तथा वर्तमान एव काले, न भूतभविष्यतोरिति यश्चोदयेत्, तं प्रत्याह—प्रत्ययार्थे संख्याकालयोरविवक्षेति। अविवक्षा तु तयोर्नान्तरीयकत्वात्। अवश्यं हि यया कयाचित् संख्यया येन केनचित्

क्रियाप्रधानत्वेऽपि चाख्यातस्य, तद्धितः स्वभावात्साधनप्रधानः ॥

## संस्कृतम् ॥ ३ ॥

'तेन' इति तृतीयासमर्थात् 'संस्कृतम्' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । सत उत्कर्षाधानम् = संस्कारः । दध्ना संस्कृतं दाधिकम् । शार्ङ्गवेरिकम् । मारिचिकम् । योगविभाग उत्तरार्थः ॥

### पदमञ्जरी

यथा—पाचकस्यापत्यमित्यपत्यादिभिर्योगो भवति, तथाऽऽख्यातवाच्यस्यापि स्यात् पचत्ययमिति, क्रियावेशः स्याद्, यथा—पाचकस्तिष्ठतीति । तस्मात्क्रियाप्रधानमाख्यातम् । ततश्च तदर्थे विधीयमानः प्रत्ययोऽपि क्रियाप्रधानः स्यादिति तदन्तस्यापत्यादिभिर्योगः क्रियावेशश्च न स्यात्—आक्षिकस्यापत्यमाक्षिकं पश्येति । तत्राह—*क्रियाप्रधानत्वेऽपि चाख्यातस्येति* । आख्यायतेऽनेन क्रिया प्रधानभूतेत्याख्यातस्तिङन्तः, 'कृत्यल्युटो बहुलम्' इति करणे क्तः, स्वनिकायप्रसिद्धिरेषा । *स्वभावादिति* । यथा 'तेनैकदिक्', 'तसिश्च' इत्येतस्मिन्नर्थे विधीयमानयोरणतसोरसत्त्वभूतार्थाभिधायित्वम्, विपर्ययश्च—सौदामनी विद्युत्सुदामतो विद्युदिति, तथात्रापि । न हि स्वभावः पर्यनुयोगमर्हति ॥

*संस्कृतम्* ॥ *योगविभाग उत्तरार्थ इति* । उत्तरोऽपवादः संस्कृत एव यथा स्यात् ॥

### न्यासः

कालेन निर्देशः कर्तव्य इति । न तौ प्रधानम्, न च तयोर्विवक्षेति । यदि तर्हि संख्याकालयोरविवक्षेति साधनस्याप्यविवक्षा प्राप्नोति, एकप्रकरणत्वात् ? नैष दोषः; यस्य हि विवक्षामन्तरेण द्वितीयस्य पदस्योच्चारणमनर्थकं भवति तन्नियोगतो विवक्षितव्यम् । दीव्यतीत्यादिष्वन्वर्थमात्रं विवक्ष्यमाणे द्वितीयस्य पदस्योच्चारणमनर्थकमापद्येतेति न युक्ता साधनस्याप्यविवक्षा ।

इह दीव्यतीत्येवमादौ 'क्रियाप्रधानमाख्यातम्' इति क्रियैव पदेन प्राधान्येनाख्यायते, कर्ता तु गुणीभूतः, तद्धितस्तु—आक्षिक इति प्राधान्येन कर्तारमेवात्र वक्ति, क्रियां तु गुणभावेन, एतच्चायुक्तम्; आख्यातेषूत्पन्नैः प्रत्ययैर्यथासौ तिङन्तेनाभिधीयते, तथैव प्रत्ययान्तेनापि युक्तोऽभिधातुमिति यश्चोदयेत्, तं प्रत्याह—क्रियाप्रधानत्वेऽपि चेत्यादि । अभिधानस्वभावश्चायम्, येन क्रियाप्राधान्यस्याप्यनुविधीयमानस्तद्धितः कर्तृप्रधानो भवति । तस्मात् कर्तृस्वभावोऽत्रापेक्षितव्यः । न हि स्वभावोऽपि पर्यनुयोगमर्हति ॥

संस्कृतम् ॥ योगविभाग उत्तरार्थः—'कुलत्थकोपधादण्' इत्ययमपवादः संस्कृत एव यथा स्याद्, 'दीव्यति' इत्यादौ मा भूदित्येवमर्थो योगविभागः ॥

## कुलत्थकोपधादण् ॥ ४ ॥

कुलत्थशब्दात्ककारोपधाच्छब्दाच्च प्रातिपदिकादण् प्रत्ययो भवति 'संस्कृतम्' इत्येतस्मिन्विषये । ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् ककारोपधात् – तैत्तिडीकम्[1] । दार्दंभकम् ॥

## तरति ॥ ५ ॥

तेनेति तृतीयासमर्थात् 'तरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । तरति प्लवते इत्यर्थः । काण्डप्लवेन तरति काण्डप्लविकः । औडुपिकः ॥

## गोपुच्छाट्ठञ् ॥ ६ ॥

गोपुच्छशब्दाट् ठञ्प्रत्ययो भवति 'तरति' इत्येतस्मिन्नर्थे । ठकोऽपवादः । स्वरे विशेषः । गौपुच्छिकः ॥

## नौद्व्यचष्ठन् ॥ ७ ॥

नौशब्दाद् द्व्यचश्च प्रातिपदिकाट् ठन् प्रत्ययो भवति 'तरति' इत्येतस्मिन्नर्थे । ठकोऽपवादः । नावा तरति नाविकः । द्व्यचः खल्वपि – घटिकः । प्लविकः । बाहुकः ।

षकारः सांहितिकः, नानुबन्धः – बाहुका स्त्री ।

### पदमञ्जरी

*कुलत्थकोपधादण्* ॥ कुले तिष्ठति कुलस्थः, अस्मादेव निपातनात्सकारस्य तकारः । केचित्पुनः स्कारमेवाधीयते ॥

*नौद्व्यचष्ठन्* ॥ इह ठगधिकारे सूत्रे क्वचित्प्रत्ययस्यानुबन्धो ङीषर्थः । स हि किं

### न्यासः

कुलत्थकोपधादण् ॥ तरति ॥ गोपुच्छाट् ठञ् ॥ स्वरे विशेष इति । ठकि हि सति तद्धितस्य 'कितः' इत्यन्तोदात्तत्वं स्यात् । ठञि सति ञित्स्वरेणाद्युदात्तत्वं भवति ॥

नौद्व्यचष्ठन् ॥ इह प्रकरणे केषुचित् सांहितिकः षकारो दृष्टः केषुचित् प्रत्ययस्यैवानुबन्धः; तदिह ठगधिकारे न ज्ञायते—कः सांहितिकः ? कः प्रत्ययानुबन्धः ? इति । अतोऽसन्देहार्थं परिगणनं कृतम् । तच्च 'आकर्षात् पर्पादिभ्यः' इत्यादिना श्लोकेन करोति । 'आकर्षात् ष्ठल्', 'पर्पादिभ्यष्ठन्' 'भस्त्रादिभ्यष्ठन्' 'कुसीददशैकादशात् ष्ठन्ष्ठचौ' 'आवसथात् ष्ठल्', 'किशरादिभ्यः ष्ठन्' इति षितः षडेते । ननु च 'अन्यतो ङीष्' इत्यादयोऽन्येभ्योऽपि षितः सन्त्येव । तत् किमुच्यते षडेते ? इत्यत आह—

---

1. 'तैत्तिरीकम्'–इति पा० ।

आकर्षात्पर्पादिर्भस्त्रादिभ्यः　　कुसीदसूत्राच्च ।
आवसथात्किशरादेः षितः षडेते ठगधिकारे ॥

विधिवाक्यापेक्षं च षट्त्वम्, प्रत्ययास्तु सप्त ॥

चरति ॥ ८ ॥

'तेन' इति तृतीयासमर्थात् 'चरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । चरतिर्भक्षणे गतौ च वर्त्तते । दध्ना चरति दाधिकः । हास्तिकः । शाकटिकः ॥

आकर्षात्ष्ठल् ॥ ९ ॥

आकर्षशब्दात् ष्ठल् प्रत्ययो भवति 'चरति इत्येतस्मिन्नर्थे । ठकोऽपवादः । लकारः स्वरार्थः । षकारो ङीषर्थः । आकर्षेण चरति

पदमञ्जरी

सांहितिकः, किं वानुबन्धः ? इति तत्र सन्देहे विषयपरिगणनं करिष्यन्श्लोकवार्त्तिककारः सर्वानेव षितः परिगणयति—*आकर्षादिति*—यदि तु यत्र सन्देहस्तानेवोपादायैतावन्तष्ठगधिकारे षित इत्युच्येत, तदा आकर्षादिषु प्रत्ययस्याषित्त्वमनार्षमाशङ्क्येत । *कुसीदसूत्रादिति* । कुसीदादिकं सूत्रं यस्य तत्कुसीदसूत्रं कुसीदशब्दश्च, दशैकादशशब्दश्च ।

ननु सप्तैते भवन्ति, कुसीदादिसूत्रेण द्वयोः षितोर्विधानात् ? इत्यत आह—*विधिवाक्यापेक्षं च षट्त्वमिति* । सप्तानां प्रत्ययानां विधिवाक्यापेक्षमौपचारिकं षट्त्वमाश्रित्य 'षितः षडेते' इत्युक्तम् ॥

*आकर्षात् ष्ठल्* ॥ *आकर्षेति* । 'पुंसि संज्ञायां घः प्रायेण' इति अधिकरणे घः ॥

न्यासः

ठगधिकार इत्यादि । ठकः प्रकृतत्वात् तदधिकारे ये षितः त एव परिगृह्यन्त इति दर्शयति ।

नन्वेवमपि सति सप्त भवन्ति, कुसीदादिसूत्रे षित्प्रत्ययद्वयविधानात् ? इत्यत्राह—विधिवाक्यापेक्षं तु षट्त्वमिति । षितः प्रत्ययानां सप्तत्वात् । एतेनैव योगाः षितः प्रयुक्ताः । षित्प्रत्ययार्थाः षडेते योगा इत्यर्थः ॥

चरति ॥ आकर्षात् ष्ठल् ॥ लकारः स्वरार्थ इति । लिति प्रत्ययात् पूर्वस्यो-

आकर्षिकः । आकर्षिकी । 'आकर्ष' इति = सुवर्णपरीक्षार्थो निकषोपल उच्यते ॥

पर्पादिभ्यः ष्ठन् ॥ १० ॥

'पर्प' इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति 'चरति' इत्येतस्मिन्नर्थे । ठकोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पर्पिकः, पर्पिकी । अश्विकः, अश्विकी ।

पर्प । अश्व । अश्वत्थ । रथ । जाल । न्यास । व्याल । पादः पच्च । पदिकः । पर्पादिः ॥

श्वगणाट्ठञ्च ॥ ११ ॥

श्वगणशब्दाट्ठञ् प्रत्ययो भवति, चकारात् ष्ठन्, 'चरति' इत्येतस्मिन्नर्थे । ठकोऽपवादः । श्वगणेन चरति श्वागणिकः, श्वागणिकी । ठन् — श्वगणिकः, श्वगणिका । 'श्वादेरिञि' इत्यत्र वक्ष्यति – 'इकारादिग्रहणं च कर्त्तव्यं श्वागणिकाद्यर्थम्' इति । तेन ठञि द्वारादिकार्यं न भवति ॥

पदमञ्जरी

*पर्पादिभ्यः ष्ठन्* ॥ पर्पादिषु 'पादः पत्' इति पठ्यते, पादाभ्यां चरति पदिकः, 'पद्यत्यतदर्थे' इत्यत्र वक्ष्यति—'पद्भाव इके चरतावुपसङ्ख्यानम्' इति, सोऽस्यैव प्रपञ्चार्थः ॥

*श्वगणाट्ठञ् च* ॥ *श्वागणिक इति* । ननु च श्वशब्दो द्वारादिषु पठ्यते, तदादिविधिश्च तत्रेष्यते, तत्कथं श्वागणिक इति ? तत्राह—*श्वादेरिञीत्यत्रेति* ॥

न्यासः

दात्त्वं यथा स्यात् । षकारो ङीषर्थ इति । 'षिद्गौरादिभ्यः' इति ङीष् यथा स्यात् । आकर्षिकीति । स्वर्णपरीक्षार्थो निकषोपल उच्यत इति । आकृष्यते स्वर्णमिति कृत्वा ॥

पर्पादिभ्यः ष्ठन् ॥ पर्पादिषु पादः पच्चेति पठ्यते, तस्यामयमर्थः—पादशब्दात् ष्ठन् प्रत्ययो भवति तत्सन्नियोगेन च पदित्ययमादेशः; पदिकः, पदिकी । यद्येवम्, 'पद्यत्यतदर्थे' इति पद्भावे 'इके चरतावुपसंख्यानम्' इति कस्मादुपसंख्यायते ? नैष दोषः; 'पादः पत्' इत्यस्यापौराणिकत्वात् ॥

श्वगणाट्ठञ्च ॥ श्वागणिक इति । शुनां गणः श्वगणः । ननु च श्वन्शब्दो द्वारादिषु पठ्यत इति 'द्वारादीनाञ्च' इति वृद्धिप्रतिषेधेनैजागमेन भवितव्यम्, तत्र

वेतनादिभ्यो जीवति ॥ १२ ॥

'तेन' इति तृतीयासमर्थेभ्यो वेतनादिभ्यः शब्देभ्यः 'जीवति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । वेतनेन जीवति वैतनिकः कर्मकरः । धनुर्दण्डग्रहणमत्र सङ्घातविगृहीतार्थम् । धानुर्दण्डिकः । धानुष्कः । दाण्डिकः ।

वेतन । वाह । अर्धवाह । धनुर्दण्ड । जाल । वेस । उपवेस । प्रेषण । उपस्ति । सुख । शय्या । शक्ति । उपनिषत् । उपवेष । स्रक् । पाद । उपस्थान । वेतनादिः ॥

वस्नक्रयविक्रयाट्ठन् ॥ १३ ॥

वस्नक्रयविक्रयशब्दाभ्यां तृतीयासमर्थाभ्यां ठन् प्रत्ययो भवति 'जीवति' इत्येतस्मिन्विषये । ठकोऽपवादः । वस्नेन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् – क्रयविक्रयिकः, क्रयिकः, विक्रयिकः ॥

आयुधाच्छ च ॥ १४ ॥

आयुधशब्दाच्छप्रत्ययो भवति, चकाराट्ठँश्च 'जीवति' इत्येतस्मिन्विषये । आयुधेन जीवति आयुधीयः । आयुधिकः ॥

पदमञ्जरी

*वेतनादिभ्यो जीवति* ॥ *धनुर्दण्डग्रहणं सङ्घातविगृहीतार्थमिति* । तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात् ॥

*वस्नक्रयविक्रयाट्ठन्* ॥ वसेर्वस्नम् = मूल्यम् । *क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थमिति* । उक्तोऽत्र हेतुः । क्रयविक्रयेणेति समाहारद्वन्द्वः ॥

*आयुधाच्छ च* ॥ आयुध्यतेऽनेनेति *आयुधम्*, 'घञर्थे कविधानम्' इति कप्रत्ययः ॥

न्यासः

तदादिविधेरिष्टत्वात्, तत् कथं श्वागणिक इति भवति ? इत्याह—श्वादेरिञीत्यादि । द्वारादिकार्ये च प्रतिषिद्धे सत्यादिवृद्धिरेव भवति ॥

वेतनादिभ्यो जीवति ॥ वस्नक्रयविक्रयाट्ठन् ॥ क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थमिति । इह तन्त्रेण क्रयविक्रयशब्दावुच्चारितौ; तत्रैकस्य सङ्घातार्थं ग्रहणम्, अपरस्य तु विगृहीतार्थं वेदितव्यम् ॥

हरत्युत्सङ्गादिभ्यः ॥ १५ ॥

'तेन' इत्येव। उत्सङ्गादिभ्यस्तृतीयासमर्थेभ्यः 'हरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । हरतिर्देशान्तरप्रापणे वर्त्तते । उत्सङ्गेन हरति औत्सङ्गिकः । औडुपिकः ।

उत्सङ्ग । उडुप । उत्पत । पिटक । उत्सङ्गादिः[1] ॥

भस्त्रादिभ्यः ष्ठन् ॥ १६ ॥

'भस्त्रा' इत्येवमादिभ्यस्तृतीयासमर्थेभ्यः 'हरति' इत्येतस्मिन्नर्थे ष्ठन्प्रत्ययो भवति। भस्त्रया हरति भस्त्रिकः, भस्त्रिकी । भरटिकः, भरटिकी ।

भस्त्रा । भरट । भरण[2] । शीर्षभार । शीर्षेभार । अंसभार । अंसेभार । भस्त्रादिः ॥

विभाषा विवधवीवधात् ॥ १७ ॥

'हरति' इत्येव । विवधवीवधशब्दाभ्यां तृतीयासमर्थाभ्यां विभाषा ष्ठन् प्रत्ययो भवति । तेन मुक्ते प्रकृतष्ठग्भवति । विवधेन हरति विव-

पदमञ्जरी

*हरत्युत्सङ्गादिभ्यः* ॥ हरति = नयति, उपादत्ते वा ॥

*भस्त्रादिभ्यः ष्ठन्* ॥ भस्त्रम् = चर्मविकारः, येन लोहादि ध्मायते, येन वा धान्यादिकं नीयते, 'हूयामाश्रुभसिभ्यस्त्रन्' इति करणे त्रन् । *शीर्षभारः*, *शीर्षेभार इति* पठ्यते, निपातनाच्छीर्षभावः सप्तमीसमासश्च, 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् ॥

न्यासः

आयुधाच्छ च ॥ हरत्युत्सङ्गादिभ्यः ॥ भस्त्रादिभ्यः ष्ठन् ॥ भस्त्रादिषु शीर्षेभार इति पठ्यते । तत्रास्मादेव निपातनाच्छिरसः शीर्षभावः, 'सप्तमी' इति योगविभागात् समासः, 'तत्पुरुषे कृति बहुलम्' इति पक्षे सप्तम्या अलुक् ॥

१. 'उडप, पिटाक'—एतौ शब्दवत्र गणे क्वचिदधिकौ ।

२. 'भारण' इति पाठ० ।

धिकः, विवधिकी । वीवधिकः, वीवधिकी । ठक् खल्वपि – वैवधिकः, वैवधिकी ।

विवध-वीवधशब्दौ समानार्थौ पथि पर्याहारे च वर्त्तेते ॥

अण् कुटिलिकायाः ॥ १८ ॥

'हरति' इत्येव । कुटिलिकाशब्दात्तृतीयासमर्थादण् प्रत्ययो भवति 'हरति' इत्येतस्मिन्नर्थे । कुटिलिकया हरति मृगो व्याधं कौटिलिको मृगः । कुटिलिकया हरत्यङ्गारान् कौटिलिकः कर्मारः ।

कुटिलिका = वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्चोच्यते ॥

निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ १९ ॥

'तेन' इत्येव । अक्षद्यूतादिभ्यस्तृतीयासमर्थेभ्यः 'निर्वृत्ते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अक्षद्यूतेन निर्वृत्तम्, आक्षद्यूतिकं वैरम् । जानुप्रहृतिकम् ।

अक्षद्यूत । जानुप्रहृत । जङ्घाप्रहृत । पादस्वेदन । कण्टकमर्दन । गतागत । यातोपयात । अनुगत । अक्षद्यूतादिः ॥

त्रेर्मम्नित्यम् ॥ २० ॥

'निर्वृत्ते' इत्येव, 'ड्वितः क्त्रिः' इत्ययं त्रिशब्दो गृह्यते । त्र्यन्ता-

पदमञ्जरी

*विभाषा विवधवीवधात् ॥ पर्याहारे चेति ।* परित आह्रियतेऽनेन तण्डुलादिकोऽर्थ इति पर्याहारः – उभयतो बद्धशिक्योऽसवाह्यः काष्ठविशेष उच्यते । वीवधशब्दो वार्त्तिके दर्शनात्सूत्रे प्रक्षिप्तः ॥

*अण्कुटिलिकायाः ॥* कुटिलव्याधानामुपरमणम् = कुटिलिका, संज्ञायां कन् ॥

*त्रेर्मम्नित्यम् ॥ ड्वितः क्त्रिरित्ययं त्रिशब्दो गृह्यत इति ।* सङ्ख्यावचन-

न्यासः

विभाषा विवधवीवधात् ॥ पर्याहारे इति । परितः स ह्रियत इति पर्याहारः, मण्डलादिकमुच्यते ॥

अण् कुटिलिकायाः ॥ निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ त्रेर्मम् नित्यम् ॥ ड्वितः क्त्रिरित्ययं त्रिशब्दो गृह्यते इति । संख्याशब्दः कस्मान्न गृह्यते ? अनभिधानात् ।

न्नित्यं मप् प्रत्ययो भवति 'तेन निर्वृत्ते' इत्येतस्मिन्नर्थे। 'डुपचष्पाके' – पक्त्रिमम्। डुवप् – उप्त्रिमम्। 'डुकृञ्' – कृत्रिमम्।

नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम्। तेन त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवति, विषयान्तरे न प्रयोक्तव्यमिति ॥

* भावप्रत्ययान्तादिमब्वक्तव्यः *। पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्। सेकिमम्। कुट्टिमम् ॥

पदमञ्जरी

स्त्वनभिधानान्न गृह्यते। *उप्त्रिममिति*। वच्यादिसूत्रेण संप्रसारणम्।

*नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थमिति*। प्रत्ययरहितस्य त्र्यन्तस्य प्रयोगः स्वातन्त्र्यम्, स्वातन्त्र्यनिवृत्तौ सत्यां यो गुणस्तं दर्शयति—*त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवतीति*। एवकारव्यवच्छेद्यं दर्शयति—*विषयान्तरे न प्रयोक्तव्यमिति*। ननु विभाषया वाक्ये प्रसक्ते नित्यग्रहणं क्रियमाणं निर्वृत्ताधिकारे तद्विषयमेव वाक्यं निवर्तयितुमर्हति—पक्त्रिणा निर्वृत्तमिति, यथा— 'अन उपधालोपिनोन्यतरस्याम्' 'नित्यं संज्ञाच्छन्दसोः' इति, ततश्च विषयान्तरगतत्र्यन्तस्य स्वातन्त्र्यं स्यादेव कृत्रिमर्हत्सुविहितमिति? एवं मन्यते— योगविभागोऽत्र कर्तव्यः, 'त्रेर्मब्भवति निर्वृत्ते' इत्येको योगः, ततः 'नित्यम्'। अत्र त्रेर्मबित्येवापेक्ष्यते न निर्वृत्त इति; योगविभागसामर्थ्यात्। तेन सर्वविषयस्वातन्त्र्यस्य नित्यग्रहणेन निवृत्तिः क्रियत इति। नन्वेवमपि 'नित्यम्' इत्यत्र निर्वृत्तमित्यस्यानपेक्षणात्स्वातन्त्र्यान्तरे नित्यमुपाधिः प्राप्नोति? सत्यम्; अनभिधानात्तु तथा नाश्रीयते।

*भावप्रत्ययान्तादिमब् वक्तव्य इति*। 'तेन निर्वृत्तम्' इत्येतस्मिन्नर्थे। पाकेन निर्वृत्तं पाकिममिति। एवं च त्र्यन्तादपि भावाभिधायिन इमपि कृते यस्येति

न्यासः

न हि त्रिरित्युक्ते विवक्षितार्थस्य प्रतीतिर्भवति। उप्त्रिममिति। 'वचिस्वपियजादीनां किति' इति संप्रसारणम्।

नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थमिति। केवलस्य त्रिप्रत्ययान्तस्य मप्प्रत्ययरहितस्य प्रयोगः स्वातन्त्र्यम्, तन्निवृत्त्यर्थं नित्यग्रहणम्। स्वातन्त्र्यनिवृत्त्यर्थे नित्यग्रहणे सति यो़ऽर्थः सम्पद्यते तं त्र्यन्त इत्यादिना दर्शयति। विषयान्तर इत्यादिना यदेवकारस्य व्यवच्छेद्यं तदाचष्टे। मप्प्रत्ययविषयार्थादन्यस्मिन्विषये यत्र प्रत्ययो न भवति तद्विषयान्तरम्। नित्यग्रहणं तन्निवृत्तिर्यथा स्यादित्येवमर्थं वेदितव्यम् ॥

## अपमित्ययाचिताभ्यां कक्कनौ ॥ २१ ॥

'निर्वृत्ते' इत्येव। अपमित्ययाचितशब्दाभ्यां यथासंख्यं कक्, कन्— इत्येतौ प्रत्ययौ भवतः 'निर्वृत्ते' इत्येतस्मिन्नर्थे। आपमित्यकम्। याचितकम्॥

## संसृष्टे ॥ २२ ॥

'तेन' इत्येव। तृतीयासमर्थात् 'संसृष्टे' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। संसृष्टम् = एकीभूतम्, अभिन्नमित्यर्थः। दध्ना संसृष्टं दाधिकम्। मारिचिकम्। शाङ्गवेरिकम्। पैप्पलिकम्॥

### पदमञ्जरी

लोपे च कृत्रिममित्यादि सिद्धं भवति, स्वरेऽपि नास्ति विशेषः, उदात्तनिवृत्ति-स्वरेणैवोदात्तत्वम्। सूत्रारम्भस्तु नित्यग्रहणेन स्वातन्त्र्यं निवर्तयिष्यामीत्येवमर्थो वेदितव्यः॥

*अपमित्ययाचिताभ्यां कक्कनौ* ॥ *अपमित्येति*। 'उदीचां माङो व्यतिहारे' इति क्त्वाप्रत्ययेऽपशब्देन समासे क्त्वो ल्यप्, 'मयतेरिदन्यतरस्याम्' इतीत्वम्, 'क्त्वातोसुन्कसुनः' इत्यव्ययसंज्ञा। तेन नात्र तृतीयासमर्थात्प्रत्ययः॥

*संसृष्टे* ॥ ननु यद्येन संसृष्टं तत्तेन संस्कृतं भवति; ततश्च संस्कृतमित्येव संसृष्टेऽपि प्रत्ययः सिद्धः? न सिध्यति; सत उत्कर्षाधानम् = संस्कारः, एकीभावस्तु = संसर्गः, न च यत्रासौ तत्रावश्यमुत्कर्षोऽस्ति, अशुचिद्रव्यसंसर्गे हि प्रत्युतापकर्ष एव भवति। तस्मात्संसृष्ट इति वक्तव्यम्। यद्यस्य निबन्धनमस्त्येतदेवास्तु, मा भूत्संस्कृतमित्येतत्? तदवश्यं कर्तव्यम्, इहापि यथा स्यात्—विद्यया

### न्यासः

अपमित्ययाचिताभ्यां कक्कनौ ॥ अपमित्येति। 'उदीचां माङो व्यतीहारे' इति क्त्वा, तस्य ल्यबादेशे कृते, अपमित्येति भवति। तस्य च 'क्त्वातोसुन्कसुनः' इत्यव्ययसंज्ञा। तेन तृतीयासमर्थविभक्त्यधिकारेऽप्यविभक्तिकादेवास्मात् प्रत्ययविधिः॥

संसृष्टे ॥ ननु च 'संस्कृतम्' इत्येव संसृष्टे प्रत्ययो भविष्यति, यत् पुनर्येन संसृष्टं तत्तेन संस्कृतं भवति? नैतत्; सतो ह्युत्कर्षाधानम् = संस्कारः, एकभावः = संसर्गः, न च तत्रोत्कर्षेण भवितव्यम्, स्वशुचिद्रव्यसंसर्गे स्वप्रकर्ष एव भवति, नोत्कर्षः। संसर्गमात्रे प्रत्यय इष्यते; तस्मात् संसृष्ट इति वक्तव्यमेतत्; एतदेव क्रियताम्; किं 'संस्कृतम्' इत्यनेन? असत्यपि संसर्गे यत्र संस्कृतमस्ति तत्रापि प्रत्यय इष्यते—वैद्यिकः, न विद्यया संसर्ग उपपद्यते; संसर्गो द्रव्ययोरेव भवति, यथा—दण्डपुरुषयोः।

## चूर्णादिनिः ॥ २३ ॥

चूर्णशब्दादिनिः प्रत्ययो भवति संसृष्टे । ठकोऽपवादः । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः । चूर्णिनो धानाः ॥

## लवणाल्लुक् ॥ २४ ॥

'संसृष्टे' इत्यनेनोत्पन्नस्य ठको लवणशब्दाल्लुग्भवति । लवणः सूपः । लवणं शाकम् । लवणा यवागूः ।

• द्रव्यवाची लवणशब्दो लुकं प्रयोजयति, न गुणवाची ॥

पदमञ्जरी

संस्कृतो वैद्यक इति, न ह्यत्र संसर्गोऽस्ति; मूर्त्तिधर्मत्वात् । किञ्च 'कुलत्थकोपधादण्' संस्कृत एव यथा स्यात्संसृष्टे मा भूदित्येवमर्थं संस्कृतमित्येतद्भवतीति वक्तव्यम् ॥

*चूर्णादिनिः* ॥ चूर्णेन ये संसृष्टास्तेषां चूर्णमस्तीति मत्वर्थीयेनैवेनिना सिद्धम् ? सत्यम् ; तद्रूपविवक्षायां सिद्धम् । संसर्गविवक्षायां तु ठक् प्राप्नोति । अनभिधानं तु दुर्ज्ञानम् ॥

*लवणाल्लुक्* ॥ *लवणद्रव्यवाचीत्यादि* । लवणशब्दोऽयमस्त्येव गुणवचनः– षण्णां रसानामन्यतमस्य वाचकः, अस्ति च द्रव्यवचनो यः सैन्धवादिषु वर्तते; तत्र यो गुणवचनः स न लुकं प्रयोजयति, मधुरादिशब्दवदभेदोपचारादेव द्रव्ये वृत्तिसिद्धेः । द्रव्यशब्दस्तु सोऽयमित्यभिसम्बन्धाद् द्रव्ये वर्तमानः । यद्यपि प्रष्ठी प्रचरी यष्टीः प्रवेशयेत्यादौ द्रव्यशब्दस्यापि क्वचिदभेदोपचारो दृष्टः, तथापि भेदविवक्षायां तत्स्थोऽपि दृश्यते—प्रष्ठस्येयं प्राष्ठी यष्टिमतः पुरुषानिति । तस्माद् द्रव्यवाच्येव लवणशब्दो लुकं प्रयोजयति, स च प्रयोजयत्येव ॥

न्यासः

मूर्तिमतस्तद्धर्मत्वात्, न तु विद्या मूर्तिमती । कुलत्थकोपधादणो विधानार्थं संस्कृतग्रहणं कर्तव्यम् । न हि संसृष्टमात्रे प्रत्यय इष्यते; किन्तु तत्कृतगुणाधाने ॥

चूर्णादिनिः ॥ ननु च चूर्णेन ये संसृष्टास्तेषां चूर्णमस्ति, तत्र मत्वर्थीयेनैवेनिना सिद्धमिति तदपार्थकमिदम् ? नैतत्; अस्तिविवक्षायां मत्वर्थीयेन सिद्धं स्यात्, संसृष्टविवक्षायां पुनर्न सिध्यति, तत्र हि ठक् स्यात् । ठको बाधनार्थत्वे कुतोऽस्यानर्थक्यम् ॥

लवणाल्लुक् ॥ द्रव्यवाचीत्यादि । लवणशब्दोऽयमस्त्येव गुणवचनो यो रसविशेषे वर्तते, रसस्य गुणत्वात् । अस्ति द्रव्यवचनः, यथा— पञ्च लवणानीति । तत्र यो गुणवचनः स लुकं न प्रयोजयति । गुणैर्हि यद्यपि द्रव्यं न संसृज्यते, तथापि गुणशब्दाः 'सोऽयम्' इत्यभेदेन सम्बन्धाद् द्रव्ये वर्तन्ते, यथा—शुक्लः पटः, मधुरं क्षारम्,

## मुद्गादण् ॥ २५ ॥

मुद्गशब्दादण् प्रत्ययो भवति 'संसृष्टे' इत्येतस्मिन्विषये । ठकोऽपवादः । मौद्ग ओदनः । मौद्गी यवागूः ॥

## व्यञ्जनैरुपसिक्ते ॥ २६ ॥

'तेन' इत्येव । व्यञ्जनवाचिभ्यः प्रातिपदिकेभ्यस्तृतीयासमर्थेभ्यः 'उपसिक्ते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दध्ना उपसिक्तं दाधिकम् । सौपिकम् । खारिकम् ।

व्यञ्जनैरिति किम् ? उदकेनोपसिक्त ओदनः ॥

## ओजःसहोम्भसा वर्तते ॥ २७ ॥

ओजस्, सहस्, अम्भस् – इत्येतेभ्यस्तृतीयासमर्थेभ्यः 'वर्तते'

पदमञ्जरी

व्यञ्जनैरुपसिक्ते ॥ ओदनादिषु रसो येन व्यज्यते तद्व्यञ्जनम् । बहुवचननिर्देशः स्वरूपविधिनिरासार्थः । उपसिक्तः = सेचनेन मृदूकृतः । इह यद्येनोपसिक्तं तत्तेन संसृष्टं भवति, तत्र संसृष्ट इत्येव सिद्धे नियमार्थं वचनम्—व्यञ्जनेभ्य उपसिक्त एव संसृष्टे यथा स्यात्संसृष्टमात्रे मा भूत्, दध्ना संसृष्टा स्थालीति ॥

न्यासः

अम्लं दधीति; तथा लवणशब्दोऽपि वर्तिष्यते, ततः किं लुका ? अवश्यं तदेवं विज्ञेयम्, अन्यथा हि मधुरादिभ्योऽपि लुग वक्तव्यः स्यात् । द्रव्यशब्दास्त्वन्यत्र सोऽयमित्यभेदसमर्थनान्न वर्तन्ते । तस्माद् द्रव्यवाची लवणशब्दो लुकं प्रयोजयति ॥

मुद्गादण् ॥ व्यञ्जनैरुपसिक्ते ॥ व्यञ्जनैरिति । बहुवचननिर्देशः स्वरूपविधिनिरासार्थः । तेनेत्यधिकारादेव तृतीयायां समर्थविभक्तौ वर्तमानायां तृतीयानुवादः सुखप्रतिपत्तये । 'संसृष्टे' इति वर्तमान उपसिक्तस्यैतत् प्रयोजनम्—ओदनादौ यथा स्यात् इह मा भूत्—सूपेन संसृष्टा स्थालीति, उदकेनोपसिक्त ओदन इति । उदकं व्यञ्जनं न भवति; व्यञ्जनशब्दस्य सूपादावेव रूढत्वात् । ननु यद् व्यञ्जनैरुपसिक्तं तत्तैः संस्कृतं भवति, तत्र संस्कृतमेव सिद्धम् ? न सिध्यति; सतो ह्युत्कर्षाधानं संस्कारः, न चासौ सर्वत्रोपसिक्तः सम्भवति । तथा हि—व्यगते स्वादुरसैः प्रतिभावापन्नैरुपसिक्तेष्वोदनादिष्वपकर्ष एव भवति, नोत्कर्षः । उपसिक्तमात्रेऽपि चेष्यते । तस्मात् प्राक् तस्य पृथगारम्भः ॥

इत्यर्थे ठक्प्रत्ययो भवति। ओजसा वर्त्तते औजसिकः शूरः। साहसिकश्चौरः। आम्भसिको मत्स्यः॥

## तत्प्रत्यनुपूर्वमीपलोमकूलम्॥ २८॥

'तत्' इति द्वितीया समर्थविभक्तिः। 'प्रति' 'अनु'– इत्येवम्पूर्वेभ्य ईप, लोम, कूल-शब्देभ्यो द्वितीयासमर्थेभ्यः 'वर्त्तते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति।

ननु च वृतिरकर्मकः, तस्य कथं कर्मणा सम्बन्धः? क्रियाविशेषणमकर्मकाणामपि कर्म भवति।

प्रतीपं वर्त्तते प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। आनु-

### पदमञ्जरी

*तत्प्रत्यनुपूर्वमीपलोमकूलम्॥ क्रियाविशेषणमित्यादि*। आख्यातं हि धात्वर्थस्य कर्तव्यतामाचष्टे—वर्तते = वर्तनं करोति, सुप्यते = स्वापः क्रियते, शोभनमोदनं पच्यते = ओदनकर्मकः पाकः शोभनः क्रियते इति। पचिधात्वर्थः कर्तव्य एव सम्बध्यमानः कर्म सम्पद्यते, तस्य यत्समानाधिकरणं विशेषणं तदपि कर्मैव भवति।

*प्रातीपिकः, आन्वीपिक इति*। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीत्वम्। व्युत्पत्तिमात्रं चैतत्, प्रतिकूलानुकूलपर्यायौ त्वेतौ। 'ऊदनोर्देशे' इत्यूत्वमत्र न भवति; अदेशत्वात्, देशत्वे क्रियाविशेषणत्वासम्भवात्। सूत्रे ईप्शब्दस्य

### न्यासः

ओजःसहोम्भसा वर्तते॥ वर्तत इति। चेष्टत इत्यर्थः। तत्प्रक्रियाविशेषणमित्यादि। अनेन हि वृत्त्यर्थस्य कर्तव्यतामाचष्टे। वर्तत इति वर्तमानं करोत्यर्थः। स हि वृत्त्यर्थः कर्तव्यतया सम्बध्यमानः कर्म सम्पद्यते। तत्सामानाधिकरण्याच्च तद्विशेषणमपि कर्तव्यतया युज्यते। तदपि कर्म च प्रसक्तम्। क्रियाविशेषणस्यैवाकर्मकेऽपि धातौ कर्मत्वमाख्यातम्। तदित्यनेन द्वितीयासमर्थविभक्तौ लब्धायामपि द्वितीयान्ता इह प्रकृतयो निर्दिष्टा विस्पष्टार्थम्; अन्यथा प्रत्ययविधौ पञ्चमी न्याय्येति तदन्ता एव निर्दिश्येरन्॥

तत्प्रत्यनुपूर्वमीपलोमकूलम्॥ प्रातीपिक इति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्तः। एवञ्च 'द्व्यन्तरुपसर्गेभ्योऽप

लोमिकः । प्रातिकूलिकः । आनुकूलिकः ॥

परिमुखं च ॥ २९ ॥

परिमुखशब्दाद् द्वितीयासमर्थाद् 'वर्त्तते' इत्यस्मिन्नर्थे ठक्प्रत्ययो भवति । परिमुखं वर्त्तते पारिमुखिकः ।

चकारोऽनुक्तसमुच्चयार्थः । पारिपार्श्विकः ।

प्रयच्छति गर्ह्यम् ॥ ३० ॥

'तत्' इति द्वितीयासमर्थात् 'प्रयच्छति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति, यद् द्वितीयासमर्थं गर्ह्यं चेत्तद्भवति । द्विगुणार्थम् = द्विगुणम्,

पदमञ्जरी

निर्देशात् । *प्रातिलोमिकः, आनुलोमिक इति* । पूर्ववद्बहुव्रीहिः, 'अच् प्रत्यन्वव-पूर्वात्' इत्यच् समासान्तः । अत्रापि व्युत्पत्तिमात्रम्, अर्थस्तु पूर्वोक्त एव । *प्राति-कूलिक इति* । पूर्ववद्बहुव्रीहिः । अत्रापि कूलार्थो नास्ति । प्रतिसरणं चैतयोरर्थः ॥

*परिमुखं च* ॥ *पारिमुखिक इति* । परिरिह वर्तते, तस्य च 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी, 'अपपरिबहिरञ्चवः' इत्यव्ययीभावः, अनेन ठक् । स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः । सर्वतो भावे वा परिशब्दः, परितो मुखम्, प्रादिसमासः, यतो यतः स्वामिनो मुखं ततस्ततो वर्तत इत्यर्थः । एवं पारिपार्श्विकः ॥

*प्रयच्छति गर्ह्यम्* ॥ *द्विगुणार्थं द्विगुणमिति* । द्वैगुणिक उत्तमर्ण उच्यते, न

न्यासः

ईत्' इतीत्वम् । अपरत्र तु 'ऊदनोर्देशे' इति देशादन्यत्रोत्वमेव, ततष्ठक् । प्रातिलोमिकम्, आनुलोमिकमिति । प्रतिगतानि लोमान्यस्य, अनुगतानि लोमान्यस्येति बहुव्रीहिः 'अच् प्रत्यनु' इत्यादिनाऽच् समासान्तः ॥

परिमुखञ्च ॥ 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्यीभावः, ततष्ठक् । स्वामिमुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः । सर्वतोभावे वा परिः, तस्य 'कुगतिप्रादयः' इति प्रादिसमासः । यतो यतः स्वामिनो मुखं वर्तते ततस्ततो यः सेवको वर्तते स पारिमुखिकः ॥

प्रयच्छति गर्ह्यम् ॥ द्विगुणमिति । तादर्थ्यात् ताच्छब्द्यं दर्शयति । अद्विगुणार्थे वस्तुनि द्विगुणशब्दं वर्तयित्वा तत्र प्रत्ययं कुर्वतः कोऽभिप्रायः ? एवं मन्यते—द्वैगुणिक इति उत्तमर्ण उच्यते, न चासौ द्विगुणं प्रयच्छति, किं तर्हि ? स्कन्दयित्वा द्विगुणं गृह्णाति; अन्यथा हि विपर्यये सति प्रशस्यमेव स्यात्, न तु गर्ह्यम् । यदैकस्मिन्नर्थे तादर्थ्याद् द्विगुणशब्दो वर्तते तदैकमेव द्विगुणार्थं प्रयच्छतो द्विगुणमेव भवतीति गर्ह्यमिति । गर्ह्य

तादर्थ्यात्ताच्छब्द्यम्। द्विगुणं प्रयच्छति द्वैगुणिकः। त्रैगुणिकः।

* वृद्धेर्वृधुषिभावो वक्तव्यः *। वार्धुषिकः। प्रकृत्यन्तरं वा वृद्धिपर्यायो वृधुषिशब्दः।

गर्ह्यमिति किम्? द्विगुणं प्रयच्छत्यधमर्णः॥

कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ ३१ ॥

'प्रयच्छति गर्ह्यम्' इत्येव। कुसीदम् = वृद्धिः, तदर्थं द्रव्यं कुसीदम्। एकादशार्था दश दशैकादशशब्देनोच्यन्ते। कुसीद, दशैकादशशब्दाभ्यां यथासंख्यं ष्ठन्, ष्ठच् – इत्येतौ प्रत्ययौ भवतः 'प्रयच्छति गर्ह्यम्' इत्येतस्मिन्विषये। ठकोऽपवादौ। कुसीदं प्रयच्छति कुसीदिकः, कुसीदिकी। दशैकादशिकः, दशैकादशिकी॥

पदमञ्जरी

चासौ। द्विगुणं प्रयच्छति, किं तर्ह्येकगुणं दत्त्वा द्विगुणं गृह्णाति, अत एव तद्गर्ह्यं भवतीति। तस्माद् द्विगुणार्थे द्विगुणशब्दो वर्तयितव्यः।

*वार्धुषिक इति*। वृद्ध्यर्थे धने वृद्धिशब्दः। *प्रकृत्यन्तरमेवेति*। एतच्च वार्धुषिक इत्येतद्वृत्तिविषयमेव। नियतविषया अपि हि शब्दा भवन्ति, वृद्धिशब्दादनभिधानान्नैव भविष्यति, तेन वार्धिक इत्यनिष्टप्रसङ्गो नोद्भावनीयः। अथ कथम् 'वार्धुदासमकम्पत ववान्यस्य च वार्धुषेः' इति? स्वच्छन्दवाच ऋषयः॥

*कुसीददशैकादशात् ष्ठन्ष्ठचौ*॥ *तदर्थं द्रव्यं कुसीदमिति*। अत्रापि कुसीदिक इत्युत्तमर्णस्याभिधानमिष्यते, न चोत्तमर्णः कुसीदं प्रयच्छति, किं तर्हि? अधमर्णः, न च तस्य वृद्धिप्रदानं गर्ह्यम्, तस्मात्तादर्थ्यात्ताच्छब्द्यमिति भावः। एकादशार्थं

न्यासः

पुनरिह प्रतिषिद्धस्य शास्त्रेण दीयमानस्य प्रत्यवायहेतुत्वाद्वेदितव्या। प्रकृत्यन्तरमित्यादिनोपसंख्यानं प्रत्याचष्टे। तत्रापि तादर्थ्याद् वृद्ध्यर्थं यद्दीयते तद् वृधुषिशब्देनोच्यते। ननु च तत्प्रत्याख्याने वृद्धिशब्दात् प्रत्यये सति वार्धिक इत्यपि स्यात्? नैष दोषः; अन्यविकल्पायेन हि वृद्धिशब्देन वाक्यमेव भवति। वृधुषिशब्देन वाक्यं वृत्तिश्च॥

कुसीददशैकादशात् ष्ठन्ष्ठचौ॥ तत्रापि कुसीदार्थे वस्तुनि दशैकादशार्थेषु च दशसु दशैकादशशब्दं वर्तयित्वा ततः प्रत्ययः। सर्वतः पूर्ववदभिप्रायो वेदितव्यः। दश चैकादश चेति समानाधिकरणसमासः। ननु च भिन्नविषययोः सामानाधिकरण्यं नोपपद्यते? दशैकादशशब्दोऽप्येकादशार्थेषु दशस्वेवोपचाराद् वर्तत इत्यदोषः। यो

## उञ्छति ॥ ३२ ॥

'तत्' इति द्वितीयासमर्थात् 'उञ्छति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । बदराण्युञ्छति बादरिकः । श्यामाकिकः । भूमौ[1] पतितस्यैकैकस्य कणस्योपादानम् = उञ्छः । कणानुञ्छति काणिकः[1] ॥

## रक्षति ॥ ३३ ॥

'तत्' इति द्वितीयासमर्थाद् 'रक्षति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । समाजं रक्षति सामाजिकः । सान्निवेशिकः ॥

## शब्ददर्दुरं करोति ॥ ३४ ॥

'तत्' इति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां 'करोति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । शब्दं करोति शाब्दिको वैयाकरणः । दार्दुरिकः कुम्भकारः ॥

### पदमञ्जरी

दश दशैकादशशब्देनोच्यन्त इति तत्रैकादशशब्दस्यापि तदर्थेषु दशस्वेव वृत्तेः सामानाधिकरण्ये सति विशेषणसमासः, 'संख्याया अल्पीयस्याः' इति दशशब्दस्य पूर्वनिपातः । दशैकादशादिति निर्देशादकारः समासान्तः । एवं वाक्यमप्यकारान्तेनैव भवति—दशैकादशान्प्रयच्छतीति ॥

*रक्षति ॥ सामाजिक इति* । समाजः = समूहः, समजन्त्यस्मिन्निति कृत्वा, एवं सन्निवेशः ॥

*शब्ददर्दुरं करोति ॥ शब्दं करोतीति* । करोतिरिह ज्ञाने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः । एतच्चाभिधानस्वाभाव्याल्लभ्यते, इह न भवति—शब्दं करोति खर इति । पात्रविशेषवाची दर्दुरशब्दः । अनुकरणशब्द इत्यन्ये ॥

### न्यासः

दश प्रयच्छत्येकादश एव स्युरिति स दशैकादेश इत्युच्यते । दशैकादशादिति निर्देशादकारान्तत्वं निपात्यते, किमर्थम् ? वाक्येऽप्यकारान्तत्वश्रवणार्थं दशैकादशान् प्रयच्छतीति ॥

उञ्छति ॥ उञ्छतीति उद्धुनोतीत्यर्थः ॥

रक्षति ॥ शब्ददर्दुरं करोति ॥ तदित्यनेनैव द्वितीयासमर्थविभक्तौ लब्धायां शब्ददर्दुरमिति द्वितीयानिर्देशो लौकिकवाक्यप्रदर्शनार्थः । शब्ददर्दुरं करोतीत्येतद्

---

१-१. पाठोऽयं बहुषु पुस्तकेषु नास्ति ।

## पक्षिमत्स्यमृगान्हन्ति ॥ ३५ ॥

'तत्' इत्येव। पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो 'हन्ति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। स्वरूपस्य पर्यायाणां च तद्विशेषाणां च ग्रहणमिष्यते। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। तैत्तिरिकः। मत्स्य – मात्स्यिकः, मैनिकः, शाफरिकः, शाकुलिकः। मृग – मार्गिकः, हारिणिकः, सौकरिकः, सारङ्गिकः ॥

पदमञ्जरी.

*पक्षिमत्स्यमृगान्हन्ति* ॥ *स्वरूपस्य तद्विशेषाणां पर्यायाणां च ग्रहणमिष्यत इति*। अत्र हेतुः 'स्वं रूपम्' इत्यत्रैवोक्तः। *मात्स्यिक इति*। 'सूर्यतिष्य' इति लोपो न भवति; मत्स्यस्य ङ्यामिति परिगणनात्। *हारिणिकः, सौकरिक इति*। अत्र मृगपर्यायस्योदाहरणं किमिति न प्रदर्शितम्, यथा पूर्वयोः द्वावपि ह्येतस्माद्विशेषौ, आरण्याश्चतुष्पादो मृगाः उच्यन्ते, हरिणपर्यायोऽपि मृगशब्दोऽस्ति, तदपेक्षया *हारिणिक इति* पर्यायोदाहरणम् ॥

न्यासः

व्यावहारिकं वाक्यम्। अस्य प्रतिग्रहो यत्र लोके व्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यर्थं सूचयति, तेन शब्दं करोति खर इत्यत्र न भवति। लोके स शाब्दिक इत्युच्यते यः शब्दं वेत्ति; वैयाकरण एव शब्दं वेत्ति, तेन तत्रैव प्रत्ययो भवति, न खरे। असौ वैयाकरणः प्रत्ययप्रकृत्यादिना सर्वं शब्दं जानाति ॥

पक्षिमत्स्यमृगान् हन्ति ॥ स्वरूपस्य पर्यायाणाञ्च तद्विशेषणानाञ्च ग्रहणमिष्यत इति। कथं पुनरिष्यमाणमपि पर्यायादीनां ग्रहणं लभ्यते? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्देशे स्वरूपस्य ग्रहणं भवति, नार्थप्रधान इति प्रतिपादिमेतत् प्राक्। यदि तर्हि पर्यायाणामपि ग्रहणम्, अजिह्मान् हन्त्यनिमिषान् हन्तीत्यत्रापि प्राप्नोति? नैष दोषः; इह द्वितीयासमर्थविभक्तौ लब्धायां पुनर्द्वितीयासमर्थविभक्तिनिर्देशो लौकिकवाक्यप्रदर्शनार्थः। अस्य परिग्रहः—यत्र लौकिकवाक्यव्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यस्यार्थस्य सूचनार्थम्, तेनाजिह्मान् हन्तीत्यादौ प्रत्ययो न भवति। अजिह्मान् हन्त्यनिमिषान् हन्तीत्यस्यार्थस्य विवक्षायामाजिह्मिकः, आनिमिषिक इति लोके न व्यवहारोऽस्ति। तत्र पक्षिषु पाक्षिक इति स्वरूपस्योदाहरणम्। शाकुनिक इति पर्यायस्य। मायूरिकः, तैत्तिरिक इति विशेषस्य। मत्स्येषु मात्स्यिक इति स्वरूपस्य। मैनिक इति पर्यायस्य। शाफरिकः शाकुलिक इति विशेषस्य। मृगेषु मार्गिक इति स्वरूपस्य। हारिणिक इति पर्यायस्य। सौकरिकः, सारङ्गिक इति विशेषस्य ॥

उञ्छति ॥ ३२ ॥

'तत्' इति द्वितीयासमर्थात् 'उञ्छति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । बदराण्युञ्छति बादरिकः । श्यामाकिकः । भूमौ[1] पतितस्यैकैकस्य कणस्योपादानम् = उञ्छः । कणानुञ्छति काणिकः[1] ॥

रक्षति ॥ ३३ ॥

'तत्' इति द्वितीयासमर्थाद् 'रक्षति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवदि । समाजं रक्षति सामाजिकः । सान्निवेशिकः ॥

शब्ददर्दुरं करोति ॥ ३४ ॥

'तत्' इति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां 'करोति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । शब्दं करोति शाब्दिको वैयाकरणः । दार्दुरिकः कुम्भकारः ॥

पदमञ्जरी

दश दशैकादशशब्देनोच्यन्त इति तत्रैकादशशब्दस्यापि तदर्थेषु दशस्वेव वृत्तेः सामानाधिकरण्ये सति विशेषणसमासः, 'संख्याया अल्पीयस्याः' इति दशशब्दस्य पूर्वनिपातः । दशैकादशादिति निर्देशादकारः समासान्तः । एवं वाक्यमप्यकारान्तेनैव भवति—दशैकादशान्प्रयच्छतीति ॥

*रक्षति ॥ सामाजिक इति* । समाजः = समूहः, समजत्यस्मिन्निति कृत्वा, एवं सन्निवेशः ॥

*शब्ददर्दुरं करोति ॥ शब्दं करोतीति* । करोतिरिह ज्ञाने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः । एतच्चाभिधानस्वाभाव्याल्लभ्यते, इह न भवति—शब्दं करोति खर इति । पात्रविशेषवाची दर्दुरशब्दः । अनुकरणशब्द इत्यन्ये ॥

न्यासः

दश प्रयच्छत्येकादश एव स्युरिति स दशैकादेश इत्युच्यते । दशैकादशादिति निर्देशादकारान्तत्वं निपात्यते, किमर्थम् ? वाक्येऽप्यकारान्तत्वश्रवणार्थं दशैकादशान् प्रयच्छतीति ॥

उञ्छति ॥ उञ्छतीति उद्धुनोतीत्यर्थः ॥

रक्षति ॥ शब्ददर्दुरं करोति ॥ तदित्यनेनैव द्वितीयासमर्थविभक्तौ लब्धायां शब्ददर्दुरमिति द्वितीयानिर्देशो लौकिकवाक्यप्रदर्शनार्थः । शब्ददर्दुरं करोतीत्येतद्

---

१-१. पाठोऽयं बहुषु पुस्तकेषु नास्ति ।

## पक्षिमत्स्यमृगान्हन्ति ॥ ३५ ॥

'तत्' इत्येव। पक्ष्यादिभ्यो द्वितोयासमर्थेभ्यो 'हन्ति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। स्वरूपस्य पर्यायाणां च तद्विशेषाणां च ग्रहणमिष्यते। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। तैत्तिरिकः। मत्स्य – मात्स्यिकः, मैनिकः, शाफरिकः, शाकुलिकः। मृग – मार्गिकः, हारिणिकः, सौकरिकः, सारङ्गिकः ॥

पदमञ्जरी.

*पक्षिमत्स्यमृगान्हन्ति* ॥ *स्वरूपस्य तद्विशेषाणां पर्यायाणां च ग्रहणमिष्यत इति*। अत्र हेतुः 'स्वं रूपम्' इत्यत्रैवोक्तः। *मात्स्यिक इति*। 'सूर्यतिष्य' इति लोपो न भवति; मत्स्यस्य ङ्यामिति परिगणनात्। *हारिणिकः, सौकरिक इति*। अत्र मृगपर्यायस्योदाहरणं किमिति न प्रदर्शितम्, यथा पूर्वयोः द्वावपि ह्येतस्माद्विशेषौ, आरण्याश्चतुष्पादो मृगाः उच्यन्ते, हरिणपर्यायोऽपि मृगशब्दोऽस्ति, तदपेक्षया *हारिणिक इति* पर्यायोदाहरणम् ॥

न्यासः

व्यावहारिकं वाक्यम्। अस्य प्रतिग्रहो यत्र लोके व्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यर्थं सूचयति, तेन शब्दं करोति खर इत्यत्र न भवति। लोके स शाब्दिक इत्युच्यते यः शब्दं वेत्ति; वैयाकरण एव शब्दं वेत्ति, तेन तत्रैव प्रत्ययो भवति, न खरे। असौ वैयाकरणः प्रत्ययप्रकृत्यादिना सर्वं शब्दं जानाति ॥

पक्षिमत्स्यमृगान् हन्ति ॥ स्वरूपस्य पर्यायाणाञ्च तद्विशेषणानाञ्च ग्रहणमिष्यत इति। कथं पुनरिष्यमाणमपि पर्यायादीनां ग्रहणं लभ्यते ? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्देशे स्वरूपस्य ग्रहणं भवति, नार्थप्रधान इति प्रतिपादितमेतत् प्राक्। यदि तर्हि पर्यायाणामपि ग्रहणम्, अजिह्मान् हन्त्यनिमिषान् हन्तीत्यत्रापि प्राप्नोति ? नैष दोषः; इह द्वितीयासमर्थविभक्तौ लब्धायां पुनर्द्वितीयासमर्थविभक्तिनिर्देशो लौकिकवाक्यप्रदर्शनार्थः। अस्य परिग्रहः—यत्र लौकिकवाक्यव्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यस्यार्थस्य सूचनार्थम्, तेनाजिह्मान् हन्तीत्यादौ प्रत्ययो न भवति। अजिह्मान् हन्त्यनिमिषान् हन्तीत्यस्यार्थस्य विवक्षायामाजिह्मिकः, आनिमिषिक इति लोके न व्यवहारोऽस्ति। तत्र पक्षिषु पाक्षिक इति स्वरूपस्योदाहरणम्। शाकुनिक इति पर्यायस्य। मायूरिकः, तैत्तिरिक इति विशेषस्य। मत्स्येषु मात्स्यिक इति स्वरूपस्य। मैनिक इति पर्यायस्य। शाफरिकः शाकुलिक इति विशेषस्य। मृगेषु मार्गिक इति स्वरूपस्य। हारिणिक इति पर्यायस्य। सौकरिकः, सारङ्गिक इति विशेषस्य ॥

काशि० ४ : ४९

## उञ्छति ॥ ३२ ॥

'तत्' इति द्वितीयासमर्थात् 'उञ्छति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । बदराण्युञ्छति बादरिकः । श्यामाकिकः । भूमौ[1] पतितस्यैकैकस्य कणस्योपादानम् = उञ्छः । कणानुञ्छति काणिकः[1] ॥

## रक्षति ॥ ३३ ॥

'तत्' इति द्वितीयासमर्थाद् 'रक्षति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवदि । समाजं रक्षति सामाजिकः । सान्निवेशिकः ॥

## शब्ददर्दुरं करोति ॥ ३४ ॥

'तत्' इति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां 'करोति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । शब्दं करोति शाब्दिको वैयाकरणः । दार्दुरिकः कुम्भकारः ॥

### पदमञ्जरी

दश दशैकादशशब्देनोच्यन्त इति तत्रैकादशशब्दस्यापि तदर्थेषु दशस्वेव वृत्तेः सामानाधिकरण्ये सति विशेषणसमासः, 'संख्याया अल्पीयस्याः' इति दशशब्दस्य पूर्वनिपातः । दशैकादशादिति निर्देशादकारः समासान्तः । एवं वाक्यमप्यकारान्तेनैव भवति—दशैकादशान्प्रयच्छतीति ॥

*रक्षति ॥ सामाजिक इति ।* समाजः = समूहः, समजत्यस्मिन्निति कृत्वा, एवं सन्निवेशः ॥

*शब्ददर्दुरं करोति ॥ शब्दं करोतीति ।* करोतिरिह ज्ञाने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः । एतच्चाभिधानस्वाभाव्याल्लभ्यते, इह न भवति—शब्दं करोति खर इति । पात्रविशेषवाची दर्दुरशब्दः । अनुकरणशब्द इत्यन्ये ॥

### न्यासः

दश प्रयच्छत्येकादश एव स्युरिति स दशैकादेश इत्युच्यते । दशैकादशादिति निर्देशादकारान्तत्वं निपात्यते, किमर्थम् ? वाक्येऽप्यकारान्तत्वश्रवणार्थं दशैकादशान् प्रयच्छतीति ॥

उञ्छति ॥ उञ्छतीति उद्धुनोतीत्यर्थः ॥

रक्षति ॥ शब्ददर्दुरं करोति ॥ तदित्यनेनैव द्वितीयासमर्थविभक्तौ लब्धायां शब्ददर्दुरमिति द्वितीयानिर्देशो लौकिकवाक्यप्रदर्शनार्थः । शब्ददर्दुरं करोतीत्येतद्

---

१-१. पाठोऽयं बहुषु पुस्तकेषु नास्ति ।

## पक्षिमत्स्यमृगान्हन्ति ॥ ३५ ॥

'तत्' इत्येव। पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो 'हन्ति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। स्वरूपस्य पर्यायाणां च तद्विशेषाणां च ग्रहणमिष्यते। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। तैत्तिरिकः। मत्स्य – मात्स्यिकः, मैनिकः, शाफरिकः, शाकुलिकः। मृग – मार्गिकः, हारिणिकः, सौकरिकः, सारङ्गिकः ॥

पदमञ्जरी.

*पक्षिमत्स्यमृगान्हन्ति* ॥ *स्वरूपस्य तद्विशेषाणां पर्यायाणां च ग्रहणमिष्यत इति*। अत्र हेतुः 'स्वं रूपम्' इत्यत्रैवोक्तः। *मात्स्यिक इति*। 'सूर्यतिष्य' इति लोपो न भवति; मत्स्यस्य ङ्यामिति परिगणनात्। *हारिणिकः, सौकरिक इति*। अत्र मृगपर्यायस्योदाहरणं किमिति न प्रदर्शितम्, यथा पूर्वयोः द्वावपि ह्येतस्माद्विशेषौ, आरण्याश्चतुष्पादो मृगाः उच्यन्ते, हरिणपर्यायोऽपि मृगशब्दोऽस्ति, तदपेक्षया *हारिणिक इति* पर्यायोदाहरणम् ॥

न्यासः

व्यावहारिकं वाक्यम्। अस्य प्रतिग्रहो यत्र लोके व्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यर्थं सूचयति, तेन शब्दं करोति खर इत्यत्र न भवति। लोके स शाब्दिक इत्युच्यते यः शब्दं वेत्ति; वैयाकरण एव शब्दं वेत्ति, तेन तत्रैव प्रत्ययो भवति, न खरे। असौ वैयाकरणः प्रत्ययप्रकृत्यादिना सर्वं शब्दं जानाति ॥

पक्षिमत्स्यमृगान् हन्ति ॥ स्वरूपस्य पर्यायाणाञ्च तद्विशेषणानाञ्च ग्रहणमिष्यत इति। कथं पुनरिष्यमाणमपि पर्यायादीनां ग्रहणं लभ्यते? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्देशे स्वरूपस्य ग्रहणं भवति, नार्थप्रधान इति प्रतिपादितमेतत् प्राक्। यदि तर्हि पर्यायाणामपि ग्रहणम्, अजिह्मान् हन्त्यनिमिषान् हन्तीत्यत्रापि प्राप्नोति? नैष दोषः; इह द्वितीयासमर्थविभक्तौ लब्धायां पुनर्द्वितीयासमर्थविभक्तिनिर्देशो लौकिकवाक्यप्रदर्शनार्थः। अस्य परिग्रहः—यत्र लौकिकवाक्यव्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यस्यार्थस्य सूचनार्थम्, तेनाजिह्मान् हन्तीत्यादौ प्रत्ययो न भवति। अजिह्मान् हन्त्यनिमिषान् हन्तीत्यस्यार्थस्य विवक्षायामाजिह्मिकः, आनिमिषिक इति लोके न व्यवहारोऽस्ति। तत्र पक्षिषु पाक्षिक इति स्वरूपस्योदाहरणम्। शाकुनिक इति पर्यायस्य। मायूरिकः, तैत्तिरिक इति विशेषस्य। मत्स्येषु मात्स्यिक इति स्वरूपस्य। मैनिक इति पर्यायस्य। शाफरिकः शाकुलिक इति विशेषस्य। मृगेषु मार्गिक इति स्वरूपस्य। हारिणिक इति पर्यायस्य। सौकरिकः, सारङ्गिक इति विशेषस्य ॥

काशि० 3 : ४९

## परिपन्थं च तिष्ठति ॥ ३६ ॥

परिपन्थशब्दात्तदिति द्वितीयासमर्थात् 'तिष्ठति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। परिपन्थं तिष्ठति पारिपन्थिकश्चौरः।

चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति। परिपन्थं हन्ति पारिपन्थिकः।

समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थम्, परिपथशब्दपर्यायः परिपन्थशब्दोऽस्तीति ज्ञापयति, स विषयान्तरेऽपि प्रयोक्तव्यः ॥

पदमञ्जरी

*परिपन्थं च तिष्ठति* ॥ *तदिति द्वितीयासमर्थादिति*। परिपन्थशब्दः परिमुखशब्दवदव्ययीभावः, तत्पुरुषो वा। तत्राप्यव्ययीभावपक्षे क्रियाविशेषणात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वम्; तत्पुरुषे तु परितः पन्थाः परिपन्थ इति 'कालभावाध्वगन्तव्याः' इति वचनात्कर्म, तदित्यधिकारसामर्थ्यादित्यन्ये। *पारिपन्थिकश्चोर इति*। यः पन्थानं वर्जयित्वा तिष्ठति यो वा पन्थानं व्याप्य तिष्ठति स एवमुच्यते।

*लौकिकवाक्यप्रदर्शनार्थमिति*। परिपन्थं तिष्ठतीत्येतल्लौकिकवाक्यं तस्य प्रदर्शनार्थं द्वितीयोच्चारणम्। अथैवमर्थे द्वितीयोच्चारणे किं सिद्धं भवति? इत्याह—*परिपथपर्याय इत्यादि*। किमेतस्य ज्ञापने प्रयोजनम्? इत्याह—*स विषयान्तरेऽपीति*।

न्यासः

परिपन्थञ्च तिष्ठति ॥ यथा परिमुखञ्चेति परिमुखशब्दस्याव्ययीभावत्वं तत्पुरुषत्वञ्च, तथेहापि परिपन्थशब्दस्य तद्द्वयं वेदितव्यम्। तदिति द्वितीयासमर्थादिति। ननु च तिष्ठतिरयमकर्मकः, तत् कथं द्वितीयया सह सम्बन्धः? नैष दोषः; अकर्मणामपि हि कालभावाध्वनां कर्मसंज्ञां प्रतिपद्यन्ते। तथा चोक्तम्—'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति। पारपन्थिकश्चौर इत्यव्ययीभावः। चौरो यः पन्थानं वर्जयित्वा तिष्ठति स पारिपन्थिकशब्देनोच्यते। तत्पुरुषपक्षे तु यश्चौरः सर्वान् पथो व्याप्य तिष्ठति स पारिपन्थिक उच्यते।

चकार इत्यादि। तिष्ठति चेत्यत्र प्रत्ययार्थसमनन्तरमेव चकारो द्रष्टव्यः, तेन समानजातीयस्यैव प्रत्ययस्यार्थस्य समुच्चयं करोति। अथ प्रकृतेरेव समुच्चयः कस्मान्न विज्ञायते? कर्मत्वानुपपत्तेः। तत्र हि द्वितीया समर्थविभक्तिरनुवर्तते, तिष्ठतेश्चाकर्मकत्वात् प्रकृताया मत्स्यादेः प्रकृतेः कर्मभावो नोपपद्यते। कालभावाध्वनामेव ह्यकर्मकाणां कर्मसंज्ञेष्यते, न मत्स्यादीनाम्।

## माथोत्तरपदपदव्यनुपदं धावति ॥ ३७ ॥

माथशब्दोत्तरपदात्प्रातिपदिकात् पदवी, अनुपद – इत्येताभ्यां च 'धावति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दण्डमाथं धावति दाण्डमाथिकः । शौल्कमाथिकः । पादविकः । आनुपदिकः । माथशब्दः पथिन्पर्यायः ॥

## आक्रन्दाट्ठञ्च ॥ ३८ ॥

आक्रन्दन्त्येतस्मिन्नित्याक्रन्दः = देशः, अथ वा – आक्रन्द्यत इत्याक्रन्दः – आर्त्तायनमुच्यते; विशेषाभावाद् द्वयोरपि ग्रहणम् । आक्रन्दशब्दात्तदिति द्वितीयासमर्थात् 'धावति' इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति, चकाराट्ठक्च । स्वरे विशेषः । आक्रन्दं धावति आक्रन्दिकः, आक्रन्दिकी ॥

पदमञ्जरी

असति तु ज्ञापने प्रत्ययसन्नियोगेन परिपन्थशब्दस्य निपातनं विज्ञायेत, ततश्च ततोऽन्यत्र प्रयोगो न स्यात् ॥

*माथोत्तरपदपदव्यनुपदं धावति* ॥ *माथशब्दः पथिपर्याय इति* । मथ्यते प्रशाद्यते गन्तृभिरिति कृत्वा । दण्डाकारो मथो दण्डमाथः ॥

*आक्रन्दाट्ठञ्च* ॥ *आक्रन्दो देश इति* । दुःखितानां रोदनस्यायनमार्त्तायनम्-

न्यासः

लौकिकवाक्यप्रदर्शनार्थं तदेतद् द्वितीयोच्चारणं करोतीत्याह—परिपथपर्याय इति । किमेतस्य ज्ञापने प्रयोजनमित्याह—स विषयान्तर इत्यादि । असति ह्यस्मिन् ज्ञापने ठक्प्रत्ययसन्नियोगेन प्रकृतिर्निर्दिश्यमाना प्रत्ययाभावेन प्रसज्यते । ज्ञापने तु सति यत्रापि प्रत्ययो न भवति तत्रापि प्रयोग उपपद्यते ॥

माथोत्तरपदपदव्यनुपदं धावति ॥ दण्डभावो माथो दाण्डमाथः =ऋजुः पन्था उच्यते, तं धावति दाण्डमाथिकः । शुल्कस्य माथः शुल्कमाथः, शौल्कमाथिकः । पदस्य पश्चादनुपदम्, पश्चादर्थेऽव्ययीभावः अनुपदं धावत्यानुपदिकः । प्रत्यासत्त्या धावतीत्यर्थः । द्वितीयायां समर्थविभक्तौ लब्धायां पुनर्द्वितीयानिर्देशः 'इष्टाद् द्वितीयान्ताद् यथा स्याद्, अनिष्टाद् मा भूत्' इत्येवमर्थम् । तेन यः 'अनुर्यत्समया' 'यस्य चायामः' 'कुगतिप्र' इत्यादिभियोगैरनुशब्दस्य समासः, ततो न भवति ॥

आक्रन्दात् ठञ्च ॥ आर्तायनमिति । परित्राणार्थमीयते गम्यत इत्ययनम्, आर्तानामयनमार्तायनम् । शरणमित्यर्थः ॥

पदोत्तरपदं गृह्णाति ॥ ३९ ॥

पदशब्द उत्तरपदं यस्य तस्मात्पदोत्तरपदशब्दात् 'तत्' इति द्वितीयासमर्थाद् 'गृह्णाति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः ।

पदान्तादिति नोक्तम्, बहुच्पूर्वान्मा भूदिति ॥

प्रतिकण्ठार्थललामं च ॥ ४० ॥

प्रतिकण्ठार्थललामशब्देभ्यस्तदिति द्वितीयासमर्थेभ्यः 'गृह्णाति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥

पदमञ्जरी

मुच्यते, आर्त्तैरीयते प्राप्यत इति कृत्वा । आर्त्तायनमार्त्तानां त्राता आक्रन्द इत्युच्यते, आक्रन्द्यते आर्त्तैराहूयत इति कृत्वा ॥

*पदोत्तरपदं गृह्णाति* ॥ पदग्रहणेन स्वरूपं गृह्यते, न सुप्तिङन्तमुत्तरपदस्य पदत्वाव्यभिचाराद्, अत एवाह—*पदशब्द उत्तरपदं यस्येति* ॥

*प्रतिकण्ठार्थललामं च* ॥ कण्ठं कण्ठं प्रति प्रतिकण्ठम्, 'यथार्थे यदव्ययम्' इति वीप्सायामव्ययीभावः । आभिमुख्ये वा, 'लक्षणेनाभिप्रती आभिमुख्ये' इति । यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्य ग्रहणं न भवति; अनभिधानात् ॥

न्यासः

पदोत्तरपदं गृह्णाति ॥ पदग्रहणेन स्वरूपमेव गृह्यते, न सुप्तिङन्तं पदम् । अत वाह—पदशब्द उत्तरपदं यस्येति । एतच्च द्वितीयायां प्रवृत्तायां लौकिकवाक्यप्रदर्शनार्थत्वाद् द्वितीयानिर्देशाल्लभ्यते । पदोत्तरपदं गृह्णातीत्येल्लौकिकं वाक्यम् । अस्य प्रदर्शनेनैतत् सूचितम्—लौकिकस्य हि पदस्य ग्रहणम्, न पारिभाषिकस्येति ।

अथ पदान्तादित्येव कस्मान्नोक्तम् ? इत्याह—पदान्तादिति नोक्तमित्यादि । गतार्थम् । पदमेवोत्तरपदं यस्य तस्माद् यथा स्यात् । इह तु श्लोकपादपदं गृह्णातीति वाक्यमेव भवतीति केचित् ॥

प्रतिकण्ठार्थललामञ्च ॥ कण्ठं कण्ठं प्रति प्रतिकण्ठम्, यथार्थेऽव्ययीभावः, आभिमुख्ये वा - 'लक्षणेनाभिप्रती आभिमुख्ये' इति । कण्ठस्याभिमुख्य इति । कण्ठस्याभिमुख्यं प्रतिकण्ठम् । प्रातिकण्ठिकः स उच्यते सर्वं कण्ठं यो गृह्णाति, यो वा कण्ठमाभिमुख्येन गृह्णाति । द्वितीयासमर्थप्रकरणे पुनर्द्वितीयान्तप्रकृतिनिर्देश इष्टाद् स्यात्, अति-

धर्मं चरति ॥ ४१ ॥

धर्मशब्दात्तदिति द्वितीयासमर्थात् 'चरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । चरतिरासेवायाम्, नानुष्ठानमात्रे । धर्मं चरति धार्मिकः ।

* अधर्माच्च वक्तव्यम् * । आधर्मिकः ॥

प्रतिपथमेति ठँश्च ॥ ४२ ॥

प्रतिपथशब्दाद् द्वितीयासमर्थाद् 'एति' इत्यस्मिन्नर्थे ठन् प्रत्ययो भवति, चकाराट्ठक् च । प्रतिपथमेति प्रतिपथिकः, प्रातिपथिकः ॥

समवायान् समवैति ॥ ४३ ॥

समवायवाचिभ्यः शब्देभ्यः 'तत्' इति द्वितीयासमर्थेभ्यः 'समवैति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति ।

समवायः समूह उच्यते, न सम्प्रधारणा । 'समवायान्' इति बहुवचनं

पदमञ्जरी

धर्मं चरति ॥ *अधर्माच्चेति वक्तव्यमिति* । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाद्वचनम् । *आधर्मिक इति* । नञत्र विरोधिवचनः, पापाचार इत्यर्थः ॥

*प्रतिपथमेति ठँश्च* ॥ *प्रतिपथमिति* । पूर्ववद्वीप्सायामव्ययीभावः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः ॥

*समवायान् समवैति* ॥ *समवायः समूह उच्यत इति* । समवयन्ति तस्मिन्निति कृत्वा । *न सम्प्रधारणेति* । समयपूर्वस्येणः सम्प्रधारणायामपि प्रयोगोऽस्तीति

न्यासः

द्यात्मा भूत् । तेन प्रतिगतः कण्ठमिति 'कुगतिप्रादयः' इति तत्पुरुषो यः प्रतिकण्ठशब्दस्ततो न भवति ॥

धर्मञ्चरति ॥ चरतिरासेवायामिति । आसेवा = पौनःपुन्यम् ।

अधर्माच्च वक्तव्यमिति । अधर्मशब्दाच्चरतीत्येतस्मिन्नर्थे ठग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थो वेदितव्यः, तेनाधर्मादपि भविष्यति ॥

प्रतिपथमेति ठँश्च ॥ प्रतिपथिकमिति । पूर्ववद् वीप्सायाम्, आभिमुख्ये वाव्ययीभावः । पन्थानं पन्थानं प्रति प्रतिपथम् । आभिमुख्ये—पथ आभिमुख्यं प्रतिपथम् । यः सर्वान् पथ एति, आभिमुख्येन वा पन्थानमेति स प्रातिपथिक इति चाभिधीयते ।

समवायान् समवैति ॥ समवायः समूह उच्यते, न सम्प्रधारणेति । कुत

## पदोत्तरपदं गृह्णाति ॥ ३९ ॥

पदशब्द उत्तरपदं यस्य तस्मात्पदोत्तरपदशब्दात् 'तत्' इति द्वितीयासमर्थाद् 'गृह्णाति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः ।

पदान्तादिति नोक्तम्, बहुच्पूर्वान्मा भूदिति ॥

## प्रतिकण्ठार्थललामं च ॥ ४० ॥

प्रतिकण्ठार्थललामशब्देभ्यस्तदिति द्वितीयासमर्थेभ्यः 'गृह्णाति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥

### पदमञ्जरी

मुच्यते, आर्त्तैरीयते प्राप्यत इति कृत्वा । आर्त्तायनमार्त्तानां त्राता आक्रन्द इत्युच्यते, आक्रन्द्यते आर्त्तैराहूयत इति कृत्वा ॥

*पदोत्तरपदं गृह्णाति* ॥ पदग्रहणेन स्वरूपं गृह्यते, न सुप्तिङन्तमुत्तरपदस्य पदत्वाव्यभिचाराद्, अत एवाह—*पदशब्द उत्तरपदं यस्येति* ॥

*प्रतिकण्ठार्थललामं च* ॥ कण्ठं कण्ठं प्रति प्रतिकण्ठम्, 'यथार्थे यदव्ययम्' इति वीप्सायामव्ययीभावः । आभिमुख्ये वा, 'लक्षणेनाभिप्रती आभिमुख्ये' इति । यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्य ग्रहणं न भवति; अनभिधानात् ॥

### न्यासः

पदोत्तरपदं गृह्णाति ॥ पदग्रहणेन स्वरूपमेव गृह्यते, न सुप्तिङन्तं पदम्, अत-वाह—पदशब्द उत्तरपदं यस्येति । एतच्च द्वितीयायां प्रकृतायां लौकिकवाक्यप्रदर्शनार्थत्वाद् द्वितीयानिर्देशाल्लभ्यते । पदोत्तरपदं गृह्णातीत्येल्लौकिकं वाक्यम् । अस्य प्रदर्शनेनैतत् सूचितम्—लौकिकस्य हि पदस्य ग्रहणम्, न पारिभाषिकस्येति ।

अथ पदान्तादित्येव कस्मान्नोक्तम्? इत्याह --पदान्तादिति नोक्तमित्यादि। गतार्थम्। पदमेवोत्तरपदं यस्य तस्माद् यथा स्यात् । इह तु श्लोकपादपदं गृह्णातीति वाक्यमेव भवतीति केचित् ॥

प्रतिकण्ठार्थललामञ्च ॥ कण्टं कण्ठं प्रति प्रतिकण्ठम्, यथार्थेऽव्ययीभावः, आभिमुख्ये वा - 'लक्षणेनाभिप्रती आभिमुख्ये' इति । कण्ठस्याभिमुख्य इति । कण्ठस्याभिमुख्यं प्रतिकण्ठम् । प्रातिकण्ठिकः स उच्यते सर्वं कण्ठं यो गृह्णाति, यो वा कण्ठमाभिमुख्येन गृह्णाति । द्वितीयासमर्थप्रकरणे पुनर्द्वितीयान्तप्रकृतिनिर्देश इष्टाद् स्यात्, अनि-

धर्मं चरति ॥ ४१ ॥

धर्मशब्दात्तदिति द्वितीयासमर्थात् 'चरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । चरतिरासेवायाम्, नानुष्ठानमात्रे । धर्मं चरति धार्मिकः ।

* अधर्माच्च वक्तव्यम् * । आधर्मिकः ॥

प्रतिपथमेति ठँश्च ॥ ४२ ॥

प्रतिपथशब्दाद् द्वितीयासमर्थाद् 'एति' इत्यस्मिन्नर्थे ठन् प्रत्ययो भवति, चकाराट्ठक् च । प्रतिपथमेति प्रतिपथिकः, प्रातिपथिकः ॥

समवायान् समवैति ॥ ४३ ॥

समवायवाचिभ्यः शब्देभ्यः 'तत्' इति द्वितीयासमर्थेभ्यः 'समवैति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति ।

समवायः समूह उच्यते, न सम्प्रधारणा । 'समवायान्' इति बहुवचनं

पदमञ्जरी

*धर्मं चरति* ॥ *अधर्माच्चेति वक्तव्यमिति* । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाद्वचनम् । *आधर्मिक इति* । नञत्र विरोधिवचनः, पापाचार इत्यर्थः ॥

*प्रतिपथमेति ठँश्च* ॥ *प्रतिपथमिति* । पूर्ववद्वीप्सायामव्ययीभावः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः ॥

*समवायान् समवैति* ॥ *समवायः समूह उच्यत इति* । समवयन्ति तस्मिन्निति कृत्वा । न *सम्प्रधारणेति* । समयपूर्वस्येणः सम्प्रधारणायामपि प्रयोगोऽस्तीति

न्यासः

ष्टान्मा भूत् । तेन प्रतिगतः कण्ठमिति 'कुगतिप्रादयः' इति तत्पुरुषो यः प्रतिकण्ठशब्दस्ततो न भवति ॥

धर्मञ्चरति ॥ चरतिरासेवायामिति । आसेवा = पौनःपुन्यम् ।

अधर्माच्च वक्तव्यमिति । अधर्मशब्दाच्चरतीत्येतस्मिन्नर्थे ठग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थो वेदितव्यः, तेनाधर्मादपि भविष्यति ॥

प्रतिपथमेति ठँश्च ॥ प्रतिपथिकमिति । पूर्ववद् वीप्सायाम्, आभिमुख्ये वाव्ययीभावः । पन्थानं पन्थानं प्रति प्रतिपथम् । आभिमुख्ये—पथ आभिमुख्यं प्रतिपथम् । यः सर्वान् पथ एति, आभिमुख्येन वा पन्थानमेति स प्रातिपथिक इति चाभिमीयते ।

समवायान् समवैति ॥ समवायः समूह उच्यते, न सम्प्रधारणेति । कुत

स्वरूपविधिनिरासार्थम्। समवैति, आगत्य तदेकदेशीभवतीत्यर्थः।
समवायान्समवैति सामवायिकः। सामाजिकः। सामूहिकः।
सान्निवेशिकः॥

## परिषदो ण्यः॥ ४४॥

'परिषदो ण्यः' प्रत्ययो भवति 'समवायान् समवैति' इत्येतस्मिन् विषये। ठकोऽपवादः। परिषदं समवैति पारिषद्यः॥

## सेनाया वा॥ ४५॥

सेनाशब्दाद् वा ण्यः प्रत्ययो भवति 'समवायान्समवैति' इत्येतस्मिन्नर्थे। ठकोऽपवादः। पक्षे सोऽपि भवति। सेनां समवैति सैन्यः, सैनिकः॥

## संज्ञायां ललाटकुक्कुट्यौ पश्यति॥ ४६॥

ललाट-कुक्कुटीशब्दाभ्यां तदिति द्वितीयासमर्थाभ्याम् 'पश्यति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति, संज्ञायां विषये। संज्ञाग्रहणमभिधेय-

### पदमञ्जरी

मन्यते। *समागत्य तदेकदेशीभवतीत्यर्थ इति*। तत्र गुणभूतसमागमापेक्षया समवायमिति द्वितीयानिर्देशः। लोके तु प्रायेण सप्तमी प्रयुज्यते—द्रव्ये गुणाः समवयन्तीति॥

*परिषदो ण्यः*॥ परितः सीदन्त्यस्यामिति परिषत्, सम्पदादित्वादधिकरणे क्विप्, 'सदिरप्रतेः' इति षत्वम्॥

*संज्ञायां ललाटकुक्कुट्यौ पश्यति*॥ संज्ञानं संज्ञा = प्रतीतिः, प्रसिद्धिरित्यर्थः।

### न्यासः

एतत्[१] तत्र समवैतीत्यस्य प्रत्ययार्थस्यायोगात्। आगत्य तदेकदेशीभवतीति समवैति-शब्दस्यार्थः। सम्प्रधारणा चामूर्त्तिः, चैतसिको धर्मः, न च तदेकदेशीभवितुं शक्यते। तस्माद् समूह एव समवायशब्दस्यार्थः, नैतीत्यस्यार्थः। एतीति वर्तमाने समवैतीति वचनमर्थविशेषप्रतिपत्त्यर्थम्। एतीति प्राप्तिमात्रं कुर्वन्नुच्यते। समवैतीत्यागत्य तदेकदेशीभवतीति॥

परिषदो ण्यः॥ सेनाया वा॥ संज्ञायां ललाटकुक्कुट्यौ पश्यति॥ अभिधेय-

---

१. अत्र 'परिषीदन्त्यस्मिन्नित्यधिकरणे क्विप्'—इत्यधिकः पाठः क्वचित्।

नियमार्थम् , न तु रूढ्यर्थम् । ललाटं पश्यति लालाटिकः सेवकः । कौक्कुटिको भिक्षुः ।

सर्वावयवेभ्यो ललाटं दूरे दृश्यते, तदनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषः कार्येष्वनुपस्थायित्वं लक्ष्यते । लालाटिकः सेवकः । स्वामिनः कार्येषु नोपतिष्ठत इत्यर्थः ।

कुक्कुटीशब्देनापि कुक्कुटीपातो लक्ष्यते । देशस्याल्पतया हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति स उच्यते कौक्कुटिक इति[1] ॥

पदमञ्जरी

*अभिधेयनियमार्थमिति* । अभिधेये सेवकविशेषे भिक्षुविशेषे च नियमः, तत्रैव वृत्तिर्यथा स्यादित्येवमर्थमित्यर्थः । *न रूढ्यर्थमिति* । लालाटिक-कौक्कुटिकशब्द-योर्डित्थादिवदरूढत्वात् तन्नियोगेन वर्त्तते, यावद्योगे च वर्त्तते । योगेऽपि ललाट-कुक्कुटीदर्शनमात्रेण ठञ् न भवतीत्येतावत्संज्ञाग्रहणेन प्रसिद्ध्युपसंग्रहार्थे न क्रियते ।

यादृशस्तु योगोऽत्र विवक्षितस्तं दर्शयति—*सर्वावयवेभ्य इत्यादि* । अनुपश्ले-षस्य विवरणं *कार्येष्वनुपस्थायित्वमिति*, दूरे स्थितो ललाटमेव पश्यति, न पुनः कार्येषूपतिष्ठत इत्यर्थः ।

*कुक्कुटीपातो लक्ष्यते इति* । यावति देशे कुक्कुटी पतति यावन्तं देशं समतीत्य निपतितुं समर्था स देशो लक्ष्यत इत्यर्थः । अनेनापि प्रकारेण देशस्या-ल्पत्वं लक्ष्यते, कुक्कुटी पततु मा वाऽपतदित्याह—*देशस्याल्पतयेति* । एतदेव स्पष्टयति—*यो हि भिक्षुरिति* । भिक्षुः = संन्यासी ॥

न्यासः

नियमार्थ इति । अभिधेये सेवकविशेषे भिक्षुविशेषे च प्रत्ययान्तस्य नियमः । तत्रैव वृत्तिर्यथा स्यादित्येवमर्थम् । न तु रूढ्यर्थमिति । लालाटिककौक्कुटिकशब्दयो रूढ्या-भेकत्वात् ।

तदनेनेत्यादि । यत एव सर्वावयवेभ्यो ललाटं दूरे दृश्यते, तस्मादनेन ललाट-दर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषो लभ्यते । न त्वत्र ललाटार्थो दर्शनं चास्ति । यादृशश्चानुपश्लेषो विवक्षितः, तं कार्येष्वनुपस्थायित्वमित्यनेन दर्शयति ।

कुक्कुटीशब्देनापीत्यादि । कुक्कुट्या ह्यल्पदेशविषयः पातो भवति । तदनेन

---

१. 'तदयमभिधेये नियमः संज्ञाग्रहणेन क्रियते, कुक्कुटी = दाम्भिकचेष्टा'—इत्यधिकं क्वचित् ।

## तस्य धर्म्यम् ॥ ४७ ॥

'तस्य' इति षष्ठीसमर्थाद् 'धर्म्यम्' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । धर्म्यं न्याय्यम् । आचारयुक्तमित्यर्थः । शुल्कशालाया धर्म्यं शौल्कशालिकम् । आकरिकम् । आपणिकम् । गौल्मिकम् ॥

## अण् महिष्यादिभ्यः ॥ ४८ ॥

'महिषी' इत्येवमादिभ्योऽण् प्रत्ययो भवति 'तस्य धर्म्यम्' इत्येतस्मिन् विषये । ठकोऽपवादः । महिष्या धर्म्यं माहिषम् । प्राजावतम् ।

महिषी । प्रजावती । प्रलेपिका । विलेपिका । अनुलेपिका । पुरोहित । मणिपाली । अनुचारक । होतृ । यजमान । महिष्यादिः ॥

## ऋतोऽञ् ॥ ४९ ॥

ऋकारान्तात्प्रातिपदिकादञ् प्रत्ययो भवति 'तस्य धर्म्यम्' इत्येतस्मिन्विषये । ठकोऽपवादः । पोतुर्धर्म्यं पौत्रम् । औद्गात्रम् ।

* नराच्चेति वक्तव्यम् * । नरस्य धर्म्या नारी ।

* विशसितुरिड्लोपश्च * । विशसितुर्धर्म्यं वैशस्त्रम् ।

* विभाजयितुर्णिलोपश्च * । विभाजयितुर्धर्म्यं वैभाजित्रम् ॥

## अवक्रयः ॥ ५० ॥

'तस्य' इत्येव । षष्ठीसमर्थाद् 'अवक्रयः' इत्येतस्मिन्नर्थे ठक्

### पदमञ्जरी

*तस्य धर्म्यम्* ॥ धर्मः = अनुवृत्त आचारः, ततोऽनपेतं धर्म्यम्, 'धर्मपथ्यर्थन्यायादनपेते' इति वचनात् । *दौवारिकमिति* । 'द्वारादीनां च' इति वृद्धिप्रतिषेधः, ऐजागमश्च ॥

*ऋतोऽञ्* ॥ *होतुर्धर्म्यं हौत्रमिति* । होतृशब्दस्य महिष्यादिषु पाठादपपाठोऽयम्, *पोतुर्धर्म्यमिति* तु पाठः । अपर आह—यजमानसाहचर्यादृत्विग्वचनस्य होतृशब्दस्य महिष्यादिषु पाठः, अयं तु क्रियाशब्द उदाहृत इति ।

*नराच्चेति वक्तव्यमिति* । नृशब्दात्सूत्रेणैवाञि नारमिति सिद्धे नरशब्दाट्ठको निवृत्त्यर्थं वचनम्, अनभिधानं तु दुर्ज्ञानम् ॥

### न्यासः

कुक्कुटीपातदेशस्याल्पता लक्ष्यते । न त्वत्र कुक्कुट्यर्थो देशश्च विद्यते ॥

प्रत्ययो भवति। अवक्रीणीतेऽनेनेत्यवक्रयः = पिण्डक उच्यते। शुल्कशालाया अवक्रयः शौल्कशालिकः। आकरिकः[1]। आपणिकः। गौल्मिकः।

नन्ववक्रयोऽपि धर्म्यमेव? नैतदस्ति; लोकपीडया धर्मातिक्रमेणाप्यवक्रयो भवति॥

तदस्य पण्यम्॥ ५१॥

'तत्' इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं पण्यं चेत्तद्भवति। अपूपाः पण्यमस्य आपूपिकः। शाष्कुलिकः। मौदकिकः।

पण्यमिति विशेषणं तद्धितवृत्तावन्तर्भूतम्, अतः पण्यशब्दो न प्रयुज्यते॥

पदमञ्जरी

*अवक्रयः॥ अवक्रीयतेऽनेनेत्यवक्रय इति।* क्रयो नाम = स्वद्रव्यत्यागेन परद्रव्यस्वीकरणम्, तस्यावमत्वमवशब्दो द्योतयति। वाणिज्यार्थं तैलधान्यादिकं देशान्तरं नयताऽस्मिन् शुल्कस्थाने प्रतिभारमेतावद् देयमिति तद्देशाधिपतिना यत्कल्पितं सोऽवक्रयः, पिण्डक इति चोच्यते। तत्र स्वद्रव्यमेव दत्त्वा स्वद्रव्यमेव स्वीक्रियते इत्ययमवक्रयो भवति, न तु मुख्यः।

*नन्वित्यादि।* अवक्रयस्याप्यनादिप्रवृत्तत्वादिति भावः। *लोकपीडयेति।* अर्थलोभेन धर्मातिक्रमेण धर्मापेतत्वं दर्शयति॥

*तदस्य पण्यम्॥ पण्यमिति विशेषणमित्यादि।* इह यो विशेषणमुपाधिर्वोपादीयते द्योत्ये तस्मिंस्तेन भवितव्यम्, तद्यथा—'सास्य देवता', इन्द्रो देवता अस्य ऐन्द्रः स्थालीपाक इति देवतात्वं वृत्तावन्तर्भवति, तद्वदत्रापि पण्यत्वमन्तर्भवतीति नात्रापूर्वं किञ्चित्॥

न्यासः

तस्य धर्म्यम्॥ अण् महिष्यादिभ्यः॥ ऋतोऽञ्॥ अवक्रयः॥ तदस्य पण्यम्॥ अपूपा पण्यमस्येति आपूपिकः।

अथ यथा वाक्ये पण्यशब्दो युज्यते तथा वृत्तावपि कस्मान्न युज्यते? इत्याह—पण्यमिति। विशेषणमित्यादि। अथ य एवमवेक्ष्यमाणः पण्यार्थं वृत्तावन्तर्भावयति तेन गतार्थत्वात् पण्यशब्दो न प्रयुज्यते॥

---

१. 'आन्तरगारिकः'—इति पाठा०।

लवणाट्ठञ् ॥ ५२ ॥

लवणशब्दाट्ठञ् प्रत्ययो भवति 'तदस्य पण्यम्' इत्येतस्मिन्विषये । ठकोऽपवादः । स्वरे विशेषः । लवणं पण्यमस्य लावणिकः ॥

किशरादिभ्यः ष्ठन् ॥ ५३ ॥

'किशर' इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति 'तदस्य पण्यम्' इत्येतस्मिन्विषये । ठकोऽपवादः । किशरादयो गन्धविशेषवचनाः । किशराः पण्यमस्य किशरिकः । किशरिकी । नरदिकः । नरदिकी ।

किशर । नरद । नलद । सुमङ्गल । तगर । गुग्गुलु । उशीर । हरिद्रा । हरिद्रायणी । कृशरादिः ॥

शलालुनोऽन्यतरस्याम् ॥ ५४ ॥

शलालुशब्दादन्यतरस्यां ष्ठन् प्रत्ययो भवति 'तदस्य पण्यम्' इत्येतद्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । शलालुशब्दो गन्धविशेषवचनः । शलालुपण्यमस्य शलालुकः, शलालुकी । शालालुकः, शालालुकी ॥

शिल्पम् ॥ ५५ ॥

'तत्' इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शिल्पं चेत्तद्भवति । शिल्पम् = कौशलम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । पाणविकः । वैणिकः ।

पदमञ्जरी

*किशरादिभ्यष्ठन्* ॥ किशरादयो गन्धविशेषवचनास्तद्वति वर्तन्ते, गन्धान्पिनष्टीति यथा ॥

*शलालुनोऽन्यतरस्याम्* ॥ *शलालुक इति* । 'इसुसुक्तान्तात्कः' ॥

*शिल्पम्* ॥ *कौशलमिति* । क्रियाभ्यासपूर्वको ज्ञानविशेषः । *मृदङ्गवादनं शिल्पमस्येति* । मृदङ्गो वाद्यते येन तन्मृदङ्गवादनं शिल्पम् भावसाधनस्य गौणं

न्यासः

लवणाट्ठञ् ॥ किशरादिभ्यः ष्ठन् ॥ शलालुनोऽन्यतरस्याम् ॥ शलालुक इति । 'इसुसुक्तान्तात् कः' ॥

शिल्पम् ॥ शिल्पं कौशलमिति । क्रियाभ्यासपूर्वको ज्ञानविशेषः । मृदङ्गवादनं

मृदङ्गवादने वर्तमानो मृदङ्गशब्दः प्रत्ययमुत्पादयति । शिल्पं तद्धितवृत्तावन्तर्भवति ॥

मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥

'मड्डुक', 'झर्झर' – शब्दाभ्यामन्यतरस्यामण् प्रत्ययो भवति, 'तदस्य शिल्पम्' इत्येतस्मिन्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ॥

प्रहरणम् ॥ ५७ ॥

'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं प्रहरणं चेत्तद्भवति । असिः प्रहरणमस्य आसिकः । प्रासिकः । चाक्रिकः । धानुष्कः ॥

पदमञ्जरी

सामानाधिकरण्यम् । मृदङ्गवादनविषयं शिल्पमस्येत्यर्थः । *मार्दङ्गिक इति* ।

ननु मृदङ्गवादनं शिल्पमस्येति विग्रहः कृतः, ततश्च मार्दङ्गवादनिक इति भवितव्यम् ? तत्राह–*मृदङ्गेत्यादि* । मृदङ्गवादनशब्दात्तु प्रत्ययो न भवत्यनभिधानात् , किं तूपचरितवृत्तेरपि मृदङ्गशब्दादेव भवति । अत एवानभिधानात् मृदङ्गनिष्पादनं शिल्पमस्य मार्दङ्गिकः कुम्भकार इत्यत्र न भवति ॥

*मड्डुकझर्झरादणन्यतरस्याम्* ॥ अयमेव निर्देशो ज्ञापयति—'तद्वादनवृत्तिभ्यो मृदङ्गादिभ्यः प्रत्ययः' इति । न हि मुख्यमड्डुकझर्झरयोः शिल्पेन सामानाधिकरण्यमुपपद्यते ॥

*प्रहरणम्* ॥ प्रहरणमायुधम् , प्रह्रियतेऽनेनेति कृत्वा । *धानुष्क इति* । पूर्ववत् कादेशः, 'इणः षः' इति विसर्जनीयस्य षत्वम् ॥

न्यासः

शिल्पमस्येति । मृदङ्गो वाद्यते येन शिल्पेन तन्मृदङ्गवादनम् । ननु च मृदङ्गवादनं शिल्पं यस्येति विगृह्य प्रत्यय उत्पद्यमानो मृदङ्गवादनशब्दादेव प्राप्नोति, न तु मृदङ्गशब्दात्, ततो मार्दङ्गवादनिक इति भवितव्यम्, तत् कथं मार्दङ्गिक इति भवति ? इत्याह–मृदङ्गवादनमित्यादि । मृदङ्गशब्द एव प्रत्ययमुत्पादयति, स तु मृदङ्गवादने वर्तमानः, न मृदङ्गे । अत्र शब्दशक्तिस्वाभाव्यं हेतुः । न चायं नियमः—येन विग्रहः क्रियते, तत एव प्रत्ययेन भवितव्यमिति । यथा एवेरिदं मांसमाविकम् मांस-

## परश्वधाट्ठञ् च ॥ ५८ ॥

परश्वधशब्दात् ठञ् प्रत्ययो भवति, चकारात् ठक्। स्वरे विशेषः। परश्वधः प्रहरणमस्य पारश्वधिकः ॥

## शक्तियष्ट्योरीकक् ॥ ५९ ॥

शक्ति, यष्टि-शब्दाभ्यामीकक्प्रत्ययो भवति, 'तदस्य प्रहरणम्' इत्येतस्मिन्विषये। ठकोऽपवादः। शक्तिः प्रहरणमस्य शाक्तीकः। याष्टीकः ॥

पदमञ्जरी

*परश्वधाट्ठञ्च* ॥ परश्वधः = परशुः ॥

*शक्तियष्ट्योरीकक्* ॥ शक्यतेऽनया प्रहर्तुमिति शक्तिः, यष्टिशब्दोऽव्युत्पन्नं प्रातिपदिकम्। किमर्थमीकगुच्यते न कगेवोच्यते, का रूपसिद्धिः? शक्तियष्टिशब्दाभ्यां बह्वादिङीषन्ताभ्यां लिङ्गविशिष्टपरिभाषया ककि कृते शाक्तीको याष्टीक इति सिद्धम्; न सिध्यति? 'केऽणः' इति ह्रस्वत्वं प्राप्नोति। विभाषा ङीबुक्तः, तदभावपक्षे दीर्घस्य शङ्कैव नास्ति? एवं तर्हि इकगेवोच्येत, इकारेऽपि हि सवर्णदीर्घत्वे सिध्यति, यस्येति लोप इकारोच्चारणसामर्थ्यान्न भविष्यति। पदस्यावग्रहनिवृत्तिरिकारस्य प्रयोजनम्। एवं तर्हि सूत्रारम्भो निष्फलः स्यात्, पूर्वसूत्रविहितेन ठकैवावग्रहनिवृत्तेः सिद्धत्वात्? नानर्थकम्; वाक्यनिवृत्त्यर्थत्वात्। एवमपि प्रत्ययान्तरमनर्थकं शक्तियष्ट्योरित्येतावद्वक्तव्यम्, ठक् प्रकृतः, तस्य पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति, किमीकको विधानेन, तद्विधानात्तु

न्यासः

मित्यविशब्देन विग्रहः क्रियतेऽविकशब्दादेव प्रत्ययो भवति, तथेहापि मृदङ्गवादनशब्देन विग्रहः क्रियते, प्रत्ययस्तु मृदङ्गशब्दाद् भवति। तेन तत्र गतार्थत्वाच् शिल्पशब्दो न प्रयुज्यत इत्यभिप्रायः ॥

मड्डुकझर्झरादणन्यतरस्याम् ॥ प्रहरणम् ॥ धानुष्क इति। कादेशः। 'इणः षः' इति विसर्जनीयस्य षत्वम् ॥

परश्वधात् ठञ् ॥ शक्तियष्ट्योरीकक् ॥ अथ दीर्घोच्चारणं किमर्थम्, इकगेव नोच्येत, इकक्यपि सवर्णदीर्घत्वे कृते शाक्तीको याष्टीक इति सिध्यत्येव? न सिध्यति; इकारस्य 'यस्येति च' इति लोपेन भवितव्यम्। तत् कुतः सवर्णदीर्घत्वम्? इकारोच्चारणसामर्थ्यादेव लोपो न भविष्यति। ननु चावग्रहनिवृत्तिरिकारस्य प्रयोजनं स्यात्? नैतत्, यदि ह्येतत् प्रयोजनं स्यात् सूत्रारम्भोऽनर्थकः स्यात्; ठकाप्यनवग्रहस्य सिद्धत्वात्? नानर्थकः; वाक्यनिवृत्त्यर्थत्वात्। एवमपि प्रत्ययग्रहणमनर्थकं स्यात्, ठक्

## अस्तिनास्तिदिष्टं मतिः ॥ ६० ॥

'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थेभ्यः 'अस्ति', 'नास्ति', 'दिष्ट' – इत्येतेभ्यः शब्देभ्यः 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं मतिश्चेत्तद्भवति । अस्ति मतिरस्य आस्तिकः । नास्ति मतिरस्य नास्तिकः । दैष्टिकः ।

न च मतिसत्तामात्रे प्रत्यय इष्यते, किं तर्हि ? परलोकोऽस्तीति यस्य मतिरस्ति स आस्तिकः, तद्विपरीतो नास्तिकः । प्रमाणानुपातिनी यस्य मतिः स दैष्टिकः । तदेतदभिधानशक्तिस्वभावाल्लभ्यते ।

अस्ति, नास्ति-शब्दौ निपातौ, वचनसामर्थ्याद्वा आख्याताद्वाक्याच्च प्रत्ययः ॥

पदमञ्जरी

यस्येति लोपो न भविष्यति । यथैव तर्हि यस्येति लोपो न भवति एवं सवर्णदीर्घत्वमपि न स्यात्; यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, यस्येतिलोपं च प्रति इकारोच्चारणमनर्थकं सवर्णदीर्घस्य पुनर्निमित्तमेव ॥

*अस्तिनास्तिदिष्टं मतिः* ॥ यद्यस्ति मतिर्यस्य स आस्तिकः, चोरेऽपि प्राप्नोति, तस्यापि मतिसद्भावात् ? तत्राह—*न चेति* । *तद्विपरीत इति* । परलोको नास्तीति मतिर्यस्य तन्नास्तिकः = लौकायतिकः, न त्वचेतनः पदार्थः, मत्यभावमात्रे प्रत्ययस्यानिष्टत्वात् । दिष्टम् = दैवम्, तद्विषया मतिर्यस्य स दैष्टिकः, वृत्तावपि प्रमाणानुपातिनी मतिर्यस्येति दैववित्, प्रमीयते तेभ्यो दैवमिति । प्रमाणशब्देनेतिहासपुराणादिविवक्षितम् ।

*अस्तिनास्तिशब्दौ निपाताविति* । तेन प्रातिपदिकाधिकारो न बाध्यते इति

न्यासः

प्रत्ययो हि प्रकृतः, तत्रैतावदेव वक्तव्यम्— शक्तियष्ट्योरिति । एवं पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति, किमीकग्विधानेन ? तस्मादीकग्रहणसामर्थ्याल्लोपो न भविष्यति । एवमपि ठकैव 'यस्येति च' इति लोपाभावेनानवग्रहे सिद्धे ईकग्रहणमधिकविधानार्थं प्रतीयते । तेन 'यस्येति च' इति लोपो न भवति । यथा तस्मादकः सवर्णे दीर्घोऽपि न स्यादिति विगृहीतमेव श्रूयेत । तस्मादीकग्वक्तव्यः ॥

अस्तिनास्तिदिष्टं मतिः ॥ किं तर्हि परलोकोऽस्तीति मतिर्यस्येति, कथं पुनरसति विशेषोपादान एतल्लभ्यते ? इत्याह—तदेतदित्यादि । अभिधानशक्तिस्वाभाव्याल्लभ्यते । ननु चास्तीति तिङन्तम्, नास्तीति वाक्यम् । अत एताभ्यां न प्राप्नोति

## शीलम् ॥ ६१ ॥

'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शीलं चेत्तद्भवति । शीलम् = स्वभावः । अपूपभक्षणं शीलमस्य आपूपिकः । शाष्कुलिकः । मौदकिकः ।

भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति ॥

## छत्रादिभ्यो णः ॥ ६२ ॥

'छत्र' – इत्येवमादिभ्यः प्रातिपदिकेभ्यो णः प्रत्ययो भवति, 'तदस्य शीलम्' इत्येतस्मिन्विषये । ठकोऽपवादः । छत्रं शीलमस्य छात्रः । छादनादावरणाच्छत्रम् । गुरुकार्येष्ववहितस्तच्छिद्रावरण-प्रवृत्तश्छत्रशीलः शिष्यश्छात्रः ।

पदमञ्जरी

भात्रः । वचनसामर्थ्याच्चेत्यभ्युपगम्यवादः ॥

*शीलम्* ॥ *शीलं स्वभाव इति* । शील्यते पुनःपुनः क्रियतेऽनेनेति कृत्वा । *अपूपभक्षणं शीलमस्येति* । शीलविषये शीलत्वमारोप्य सामानाधिकरण्येन व्यपदेशः । *भक्षणक्रियेत्यादि* । शीलं तावदुपात्तत्वादन्तर्भवति, क्रियाविषयत्वाच्च शीलस्य क्रियाप्यन्तर्भवति, स्वभावाच्च भक्षणक्रिया, न निष्पादिका ॥

*छत्रादिभ्यो णः* ॥ छत्रशीलता शिष्यस्य दर्शयितुमाह—*छादनादावरणाच्छत्रमिति* । छादयतेः ष्ट्रनि 'इस्मन्त्रन्क्विषु च' इति ह्रस्वः । *छत्रशील इति* । छत्र-

न्यासः

प्रत्ययः प्रातिपदिकाधिकारात् ? इत्यत आह—अस्तिनास्तिशब्दावित्यादि । अभ्युप-गम्यापि तिङन्तत्वं वाक्यत्वञ्च परिहारान्तरमाह—वचनादाख्याताद् वाक्याच्च प्रत्यय इति ॥

शीलम् ॥ अपूपभक्षणं शीलमस्येति । शीलविषयत्वादुपचारात् तथा व्यपदेशः । भक्षणक्रिया तद्विषयश्च शीलं तद्धितवृत्तावन्तर्भवति । तेन तत्र प्रतीयमानत्वाद् भक्षण-शीलशब्दौ न प्रयुज्येते इति भावः ॥

छत्रादिभ्यो णः ॥ छत्रशीलत्वं शिष्यस्य प्रतिपादयितुमाह—छादनादपवारणाच्छत्रमित्यादि । अपवारणादित्यनेन च्छादनादित्यस्यार्थं व्यक्तीकरोति । आच्छादयति हि यत् तच् छत्रमित्युच्यते, तेन शिष्योऽपि गुरुकार्यतत्परो गुरोर्यानि च्छिद्राणि गोपयति तेषामावरणाय प्रवृत्तस्तत्र युक्तः सच्छत्रसहचरितां क्रियामाचरँश्छत्रशीलो भवति ।

स्थाशब्दोऽत्र पठ्यते, स चोपसर्गपूर्वो गृह्यते – आस्था, संस्था, अवस्थेति।

छत्त्र। बुभुक्षा। शिक्षा। पुरोह। स्था। चुरा। उपस्थान। ऋषि। कर्मन्। विश्वधा। तपस्। सत्य। अनृत। शिबिका। छत्त्रादिः॥

## कर्माध्ययने वृत्तम् ॥ ६३ ॥

'तदस्य' इत्येव। 'तत्' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं कर्म चेत्तद्वृत्तमध्ययनविषयं भवति। एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः। द्वैयन्यिकः। त्रैयन्यिकः।

एकमन्यदिति विगृह्य 'तद्धितार्थ' इति समासः, ततश्च ठक् प्रत्ययः। 'अध्ययने कर्म वृत्तम्' इत्येतत्सर्वं तद्धितवृत्तावन्तर्भवति। यस्या-

### पदमञ्जरी

सहचरिता छादनक्रिया शीलमस्येत्यर्थः। यदि त्वपूपभक्षणं शीलमस्यापूपिक इतिवत् छत्त्रावरणं शीलमस्य छात्त्रिक इति व्युत्पाद्यते, तदा दासेऽपि प्राप्नोति; अभिधानस्वाभाव्यात्तु तथा नाश्रीयते।

*उपसर्गपूर्वो गृह्यते इति*। ततश्च तस्य 'आतश्चोपसर्गे' इत्यादिना व्युत्पत्तिः; केवलस्य स्थाशब्दस्याभावात्। केवलस्य तु पाठः सर्वोपसर्गग्रहार्थः। *चुरेति पठ्यते*, तत्र चोरयतेः 'ण्यासश्रन्थो युच्' इति युचि प्राप्तेऽस्मादेव निपातनादकारः, गुणाभावश्च। न च युचोऽन्यत्र बाधः, चोरणेत्यपि भवति॥

*कर्माध्ययने वृत्तम्*॥ कर्म = क्रिया, तच्च स्खलितमपचाररूपं विवक्षितम्, न तच्छीलं कर्म, तेनेह न भवति—अध्ययने जपो वृत्तोऽस्येति। एतच्चाभिधान-

### न्यासः

स्थाशब्दोऽत्र पठ्यते, स चोपसर्गपूर्वो गृह्यत इति। ततश्च तस्य 'आतश्चोपसर्गे' इत्यङ्प्रत्ययमुत्पाद्याप्युत्पादितत्वात्। केवलस्य तु पाठः सर्वोपसंग्रहार्थः।

चुरेति पठ्यते, तत्र निपातनादकारप्रत्ययो गुणाभावश्च।

कर्माध्ययने वृत्तम्॥ क्रियया यद् व्याप्यमानमीप्सिततममनीप्सिततमं वा तत् कर्म। इह त्वनीप्सिततमं गम्यते। अत एवाह—यस्याध्ययनप्रयुक्तस्येत्यादि। न हि कस्यचिदध्ययने युक्तस्य परीक्षाकाले पठतः स्खलितपाठरूपमीप्सितं भवति। अध्ययनशब्दो भावसाधनः, कर्मसाधनो वा। अधीतम्, अधीयते वाऽध्ययनम्। वृत्तम् = भूतम्, उत्पन्नमित्यर्थः।

ध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातं स उच्यते ऐकान्यिक इति। एवं द्वैयन्यिकः, त्रैयन्यिक इति ॥

## बह्वच्पूर्वपदाट्ठच् ॥ ६४ ॥

बह्वच् पूर्वपदं यस्य तस्माद्बह्वच्पूर्वपदात्प्रातिपदिकाट्ठच् प्रत्ययो भवति 'तदस्य कर्माध्ययने वृत्तम्' इत्येतस्मिन्नर्थे। ठकोऽपवादः। द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। त्रयोदशान्यिकः। चतुर्दशान्यिक इति। चतुर्दशापपाठा अस्य जाता इत्यर्थः।

उदात्ते कर्त्तव्ये योऽनुदात्तं करोति स उच्यतेऽन्यत्त्वं करोषीति ॥

### पदमञ्जरी

स्वाभाव्याल्लभ्यते। तदेतद्दर्शयति—*यस्याध्ययने नियुक्तस्येत्यादि*। *एकमन्यदिति*। सम्यक्पाठापेक्षया ॥

बह्वच्पूर्वपदाट्ठच् ॥ स्वरभेदेऽप्यन्यत्वं भवति, न वर्णभेद एवेत्याह—*उदात्ते कर्त्तव्ये इति*। उदात्तग्रहणं सम्यक्स्वरस्योपलक्षणम्। अनुदात्तग्रहणं चासम्यक्स्वरस्य ॥

### न्यासः

एकमन्यदित्यादि। सम्यक् पाठापेक्षायान्योऽर्थो वेदितव्यः। द्वैयन्यिकः, त्रैयन्यिक इति। 'न य्वाभ्यां पदान्ताभ्याम्' इत्यैजागमः। अध्ययने कर्म वृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवतीति। तेन तत्राध्ययनवृत्तशब्दोऽवगतार्थत्वान्न प्रयुज्यत इति भावः ॥

बह्वच्पूर्वपदाट्ठच् ॥ द्वादशान्यिक इति। द्वादशशब्दो बह्वच्पूर्वपदम्। द्वौ च दश चेति द्वन्द्वः। 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इत्यात्त्वम्, ततो द्वादशान्यानीति विगृह्य 'तद्धितार्थ' इति समासः। ननु चैकादेशे कृते पूर्वोत्तरपदाभावाद् बह्वच्पूर्वपदं न भवति, न चान्तादिवद्भावोऽस्ति—'उभयत आश्रये नान्तादिवत्' इति? नैष दोषः; 'नेन्द्रस्य परस्य' इति ज्ञापकादेकादेशात् पूर्वं प्रत्ययः। त्रयोदशान्यिक इति। त्रयश्च दश चेति द्वन्द्वः, 'त्रेस्त्रयः' इति त्रय आदेशः। अन्यशब्दोऽत्र सम्यक् पाठापेक्षयापपाठे वर्तत इत्यत आह—चतुर्दशापपाठा इत्यादि। कथं पुनर्ज्ञायतेऽपपाठेऽन्यशब्दो वर्तते? इत्याह—उदात्त इत्यादि। उदात्ते कर्तव्येऽनुदात्तकरणमपपाठः। तत्र य उदात्ते कर्तव्येऽनुदात्तं करोति स यस्मादन्यं करोषीत्युच्यते ततो ज्ञायतेऽन्यशब्दोऽपपाठे वर्तत इति ॥

## हितं भक्षाः ॥ ६५ ॥

'तदस्य' इत्येव। 'तत्' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति, तच्च भक्षाः।

ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यति।

अपूपभक्षणं हितमस्मै आपूपिकः। शाष्कुलिकः। मौदकिकः। हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति ॥

## तदस्मै दीयते नियुक्तम् ॥ ६६ ॥

'तत्' इति प्रथमासमर्थाद् 'अस्मै' इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं तच्चेद् दीयते नियुक्तम्। नियोगेनाव्यभिचारेण

पदमञ्जरी

*हितं भक्षाः* ॥ हितम्, भक्षाः—इति पदयोः पर्यवसानेन सम्बन्धः। अत्र 'हितम्' इति सामान्योपक्रमत्वादेकवचनं नपुंसकत्वं च। 'भक्षाः' इत्यपूपादिविशेषेषूपसंग्रहात्पुंल्लिङ्गं बहुवचनं च। अत एवाह—*यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति तच्च भक्षा इति*।

*एवं तर्हीति*। एवं च चतुर्थ्यर्थे प्रत्ययो न षष्ठ्यर्थे। कथं तर्हि पूर्वमुक्तमस्येति षष्ठ्यर्थ इति ? एवं तर्ह्यधिकारमात्रापेक्षया तदुक्तम्। अपर आह—'हितं भक्षास्तदस्मै' इति सूत्रच्छेदः, ततः 'दीयते नियुक्तम्' इति तस्या एवेति।

*हितार्थः क्रिया चेति*। हितार्थस्तावदुपात्तत्वादन्तर्भवति। भक्षणक्रियाप्यपूपादिशब्दानां लक्षणया तत्र वृत्तेरन्तर्भवति ॥

*तदस्मै दीयते नियुक्तम्* ॥ *अव्यभिचारो नियोग इति*। अस्मिन्पक्षे नियुक्तमिति

न्यासः

हितं भक्षाः ॥ ननु हितशब्दयोगे चतुर्थ्या भवितव्यम्, 'हितयोगे चतुर्थी भवति' इत्युपसंख्यानात् 'तस्मै हितम्' इति निर्देशात् ? सामर्थ्याद् विभक्तिविपरिणामो भविष्यतीति। सामर्थ्यं पुनस्तदेवोपसंख्यानम्। लिङ्गञ्च—हितार्था क्रिया तद्धितवृत्तावन्तर्भवति, तेन न प्रयुज्यत इति ॥

तदस्मै दीयते नियुक्तम् ॥ ननु च 'तदस्य पण्यम्' इत्यतस्तदिति प्रथमा समर्थविभक्तिरनुवर्तिष्यते, तदपार्थकं पुनः प्रथमासमर्थविभक्त्युपादानम्; 'अस्मै' इति प्रत्ययार्थोऽप्यपार्थक एव। तथा हि 'अस्य' इत्यनुवर्तते, तत्र 'दीयते' इत्यभिसम्बन्धात्तु सम्प्रदानत्वेन भवितव्यम्। ततश्च शेषसम्बन्धे निवृत्ते चतुर्थ्यन्तं विपरिणम्यते, तस्मात्

ध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातं स उच्यते ऐकान्यिक इति । एवं द्वैयन्यिकः, त्रैयन्यिक इति ॥

बह्वच्पूर्वपदाट्ठच् ॥ ६४ ॥

बह्वच् पूर्वपदं यस्य तस्माद्बह्वच्पूर्वपदात्प्रातिपदिकाट्ठच् प्रत्ययो भवति 'तदस्य कर्माध्ययने वृत्तम्' इत्येतस्मिन्नर्थे । ठकोऽपवादः । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । त्रयोदशान्यिकः । चतुर्दशान्यिक इति । चतुर्दशापपाठा अस्य जाता इत्यर्थः ।

उदात्ते कर्त्तव्ये योऽनुदात्तं करोति स उच्यतेऽन्यत्त्वं करोषीति ॥

पदमञ्जरी

स्वाभाव्याल्लभ्यते । तदेतद्व्यक्ति—*यस्याध्ययने नियुक्तस्येत्यादि* । *एकमन्यदिति* । सम्यक्पाठापेक्षया ॥

बह्वच्पूर्वपदाट्ठच् ॥ स्वरभेदेऽप्यन्यत्वं भवति, न वर्णभेद एवेत्याह—*उदात्ते कर्त्तव्ये इति* । उदात्तग्रहणं सम्यक्स्वरस्योपलक्षणम् । अनुदात्तग्रहणं चासम्यक्स्वरस्य ॥

न्यासः

एकमन्यदित्यादि । सम्यक् पाठापेक्षयान्योऽर्थो वेदितव्यः । द्वैयन्यिकः, त्रैयन्यिक इति । 'न य्वाभ्यां पदान्ताभ्याम्' इत्यैजागमः । अध्ययने कर्म वृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवतीति । तेन तत्राध्ययनवृत्तशब्दोऽवगतार्थत्वान्न प्रयुज्यत इति भावः ॥

बह्वच्पूर्वपदाट्ठच् ॥ द्वादशान्यिक इति । द्वादशशब्दो बह्वच्पूर्वपदम् । द्वौ च दश चेति द्वन्द्वः । 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इत्यात्त्वम्, ततो द्वादशान्यानीति विगृह्य 'तद्धितार्थ' इति समासः । ननु चैकादेशे कृते पूर्वोत्तरपदाभावाद् बह्वच्पूर्वपदं न भवति, न चान्तादिवद्भावोऽस्ति—'उभयत आश्रये नान्तादिवत्' इति ? नैष दोषः; 'नेन्द्रस्य परस्य' इति ज्ञापकादेकादेशात् पूर्वं प्रत्ययः । त्रयोदशान्यिक इति । त्रयश्च दश चेति द्वन्द्वः, 'त्रेस्त्रयः' इति त्रय आदेशः । अन्यशब्दोऽत्र सम्यक् पाठापेक्षयापपाठे वर्तत इत्यत आह—चतुर्दशापपाठा इत्यादि । कथं पुनर्ज्ञायतेऽपपाठेऽन्यशब्दो वर्तते ? इत्याह—उदात्त इत्यादि । उदात्ते कर्तव्येऽनुदात्तकरणमपपाठः । तत्र य उदात्ते कर्तव्येऽनुदात्तं करोति स यस्मादन्यं करोषीत्युच्यते ततो ज्ञायतेऽन्यशब्दोऽपपाठे वर्तत इति ॥

## हितं भक्षाः ॥ ६५ ॥

'तदस्य' इत्येव। 'तत्' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति, तच्च भक्षाः।

ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते? एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यति।

अपूपभक्षणं हितमस्मै आपूपिकः। शाष्कुलिकः। मौदकिकः। हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति ॥

## तदस्मै दीयते नियुक्तम् ॥ ६६ ॥

'तत्' इति प्रथमासमर्थाद् 'अस्मै' इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं तच्चेद् दीयते नियुक्तम्। नियोगेनाव्यभिचारेण

### पदमञ्जरी

*हितं भक्षाः* ॥ हितम्, भक्षाः—इति पदयोः पर्यवसानेन सम्बन्धः। अत्र 'हितम्' इति सामान्योपक्रमत्वादेकवचनं नपुंसकत्वं च। 'भक्षाः' इत्यपूपादिविशेषेषूपसंग्रहात्पुंल्लिङ्गं बहुवचनं च। अत एवाह—*यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति तच्च भक्षा इति*।

*एवं तर्हीति*। एवं च चतुर्थ्यर्थे प्रत्ययो न षष्ठ्यर्थे। कथं तर्हि पूर्वमुक्तमस्येति षष्ठ्यर्थ इति? एवं तर्ह्यधिकारमात्रापेक्षया तदुक्तम्। अपर आह—'हितं भक्षास्तदस्मै' इति सूत्रच्छेदः, ततः 'दीयते नियुक्तम्' इति तस्या एवेति।

*हितार्थः क्रिया चेति*। हितार्थस्तावदुपात्तत्वादन्तर्भवति। भक्षणक्रियाप्यपूपादिशब्दानां लक्षणया तत्र वृत्तेरन्तर्भवति ॥

*तदस्मै दीयते नियुक्तम्* ॥ *अव्यभिचारो नियोग इति*। अस्मिन्पक्षे नियुक्तमिति

### न्यासः

हितं भक्षाः ॥ ननु हितशब्दयोगे चतुर्थ्या भवितव्यम्, 'हितयोगे चतुर्थी भवति' इत्युपसंख्यानात् 'तस्मै हितम्' इति निर्देशात्? सामर्थ्याद् विभक्तिविपरिणामो भविष्यतीति। सामर्थ्यं पुनस्तदेवोपसंख्यानम्। लिङ्गञ्च—हितार्था क्रिया तद्धितवृत्तावन्तर्भवति, तेन न प्रयुज्यत इति ॥

तदस्मै दीयते नियुक्तम् ॥ ननु च 'तदस्य पण्यम्' इत्यतस्तदिति प्रथमा समर्थविभक्तिरनुवर्तिष्यते, तदपार्थकं पुनः प्रथमासमर्थविभक्त्युपादानम्; 'अस्मै' इति प्रत्ययार्थोऽप्यपार्थक एव। तथा हि 'अस्य' इत्यनुवर्तते, तत्र 'दीयते' इत्यभिसम्बन्धात्तु [illegible] चतुर्थ्यन्तं विपरिणम्यते, तस्मात् सम्प्रदानत्वेन भवितव्यम्। [illegible]

ध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातं स उच्यते ऐकान्यिक इति । एवं द्वैयन्यिकः, त्रैयन्यिक इति ॥

बह्वच्पूर्वपदाट्ठच् ॥ ६४ ॥

बह्वच् पूर्वपदं यस्य तस्माद्बह्वच्पूर्वपदात्प्रातिपदिकाट्ठच् प्रत्ययो भवति 'तदस्य कर्माध्ययने वृत्तम्' इत्येतस्मिन्नर्थे । ठकोऽपवादः । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । त्रयोदशान्यिकः । चतुर्दशान्यिक इति । चतुर्दशापपाठा अस्य जाता इत्यर्थः ।

उदात्ते कर्त्तव्ये योऽनुदात्तं करोति स उच्यतेऽन्यत्त्वं करोषीति ॥

पदमञ्जरी

स्वाभाव्याल्लभ्यते । तदेतद्दर्शयति—*यस्याध्ययने नियुक्तस्येत्यादि । एकमन्यदिति ।* सम्यक्पाठापेक्षया ॥

बह्वच्पूर्वपदाट्ठच् ॥ स्वरभेदेऽप्यन्यत्वं भवति, न वर्णभेद एवेत्याह—*उदात्ते कर्त्तव्ये इति ।* उदात्तग्रहणं सम्यक्स्वरस्योपलक्षणम् । अनुदात्तग्रहणं चासम्यक्स्वरस्य ॥

न्यासः

एकमन्यदित्यादि । सम्यक् पाठापेक्षयान्योऽर्थो वेदितव्यः । द्वैयन्यिकः, त्रैयन्यिक इति । 'न य्वाभ्यां पदान्ताभ्याम्' इत्यैजागमः । अध्ययने कर्म वृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवतीति । तेन तत्राध्ययनवृत्तशब्दोऽवगतार्थत्वान्न प्रयुज्यत इति भावः ॥

बह्वच्पूर्वपदाट्ठच् ॥ द्वादशान्यिक इति । द्वादशशब्दो बह्वच्पूर्वपदम् । द्वौ च दश चेति द्वन्द्वः । 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इत्यात्त्वम्, ततो द्वादशान्यानीति विगृह्य 'तद्धितार्थ' इति समासः । ननु चैकादेशे कृते पूर्वोत्तरपदाभावाद् बह्वच्पूर्वपदं न भवति, न चान्तादिवद्भावोऽस्ति—'उभयत आश्रये नान्तादिवत्' इति ? नैष दोषः; 'नेन्द्रस्य परस्य' इति ज्ञापकादेकादेशात् पूर्वं प्रत्ययः । त्रयोदशान्यिक इति । त्रयश्च दश चेति द्वन्द्वः, 'त्रेस्त्रयः' इति त्रय आदेशः । अन्यशब्दोऽत्र सम्यक् पाठापेक्षयापपाठे वर्तत इत्यत आह—चतुर्दशापपाठा इत्यादि । कथं पुनर्ज्ञायतेऽपपाठेऽन्यशब्दो वर्तते ? इत्याह—उदात्त इत्यादि । उदात्ते कर्तव्येऽनुदात्तकरणमपपाठः । तत्र य उदात्ते कर्तव्येऽनुदात्तं करोति स यस्मादन्यं करोषीत्युच्यते ततो ज्ञायतेऽन्यशब्दोऽपपाठे वर्तत इति ॥

## हितं भक्षाः ॥ ६५ ॥

'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति, तच्च भक्षाः ।

ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद्विभक्तिविपरिणामो भविष्यति ।

अपूपभक्षणं हितमस्मै आपूपिकः । शाष्कुलिकः । मौदकिकः । हितार्थक्रिया च तद्धितवृत्तावन्तर्भवति ॥

## तदस्मै दीयते नियुक्तम् ॥ ६६ ॥

'तत्' इति प्रथमासमर्थाद् 'अस्मै' इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं तच्चेद् दीयते नियुक्तम् । नियोगेनाव्यभिचारेण

### पदमञ्जरी

*हितं भक्षाः* ॥ हितम्, भक्षाः—इति पदयोः पर्यवसानेन सम्बन्धः । अत्र 'हितम्' इति सामान्योपक्रमत्वादेकवचनं नपुंसकत्वं च । 'भक्षाः' इत्यपूपादिविशेषेषूपसंग्रहात्पुंल्लिङ्गं बहुवचनं च । अत एवाह—*यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति तच्च भक्षा इति* ।

*एवं तर्हीति* । एवं च चतुर्थ्यर्थे प्रत्ययो न षष्ठ्यर्थे । कथं तर्हि पूर्वमुक्तमस्येति षष्ठ्यर्थ इति ? एवं तर्ह्यधिकारमात्रापेक्षया तदुक्तम् । अपर आह—'हितं भक्षास्तदस्मै' इति सूत्रच्छेदः, ततः 'दीयते नियुक्तम्' इति तस्या एवेति ।

*हितार्थः क्रिया चेति* । हितार्थस्तावदुपात्तत्वादन्तर्भवति । भक्षणक्रियाप्यपूपादिशब्दानां लक्षणया तत्र वृत्तेरन्तर्भवति ॥

*तदस्मै दीयते नियुक्तम्* ॥ *अव्यभिचारो नियोग इति* । अस्मिन्पक्षे नियुक्तमिति

### न्यासः

हितं भक्षाः ॥ ननु हितशब्दयोगे चतुर्थ्या भवितव्यम्, 'हितयोगे चतुर्थी भवति' इत्युपसंख्यानात् 'तस्मै हितम्' इति निर्देशात् ? सामर्थ्याद् विभक्तिविपरिणामो भविष्यतीति । सामर्थ्यं पुनस्तदेवोपसंख्यानम् । लिङ्गञ्च—हितार्था क्रिया तद्धितवृत्तावन्तर्भवति, तेन न प्रयुज्यत इति ॥

तदस्मै दीयते नियुक्तम् ॥ ननु च 'तदस्य पण्यम्' इत्यतस्तदिति प्रथमा समर्थविभक्तिरनुवर्तिष्यते, तदपार्थकं पुनः प्रथमासमर्थविभक्त्युपादानम्; 'अस्मै' इति प्रत्ययार्थोऽप्यपार्थक एव । तथा हि 'अस्य' इत्यनुवर्तते, तत्र 'दीयते' इत्यभिसम्बन्धात्तु सम्प्रदानत्वेन भवितव्यम् । ततश्च शेषसम्बन्धे निवृत्ते चतुर्थ्यत्र विपरिणम्यते, तस्मात्

दीयत इत्यर्थः । अव्यभिचारः = नियोगः । अग्रे भोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः । आपूपिकः । शाष्कुलिकः ।

केचित्तु नियुक्तम्=नित्यमाहुः । अपूपा नित्यमस्मै दीयन्ते आपूपिकः ॥

## श्राणामांसौदनाट्टिठन् ॥ ६७ ॥

'श्राणा', 'मांसौदन' – शब्दाभ्यां टिठन् प्रत्ययो भवति, 'तदस्मै दीयते नियुक्तम्' इत्येतस्मिन्नर्थे । ठकोऽपवादः । इकार उच्चारणार्थः । टकारो ङीबर्थः । श्राणा नियुक्तमस्मै दीयते श्राणिकः, श्राणिकी । मांसौदनिकः, मांसौदनिकी ।

अथ ठञेव कस्मान्नोक्तः, न ह्यत्र ठञष्टिठनो वा विशेषोऽस्ति ?

पदमञ्जरी

क्रियाविशेषणत्वात्कर्मणि द्वितीया । *अग्रभोजनमस्मै नियुक्तं दीयत इति* । यद्यग्रभोजनं दीयते तदास्मै एवेत्येष नियोगार्थः । तेन कदाचिल्लोपेऽपि न नियुक्तताया हानिः ।

*केचित्त्विति* । अत्र पक्षे नियुक्तमित्यन्तसंयोगे द्वितीया ॥

*श्राणामांसौदनाट्टिठन्* ॥ 'श्रा पाके' क्तः, क्षीरहविषोरेव निपातनाच्छृभावाभावे 'संयोगादेरातो धातोः' इति निष्ठातकारस्य नकारः । श्राणा = यवागूः । मांसमिश्र ओदनो मांसौदनः ।

*ठञेव कस्मान्नोक्त इति* । लाघवात्स एव युक्तो वक्तुमिति भावः । *न ह्यत्रेति* । द्वे अप्येते प्रकृती पूर्वमेव वृद्धे, योऽपि 'वृद्धिनिमित्तस्य' इति पुंव-

न्यासः

'दीयते नियुक्तम्' इत्येतावदेव वक्तव्यम् ? अत्रोच्यते—समर्थविभक्त्युपादानं तावत् पूर्वसूत्रे समर्थविभक्तिविशेषः प्रत्ययमुत्पादयतीत्यस्य सूचनार्थम् । तेनेह न भवति—दुःखमस्याध्ययने वृत्तम्, अजयोऽस्याध्ययने वृत्त इति । अपपाठ एव हि वृत्ते प्रत्यय इष्यते । दीयमाने न सर्वस्मात् चतुर्थी—अरेः पृष्ठं ददातीति । स च षष्ठ्या एव प्रत्ययो विज्ञायते, चतुर्थ्यन्ताद् यथा स्यात् । एवम् 'अस्मै' इति प्रत्ययार्थो निर्दिश्यते ॥

श्राणामांसौदनाट्टिठन् ॥ अथ ठञेव कस्मान्नोक्त इति । एवं हि लघु सूत्रं भवतीति भावः । स्यादेतत्—ठञ्टिठनोर्विशेषोऽस्ति, अतष्टिठन्नुक्तो न ठञ् ? इति आह—न ह्यत्रेत्यादि । द्वयोरप्यनयोर्वृद्धत्वान्नास्ति विशेषः । योऽपि 'वृद्धिनिमित्तस्य'

मांसौदनग्रहणं सङ्घातविगृहीतार्थं केचिदिच्छन्ति, तत्र वृद्ध्यभावो विशेषः – ओदनिकः, ओदनिकी ॥

भक्तादणन्यतरस्याम् ॥ ६८ ॥

भक्तशब्दादण् प्रत्ययो भवत्यन्यतरस्यां 'तदस्मै दीयते नियुक्तम्' इत्येतस्मिन्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । भक्तमस्मै दीयते नियुक्तं भाक्तः, भाक्तिकः ॥

तत्र नियुक्तः ॥ ६९ ॥

'तत्र' इति सप्तमीसमर्थात् 'नियुक्तः' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । नियुक्तः = अधिकृतः, व्यापारित इत्यर्थः । शुल्कशालायां नियुक्तः शौल्कशालिकः । आकरिकः[1] । आपणिकः । गौल्मिकः । दौवारिकः ॥

अगारान्ताट्ठन् ॥ ७० ॥

पदमञ्जरी

द्भावप्रतिषेधः, स टिठन्यपि 'न कोपधायाः' इति भवति । *मांसौदनग्रहण-मित्यादि* । ठञ्येव वक्तव्ये टिठनो वचनमेवात्र प्रमाणमिति तेषां भावः ॥

*भक्तादणन्यतरस्याम्* ॥ भजेर्भक्तम् = अन्नम् ॥

*तत्र नियुक्तः* ॥ नियुक्तमिति प्रकृते पुनर्नियुक्तग्रहणमर्थभेदार्थमेव, तमेवार्थभेदं दर्शयति–*नियुक्तोऽधिकृत इत्यादि* । किञ्च–प्रकृतं नियुक्तग्रहणं प्रकृत्यर्थविशेषणस्य दीयत इत्यस्योपाधिः, न तस्येह प्रत्ययार्थत्वं शक्यं विज्ञातुम् ॥

न्यासः

इत्यादिना ठञि पुंवद्भावप्रतिषेधः, तस्य 'न कोपधायाः' इति टिठन्यप्यभावान्नात्र ठञ्टिठनोः कश्चिद्विशेषोऽस्ति । मांसौदनेत्यादिना विशेषं दर्शयति ।

केचिदिति वचनाद् विगृहीतग्रहणं केचिन्नेच्छन्तीत्येतदुक्तं भवति । तन्मते ठञेव वक्तव्यः । टिठन्वचनं वैचित्र्यार्थं वेदितव्यम् ॥

भक्तादणन्यतरस्याम् ॥ तत्र नियुक्तः ॥ अथ 'नियुक्तः' इति वर्तमाने पुनर्नियुक्तग्रहणं कस्मात् क्रियते ? अर्थभेदात् । न तस्य ह्यव्यभिचारलक्षणो नित्यभावोऽर्थः । अस्य तु ततोऽन्य एवार्थो यदाह–नियुक्तोऽधिकृत इत्यादि ॥

---

१. 'आन्तरिकः' इति पाठा० ।

अगारशब्दान्तात्प्रातिपदिकाट्ठन् प्रत्ययो भवति, 'तत्र नियुक्तः' इत्येतस्मिन्विषये । ठकोऽपवादः । देवागारे नियुक्तो देवागारिकः । कोष्ठागारिकः । भाण्डागारिकः ।

अध्यायिन्यदेशकालात् ॥ ७१ ॥

'तत्र' इत्येव । सप्तमीसमर्थाददेशवाचिनः प्रातिपदिकादकालवाचिनश्चाध्यायिन्यभिधेये ठक् प्रत्ययो भवति । अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते, तत इदं प्रत्ययविधानम् । श्मशानेऽधीते श्माशानिकः । चातुष्पथिकः । अकालात् — चतुर्दश्यामधीते चातुर्दशिकः । आमावास्यिकः ।

अदेशकालादिति किम् ? स्रुघ्नेऽधीते । पूर्वाह्णेऽधीते ॥

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७२ ॥

'तत्र' इत्येव । कठिनशब्दान्तात्सप्तमीसमर्थात् प्रस्तारसंस्थानशब्दाभ्यां च ठक् प्रत्ययो भवति, 'व्यवहरति' इत्येतस्मिन्नर्थे । व्यव-

पदमञ्जरी

*अध्यायिन्यदेशकालात्* ॥ अधीते इत्यध्यायी, आवश्यके णिनिः, ग्रह्यादिलक्षणो वा । *अध्यनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते इति* । अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात्पर्युदासवृत्त्या, अभक्ष्यास्पर्शनीयवत् । तद्यथा—शूद्रादिप्राणिभिर्भक्ष्यमाणमपि लशुनमभक्ष्यमित्युच्यते, स्पृश्योऽपि चण्डालोऽस्पृश्य इत्युच्यते, अप्रतिषिद्धाभ्यां भक्ष्यस्पृश्याभ्यामन्यत्वात्; तद्वदिहापि श्मशानचतुर्दश्यौ स्वरूपेण देशकालावेव सन्तावप्रतिषिद्धाभ्यां देशकालाभ्यामन्यत्वाददेशकालशब्देनोच्येते । 'अध्ययनस्य' इत्येतदध्यायिना प्रत्ययार्थेन सन्निधापितत्वाल्लभ्यते ॥

*कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति* ॥ व्यवहरतिः सम्भवति पणिना

न्यासः

अगारान्ताट् ठन् ॥ अध्यायिन्यदेशकालात् ॥ अध्येतुं शीलमस्येत्यध्यायी, ताच्छीलिको णिनिः । अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते इति । अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात् पर्युदासवृत्त्याऽभक्ष्यास्पर्शनीयवदध्ययनस्येति । अत आह—तस्याध्यायिना प्रत्ययार्थेन सन्निधापितत्वात् । न हि विनाध्ययनेनाध्याय्युपपद्यते ॥

हारः = क्रियातत्त्वम्, यथा – लौकिकव्यवहार इति। वंशकठिने व्यवहरति वांशकठिनिकश्चक्रचरः। वार्ध्रकठिनिकः। प्रास्तारिकः। सांस्थानिकः॥

## निकटे वसति॥ ७३॥

निकटशब्दात्सप्तमीसमर्थाद् 'वसति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। यस्य शास्त्रतो निकटवासस्तत्रायं विधिः। 'आरण्यकेन भिक्षुणा

पदमञ्जरी

समानार्थः, आह हि—'व्यवहृपणोः समर्थयोः' इति; अस्ति विवादे—व्यवहारे पराजित इति, अस्ति विक्षेपे—शलाकां व्यहरतीति, अस्ति क्रियातत्त्वे; तदिह चरमस्य ग्रहणं तद्धितस्वभावादित्याह—*व्यवहारः क्रियातत्त्वमिति*। यत्र देशे या क्रिया यथानुष्ठेया तत्र तस्यास्तथानुष्ठानमित्यर्थः। वंशाः = वेणवः कठिना यस्मिन्वंशकठिनो देशः। वर्ध्री = चर्मविकारः कठिना अस्मिन्वर्ध्रकठिनः, आहिताग्न्यादित्वाद्विशेषणस्य परनिपातः। चक्रयुक्तेन शकटेन चरतीति चक्रचरः, स देशाननुक्रमेण चरन् तत्रानुष्ठेयक्रियाविपरीतं चरन्नेवमुच्यते। संस्थानप्रस्तारौ सन्निवेशौ॥

*निकटे वसति*॥ अरण्यं निवासो यस्य स आरण्यकः, 'अरण्यान्मनुष्ये'

न्यासः

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति॥ अल्पाच्तरस्य प्रस्तारशब्दस्य च पूर्वनिपातमकुर्वन्नेतत् सूचयति–अन्यदपि कार्यं लक्षणप्राप्तं न भवति। तेन कठिनान्तशब्दस्य ग्रहणं न भवतीति कठिनशब्दान्तं प्रातिपदिकं गृह्यते। व्यवहरतिरयमस्ति पणिना समानार्थः—यस्य 'व्यवहृपणोः समर्थयोः' इत्यत्र ग्रहणम्, अस्ति विवादे—व्यवहारे परिहृतमिति, अस्ति च विक्षेपे शलाकां व्यवहारतीति, अस्ति च लौकिके क्रियातत्त्वे—लौकिको व्यवहार इति; इह तु क्रियातत्त्वे वर्तमानस्य ग्रहणमित्येतद्दर्शयितुमाह—व्यवहारः क्रियातत्त्वमिति। क्रियाया अविपरीतस्वभावत्वादि क्रियातत्त्वम्। यथेत्यादि। लौकिको व्यवहार इत्यत्र यथा व्यवहारः क्रियातत्त्वे वर्तते, तथेहापि दर्शयति। क्रियातत्त्वे वर्तमानस्य ग्रहणम्। 'तत्र' इति सप्तम्यधिकारे सप्तमीनिर्देशात् प्रसिद्ध्युपसंग्रहणं लभ्यते। वांशकठिनिकश्चक्रचर इति। यश्चक्रचरः सन्ननुष्ठेयां क्रियां शास्त्रोक्तमविगीतां वंशकठिनेऽनुतिष्ठति स एवमुच्यते॥

निकटे वसति॥ निकटे समीप इत्यर्थः। यत्र शास्त्रतो निकटवासस्तत्रायं विधिः। एतच्च सप्तम्यां समर्थविभक्तौ लब्धायां पुनः सप्तमीनिर्देशात् प्रसिद्ध्युपसंग्रहणेन

ग्रामात्क्रोशे वस्तव्यम्' इति शास्त्रम् । निकटे वसति नैकटिको भिक्षुः ॥

**आवसथात् ष्ठल् ॥ ७४ ॥**

'तत्र' इत्येव । आवसथशब्दात्सप्तमीसमर्थाद् 'वसति' इत्येतस्मिन्नर्थे ष्ठल् प्रत्ययो भवति । लकारः स्वरार्थः, षकारो ङीषर्थः । आवसथे वसति आवसथिकः । आवसथिकी ।

ठकः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययो विधीयते ॥

**प्राग्घिताद्यत् ॥ ७५ ॥**

'तस्मै हितम्' इति वक्ष्यति । प्रागेतस्माद्धितसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो यत्प्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति – 'तद्वहति रथयुगप्रासङ्गम्' । रथ्यः । युग्यः । प्रासङ्ग्यः ॥

**तद्वहति रथयुगप्रासङ्गम् ॥ ७६ ॥**

'तत्' इति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यः 'वहति' इत्येतस्मि-

पदमञ्जरी

इति वुञ् । भिक्षुः=संन्यासी । *ग्रामात्क्रोशे इति* । 'यतश्च निर्द्धारणम्' इति पञ्चमी । अयं च विवेषोऽभिधानस्वभावाल्लभ्यते ॥

*आवसथात् ष्ठल्* ॥ आवसत्येतमिति आवसथः, 'उपसर्गे वसेः' इत्यथप्रत्ययः । ठकः *पूर्णो विधिरिति* । प्राग्वहतीयस्य ठको विधानं पूर्णमित्यर्थः, *अवधिरिति* पाठे पूर्णः प्राप्त इत्यर्थः ॥

*तद्वहति रथयुगप्रासङ्गम्* ॥ ननु य एवार्थो रथं वहतीति स एव रथस्य वोढेति, तत्र तस्येदं रथाद्यदित्येव सिद्धं नार्थो रथग्रहणेन ? ननु तत्रोक्तं रथाङ्ग एवेष्यत इति, वोढर्यपि प्रयोगदर्शनादिष्यताम् ? इदं तर्हि प्रयोजनम्—द्वौ

न्यासः

लभ्यते । स ह्येवमर्थः कृतः—इष्टे विषये सप्तम्यन्ते यथा स्यात्, अनिष्टान् मा भूत् । स पुनः शास्त्रतो निकटवास आरण्यकस्य भिक्षोरिति दर्शयति—आरण्यकेन भिक्षुणेत्यादि ॥

आवसथात् ष्ठल् ॥ प्राग्घिताद् यत् ॥ तद्वहति रथयुगप्रासङ्गम् ॥ तदिति द्वितीयासमर्थविभक्तौ लब्धायां रथादीनां द्वितीयानिर्देश इष्टाद् यथा स्यात्, अनिष्टान्मा भूत् । तेनेहैव भवति—गौर्युग्य इति, इह न भवति—युगं वहति राजा

न्नर्थे यत्प्रत्ययो भवति । रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ।

'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविध्युपसंख्यानात् परमरथ्य इत्यपि भवति ॥

## धुरो यड्ढकौ ॥ ७७ ॥

'तद्वहति' इत्येव । 'धुर्' इत्येतस्माद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थे यत् ढक् – इत्येतौ प्रत्ययौ भवतः । धुरं वहतीति धुर्यः, धौरेयः ॥

### पदमञ्जरी

रथौ वहति द्विरथ्यः, 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुग्मा भूत्, 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः । 'युग्यं च पत्त्रे' इत्येवं सिद्धम् । इह युगग्रहणमयुग्यमित्यत्र 'ययतोश्चातदर्थे' इति स्वरार्थम्, निपातनस्य तु क्यबन्तत्वादेष स्वरो न स्यात् । रथाङ्गवचनोऽयं युगशब्दः, इह न भवति— युगं वहति राजा कलिं द्वापरं वेति । प्रासङ्गशब्दो वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते तद्वाची गृह्यते, प्रासज्यते इति प्रासङ्गः, इह न भवति— प्रसङ्गादागतः प्रासङ्गस्तं वहतीति । एतच्चाभिधानस्वभावाल्लभ्यते ॥

धुरो यड्ढकौ ॥ धूर्धूर्वतेः, 'भ्राजभास' इति क्विप्, 'राल्लोपः' । धुरं वहतीति धुर्य इति । 'न भकुर्छुराम्' इति प्रतिषेधात् 'हलि च' इति दीर्घाभावः । धौरेयो भविता पितुरिति च दृश्यते, धौरेढक्त्र विधीयते, न तु ढकञ् । धौरेयक इति स्वार्थिके कनि भवति ।

इह 'धुरो ढक् च' इति वक्तव्यम्, चकारात्प्राग्घितीयो यद्भविष्यति ॥

### न्यासः

कलिं द्वापरं वेति । तथा प्रासज्यत इति प्रासङ्गः, यत् काष्ठं वनकाले वत्सानां कण्ठ आसंज्यते तत्प्रासङ्गः, तं वहति प्रासङ्ग्यः । इह न भवति—प्रसङ्गादागतं प्रासङ्गम् । 'युग्यञ्च पत्त्रे' इति निपातनाद् युग्यशब्दे सिद्धे युगग्रहणं स्वरार्थम् । न युग्यमयुग्यमित्यत्र नञो गुणप्रतिषेधे 'सम्पाद्यर्हहितालमर्थास्तद्धिताः' इत्यतो नञ इत्यनुवर्तमाने 'ययतोश्चातदर्थे' इति नञ उत्तरस्यान्तोदात्तत्वं यथा स्यात् । तेन न ह्येकस्वरो लभ्यते । तस्य क्यबन्तत्वात् ॥

धुरो यड्ढकौ ॥ अथ 'धुरो ढक् च' इत्येवं कस्मान्नोक्तम्, चकारो समुच्चयार्थः, यथाभिहिते प्रत्यये विज्ञायमाने यदेव भविष्यति ? नैतदेवम्; यो हि धुरं वहति धुरोऽसौ वोढा भवति । तस्य यथाविहिते प्रत्यते विज्ञायमाने 'तस्येदम्' इत्यणपि स्यात् । यद्ग्रहणात् तस्येदंविवक्षायामपि यदेव भवति ॥

## खः सर्वधुरात् ॥ ७८ ॥

'तद्वहति' इत्येव । सर्वधुराशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थे खः प्रत्ययो भवति । सर्वधुरां वहति सर्वधुरीणः ।

स्त्रीलिङ्गे न्याय्ये 'सर्वधुरात्' इति प्रातिपदिकमात्रापेक्षो निर्देशः । 'खः' इति योगविभागः कर्त्तव्य इष्टसंग्रहार्थः । उत्तरधुरीणः । दक्षिणधुरीणः ॥

## एकधुराल्लुक् च ॥ ७९ ॥

'तद्वहति' इत्येव । एकधुराशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्ये-

पदमञ्जरी

खः सर्वधुरात् ॥ *स्त्रीलिङ्गनिर्देशो न्याय्य इति* । सर्वा चासौ धूश्चेति 'पूर्वकाल' इत्यादिना समासः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः, तत्र धूःशब्दस्य स्त्रीलिङ्गत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति वचनात् स्त्रीलिङ्गनिर्देशस्य न्याय्यत्वम्, यथा—'बन्धुनि बहुव्रीहौ' इत्यत्र । *दक्षिणधुरीणः* । दक्षिणां धुरं वहति, उत्तरां धुरं वहतीति तद्धितार्थे समासः, ततोऽकारः समासान्तः ॥

एकधुराल्लुक् च ॥ *एकधुरादिति* निर्देशः सर्वधुरादित्यनेन व्याख्यातः । चकारेण खोऽनुकृष्यते, तेन स तावद्विधेयः, प्रत्ययादर्शनस्य च लुक् संज्ञा । न चान्योऽत्र प्रत्ययः, तेन खस्यैव लुग्विज्ञायते, तस्य यदि लुक् स्याच्चकारेणानुकृष्य विधानमनर्थकं स्यात् । एकधुराल्लुगिति वक्तव्यम्, लुक् स्वभावाद-

न्यासः

खः सर्वधुरात् ॥ सर्वधुरमिति । सर्वा चासौ धूश्चेति 'पूर्वकालैक' इत्यादिना समासः । 'ऋक्पूरब्धूः' इत्यादिना समासान्तः ।

स्त्रीलिङ्गे न्याय्य इति । तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति धूःशब्दस्य यल्लिङ्गं तदेव न्याय्यमिति । तत्र सर्वधुरायाः' इति सूत्रे कर्त्तव्ये यतः सर्वधुरादिति नपुंसकलिङ्गेन निर्देशः स शब्दरूपापेक्षः, अर्थापेक्षे हि निर्देशे परवल्लिङ्गता भवति । अयन्तु शब्दरूपापेक्षः, शब्दरूपञ्च नपुंसकमिति नपुंसकेनैव निर्देशो युक्तः । अर्थविवक्षायां तु स्त्रीलिङ्गमेव भवति—सर्वधुरां वहतीति ॥

एकधुराल्लुक् च ॥ 'एकधुरात्' इत्ययमपि शब्दरूपापेक्षया निर्देशः । अर्थापेक्षया हि परवल्लिङ्गता भवति । अत्रापि पूर्ववत् समाससमासान्तौ वेदितव्यौ । वचनसामर्थ्यात् पक्षे लुग् विधीयते । यदि हि नित्यो लुक् स्यात् खस्य विधानमनर्थकं स्यात्, यत एव हि लुकं विदध्यात् । ननु चैकधुरशब्दात् केनचिद् विहितो न स्यात्, तस्य कथं लुक् शक्यते विधातुम् ? लुग्वचनादेव यतोऽपि विधिरनुगम्यते इत्यदोषः ॥

तस्मिन्नर्थे खः प्रत्ययो भवति तस्य च लुग्भवति। वचनसामर्थ्यात्पक्षे लुग्भवति। एकधुरां वहति एकधुरीणः। एकधुरः ॥

शकटादण् ॥ ८० ॥

'तद्वहति' इत्येव। शकटशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति। शकटं वहति शाकटो गौः ॥

हलसीराट्ठक् ॥ ८१ ॥

'तद्वहति' इत्येव। हलसीरशब्दाभ्यां द्वितीयासमर्थाभ्यां 'वहति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हलं वहति हालिकः। सैरिकः ॥

पदमञ्जरी

नन्तरस्य खस्य प्राकरणिकस्य यतो वा विधिरनुमास्यते, तदाह—*तस्य च लुग्भवतीति एकधुरीण इति*। एकां धुरं वहतीति तद्धितार्थे समासः, तत्रोक्तोऽकारः समासान्तः, ततः खः ॥

*शकटादण्* ॥ शकटादण्विधानमनर्थकम्। कथं शाकट इति? 'तस्येदम्' इत्यण् भविष्यति, यो हि शकटं वहति शकटस्यासौ वोढा भवति? तत्राहुः— आरम्भसामर्थ्यादत्रापि तदन्तविधिः, तेन द्वे शकटे वहति, द्वैशकट इति प्राग्दीव्यतीयो लुग्न भवति ॥

*हलसीराट्ठक्* ॥ इह यो हलं वहति सीरं च तस्यासौ वोढा भवति, तत्र तस्येदं हलसीराट्ठगित्येव हालिकः सैरिक इति सिद्धम्, नार्थोऽनेन? अत्राहुः— आरम्भसामर्थ्यादत्रापि तदन्तविधिः, द्वैहालिकः, द्वैसीरिकः, द्वैसीरिक इति लुङ् न भवतीति ॥

न्यासः

शकटादण् ॥ रथशकटहलसीरेभ्यः प्रत्ययविधानमनर्थकम्; 'तस्येदम्' इत्यनैव सिद्धत्वात्। शब्दभेदाद्विधानमिति चेदन्यो हि शब्दो रथं वहतीति, अन्यो हि रथस्य वोढेति। तदाऽर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात् सिद्धम्। न हि कश्चिद् रथ्यमित्युक्ते रथस्यायमित्येवावैति, वहत्यर्थः प्रतीयते। तस्मात् स्यादेव रथाद् यत् ॥

हलसीराट्ठक् ॥ शकटादणेवोत्सर्गः कर्तव्यः। एवञ्च वाक्यं करिष्याम', यथा— रथस्य वोढा रथ्य इति ? न तत्र विधीयते; तत्र प्रत्ययविधाने 'द्विगोर्लुगनपत्ये' इत्यनेन लुक् प्राप्नोति। अनेन पुनर्न प्राप्नोति, कस्मात्? 'प्राग्दीव्यतोऽण्' इत्यधिकारात्। ननु च क्रियमाणेऽपीह द्विगोरण् प्रत्ययो न प्राप्नोति, 'ग्रहणवता प्रातिपदिकेन तदन्त-

## संज्ञायां जन्याः ॥ ८२ ॥

'तद्वहति' इत्येव । जनीशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते । जनीं वहति जन्या = जामातुर्वयस्या । सा हि विवाहादिषु जामातृसमीपं प्रापयति । जनी = वधूरुच्यते ।

## विध्यत्यधनुषा ॥ ८३ ॥

'तत्' इति द्वितीयासमर्थाद् 'विद्धयति' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, न चेद्धनुष्करणं भवति । पादौ विद्धयन्ति पद्याः शर्कराः । ऊरव्याः कण्टकाः ।

अधनुषेति किम् ? पादौ विद्धयति धनुषा ।

पदमञ्जरी

*संज्ञायां जन्याः* ॥ *जामातुर्वयस्येति* । सा हि प्रणयकलहादौ जनीं जामातुः समीपं प्रापयति । *जनी वधूरुच्यत इति* । जायतेऽस्यां गर्भ इति कृत्वा । 'जनिवध्योश्च' इति वृद्धिप्रतिषेधे 'कृदिकारादक्तिनः' इति ङीष् ॥

*विध्यत्यधनुषा* ॥ *पादौ विध्यन्ति पद्या इति* । तदन्तीत्यर्थः । 'पद्यत्यतदर्थे' इति पद्भावः । *ऊरव्या इति* । 'ओर्गुणः', 'वान्तो यि प्रत्यये' ।

*नन्वसमर्थत्वादिति* । सापक्षमसमर्थं भवतीत्यसामर्थ्यम् । प्रत्ययार्थो ह्यत्र

न्यासः

विधिर्नास्ति' इति ? न; एतदेव हि 'शकटादण्' इत्येवमादिकं ज्ञापकं भवति तदन्तविधेरिति । तेन द्वैहलिकः, द्वैशकटः, द्वैसीरिक इत्येवमादिकं सिद्धं भवति ॥

संज्ञायां जन्याः ॥ अस्यत्यत्र गर्भ इति 'इन् सर्वधातुभ्यः', जनयतीति वा । अत्र 'कृदिकारादक्तिनः' 'सर्वतोऽक्तिन्नर्थात्' इति ङीप्—जनी, तां वहन्ति जन्याः = जामातुर्वयस्याः । विवाहमानितामिधीयते । केचित् कर्तरि जायतेऽस्यां गर्भ इति 'कृत्यल्युटो बहुलम्' इति ल्युटि जननशब्दाच्च ङीपि नकाराकारयोर्लोपेन साधयन्ति । ननु च जनीशब्दादेव यद् विधेयः ? सर्वकालार्थं निपातनमित्येके ॥

विध्यत्यधनुषा ॥ पद्या इति । 'पद्यत्यतदर्थे' इति पादशब्दस्य पद्भावः । ऊरव्या इति । 'वान्तो यि प्रत्यये' इत्यवादेशः ।

ननु चेत्यादि । धनुरत्र प्रकृत्यर्थः, प्रत्ययार्थेन वाध्यं करणमपेक्ष्यते, तेन सापेक्षमसमर्थं भवतीत्यसामर्थ्यम् ? ननु च व्यधनमेवात्र सापेक्षम्, क्रियया कारणं सम्बध्यत इति कृत्वा, तच्च व्यधनं क्रियाप्रधानत्वादाख्यातस्य प्रधानं भवति, प्रधानस्य सापेक्षस्य

नन्तसमर्थत्वादनभिधानाच्च प्रत्ययो न भवति, न हि धनुषा पद्य इत्युक्ते विवक्षितोऽर्थः प्रतीयते ? एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते, यस्यां धनुष्करणं न सम्भाव्यते इति। तेनेह न भवति – चौरं विध्यति, शत्रुं विध्यति देवदत्त इति ॥

पदमञ्जरी

बाह्यम् करणं धनुरपेक्षते। ननु व्यधनमत्र सापेक्षम्, करणक्रिययोः सम्बन्धात्, व्यधनं च प्रधानम्, क्रियाप्रधानत्वादाख्यातस्य, भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, यथा—राजपुरुषः शोभन इति ? भवतु क्रियाप्रधानमाख्यातम्, तद्धितस्तु स्वभावात्साधनप्रधानः। क्रिया तु गुणभूतेत्युक्तम् सा च धनुरपेक्षत इत्यसामर्थ्यम्। *अनभिधानाच्चेति*। अत्रैवोपपत्त्यन्तरमनभिधानमेव दर्शयति। न *हीति*। 'धनुषा पद्यः' इत्युक्ते इत्थम्भूतलक्षणा सहयोगलक्षणा वा तृतीया गम्यते, न तु पादौ धनुषा विध्यतीत्ययं विवक्षितोऽर्थः। अवश्यं चैतदेवं विज्ञेयम्—असमर्थत्वादनभिधानाच्चात्र प्रत्ययो न भवतीति। यो हि मन्यते—'अधनुषेति प्रतिषेधात्प्रत्ययो न भवति' इति, तस्य शर्कराभिः पादौ विद्ध्यति कण्टकैरूरू विद्ध्यतीत्यत्र प्रत्ययः स्यादेव ? एवं तर्हि विशेषोपलक्षणपरोऽत्र धनुषेति निर्देशः, न तु धनुषः करणत्वप्रतिषेधपर इत्यर्थः। *धनुष्प्रतिषेधेनेति*। 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वमुपलक्षणत्वमेव प्रतिपादयति। *यस्यामिति*। तेनेह न

न्यासः

भवत्येव वृत्तिः, यथा—राजपुरुषोऽयमभिरूप इति ? नैतदस्ति; यद्यपि क्रियाप्रधानमाख्यातम्, तथापीह प्रत्ययार्थ एव प्रधानम्। प्रत्ययार्थस्य साधनं व्यद्धा। तथा च प्रागुक्तम्—'क्रियाप्रधानत्वेऽपि चाख्यातस्य तद्धितः स्वभावात् साधनप्रधानः' इति। [illegible] क्रियाद्वारेण व्यद्धुरपि करणं प्रत्यपेक्षा भवतीति कल्प्यते, तथा च सति प्रकृत्यर्थस्यापि क्रिया द्वारेणैव करणं प्रत्यपेक्षा भवतीति केन वार्यते। न हि पादौ विध्यति धनुषेति करणविवक्षायां व्यधनमात्रस्य पादौ कर्म धनुष्करणविशिष्टस्य। तस्माद् व्यधनस्यापि क्रियाकरणे प्रत्यपेक्षेत्यसामर्थ्यात् प्रत्ययो न भविष्यति। अनभिधाच्चेति। अत्रैवोपपत्त्यन्तरम्। कथं पुनरुपपत्त्यन्तरमित्याह—न हीत्यादि। धनुषा पद्य इत्युक्ते धनुषः पद्यं प्रत्युपलक्षणभावः सम्भाव्यते, यथा—शिखया परिव्राजकमद्राक्षीदित्यत्र शिखया परिव्राजकं प्रति। धनुषा सह दृष्टः पद्य इत्येषोऽप्यर्थश्चाशङ्क्यते। न तु पादौ विध्यति धनुषेत्ययमर्थो विवक्षितः प्रतीयते। एवं तर्हीत्यादिना क्रियाविशेषणपरो धनुषेति निर्देशः, न धनुषः करणत्वप्रतिषेधः। प्रतिषेधे प्रधानमिति दर्शयति—तेने-

१. 'तेन दीव्यति' (पा. सू. ४।४।२) इत्यत्र वृत्तौ।

## धनगणं लब्धा ॥ ८४ ॥

'तत्' इत्येव। धनगणशब्दाभ्यां द्वितीयासमर्थाभ्याम् 'लब्धा' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। धन्यः। गण्यः। लब्धेति तृनन्तम्, तेन द्वितीया समर्था विभक्तिर्युज्यते॥

## अन्नाण्णः ॥ ८५ ॥

अन्नशब्दात् 'तत्' इति द्वितीयासमर्थात् 'लब्धा' इत्येतस्मिन्नर्थे णः प्रत्ययो भवति। अन्नं लब्धा आन्नः॥

## वशं गतः ॥ ८६ ॥

वशशब्दात् 'तत्' इति द्वितीयासमर्थाद् 'गतः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। वशं गतः वश्यः = कामप्राप्तः, विधेय इत्यर्थः॥

### पदमञ्जरी

भवति—चौरं विद्ध्यतीति। सम्भाव्यते हि प्रच्यवच्छेदनादिकायां चोरस्य व्यधनक्रियायां धनुषः करणत्वम्॥

*धनगणं लब्धा*॥ लब्धेति तृनन्तमेतत्, तृजन्ते तु 'कर्तृकर्मणोः कृति' इति षष्ठ्या भवितव्यम्। तृनन्ते तु 'न लोकाव्ययनिष्ठा' इति प्रतिषेधाद् द्वितीयैव भवति॥

*वशङ्गतः*॥ 'वश कान्तौ', वशनं वशः, 'वशिरण्योरुपसङ्ख्यानम्' इत्यच्। कामः = इच्छा, तां प्राप्त इति। परेच्छानुगामीत्यर्थः॥

### न्यासः

त्यादिना। क्रियत एव धनुषः प्रतिषेधः, तेन क्रिया विशेष्यते। तेन चौरं विध्यतीत्यादौ न भविष्यति। सम्भाव्यते हि चौरादिव्यधनक्रियया धनुषः करणत्वम्॥

धनगणं लब्धा॥ कथं पुनरत्र द्वितीया समर्थविभक्तिः, यावता 'कर्तृकर्मणोः कृति' इति षष्ठ्या भवितव्यम्? इत्याह—लब्धेति तृन्नन्तमित्यादि। तृन्नन्तस्य हि प्रयोगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधेन द्वितीया भवति॥

अन्नाण्णः॥ वशं गतः॥ वशः = कामः, इच्छा। वशेर्धातोरत एव निपातनादप्रत्ययः। द्वितीयासमर्थविभक्तौ प्रकृतायां वशमिति द्वितीयानिर्देश इष्टे विषये द्वितीयान्ताद् यथा स्यात्, अनिष्टान्मा भूत्। तेनेहैव भवति—वशं गतः = इच्छाप्राप्तः, विधेय इत्यत्र न भवति॥

## पदमस्मिन् दृश्यम् ॥ ८७ ॥

निर्देशादेव प्रथमा समर्थविभक्तिः। पदशब्दात्प्रथमासमर्थाद् दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत्प्रत्ययो भवति। पदं दृश्यमस्मिन् पद्यः कर्दमः। पद्याः पांसवः। शक्यार्थे कृत्यप्रत्ययः। शक्यते यस्मिन् पदं द्रष्टुं प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः। कर्दमस्यावस्थोच्यते – नातिद्रवो नातिशुष्क इति ॥

## मूलमस्यावर्हि ॥ ८८ ॥

मूलशब्दात्प्रथमासमर्थाद् 'आबर्हि' इत्येवमुपाधिकादस्येति षष्ठ्यर्थे यत्प्रत्ययो भवति। मूलमेषामावर्हि मूल्या माषाः। मूल्या मुद्गाः। 'वृहू उद्यमे', येषां मूलमावृह्यते उत्पाट्यते ते मूल्याः, सुष्ठु निष्पन्नाः। मूलोत्पाटनेन विना ग्रहीतुं न शक्यन्ते इत्यर्थः ॥

### पदमञ्जरी

*पदमस्मिन् दृश्यम्* ॥ *निर्देशादेव प्रथमा समर्थविभक्तिरिति*। द्वितीया तु न भवति; दृश्यमिति क्यपा कर्मणोऽभिहितत्वात्। *शक्यार्थे कृत्यप्रत्यय इति*। तेन योग्यत्वे सति पदस्पर्शनाभावेऽपि पद्यः कर्दम इति प्रयोग उपपद्यत इति भावः। मुद्रा = सन्निवेशः, प्रतिरूपा मुद्रा *प्रतिमुद्रा*। *नातिद्रवो नातिशुष्क इति*। पांसवोऽपि नात्यल्पा नातिबहुलाः पद्याः ॥

*मूलमस्यावर्हि* ॥ *प्रथमासमर्थादिति*। द्वितीयाया निमित्ताभावान्निर्देशादेव प्रथमैव भवतीति भावः। 'वृहू उद्यमने', वादिरयं न बादिः। दृश्यते हि 'उद्वृह रक्षः सहमूलमिन्द्र ह्यस्सुष्मिक् प्रवृहाण', 'तद्वहात्मनोदेवा' इति च। आवर्हणमावर्हः = उत्पाटनम्, आवर्होऽस्यास्तीत्यावर्हि, सुष्ठु पक्का न शक्यन्ते

### न्यासः

पदमस्मिन् दृश्यम् ॥ कर्मणः कृतैवाभिहितत्वाद् द्वितीया न सम्भवति। न च द्वितीयाप्रथमाभ्यामन्यत्र विभक्तौ पदमिति रूपमुपपद्यते। तस्मात् प्रथमान्तमेवैतदिति निश्चित्याह – निर्देशादेवेत्यादि ॥

मूलमस्यावर्हि ॥ आवर्हणमावर्हः, उत्पाटनमित्यर्थः। वृहेराङ्पूर्वाद्भावे घञ्, आवर्होऽस्यास्तीत्यावर्हीति। द्वितीयाविभक्तिरिह नास्ति। न च प्रथमाद्वितीयाभ्यामन्यस्यां विभक्तौ मूलमित्येतद्रूपमुपपद्यते। तस्मात् प्रथमान्तमेवैतत्। निर्देशादेव प्रथमा समर्थविभक्तिरुपपद्यते इति मत्वाऽऽह – मूलशब्दात् प्रथमासमर्थादिति ॥

## संज्ञायां धेनुष्या ॥ ८९ ॥

'धेनुष्या' इति निपात्यते संज्ञायां विषये। संज्ञाग्रहणमभिधेयनियमार्थम्। धेनोः षुगागमो यश्च प्रत्ययो निपात्यते। अन्तोदात्तोऽपि ह्ययमिष्यते। या धेनुरुत्तमर्णाय ऋणप्रदानाद्दोहनार्थं दीयते सा धेनुष्या। पीतदुग्धेति यस्याः प्रसिद्धिः। धेनुष्यां भवते ददामि ॥

## गृहपतिना संयुक्ते ञ्यः ॥ ९० ॥

निर्देशादेव तृतीया समर्थविभक्तिः। गृहपतिशब्दात् तृतीयासमर्थात् 'संयुक्ते' इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति। गृहपतिना संयुक्तः गार्हपत्योऽग्निः।

अन्यस्यापि गृहपतिना संयोगोऽस्ति, तत्र संज्ञाधिकारादतिप्रसङ्गनिवृत्तिः ॥

### पदमञ्जरी

संग्रहीतुम्। मध्यतो लूयमाने कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ता इत्यर्थः ॥

*संज्ञायां धेनुष्या* ॥ *यश्च प्रत्ययो निपात्यत इति*। कुत्र? अनिर्दिष्टार्थत्वात्स्वार्थे, तदाह—*या धेनुरुत्तमर्णायेति*। कथं पुनर्यति प्रकृते यप्रत्ययो निपात्यते? तत्राह—*अन्तोदात्तोऽपि ह्ययमिष्यत इति*। यति हि 'तित्स्वरितम्' इति स्वरितः स्याद्, अन्तोदात्तश्चेष्यते, न केवलं संज्ञायाम्, अपि त्वन्तोदात्तोऽपीत्यपिशब्दस्यार्थः ॥

*गृहपतिना संयुक्ते ञ्यः* ॥ *अन्यस्यापीत्यादि*। गृहपतिर्हि यजमानः, स यथा गार्हपत्ये कार्याणि करोति तथा दक्षिणाग्नावाहवनीये च, भूयो वाऽऽहवनीये; तस्मादन्यस्यापि गृहपतिना योगोऽस्ति। यद्येवम्, तत्राप्यतिप्रसङ्गः? इत्यत आह—*तत्रेति*। अपर आह—गृहपतिरग्निविशेषः, तेन संयोगो गार्हपत्य-

### न्यासः

संज्ञायां धेनुष्या ॥ यश्च प्रत्यय इति। किमर्थं पुनर्यप्रत्ययो निपात्यते? इत्याह—अन्तोदात्तो ह्ययमपीष्यत इति। यति सति तित्स्वरेणान्तस्वरितत्वात्। अन्तोदात्तश्चेष्यते। तस्माद् यप्रत्यय एव न्याय्यः। न केवलं संज्ञाविषय एवेष्यते; अपि त्वन्तोदात्तोऽपीत्येषोऽपिशब्दस्यार्थः ॥

गृहपतिना संयुक्ते ञ्यः ॥ संयुक्ते इति। सम्बद्ध इत्यर्थः।

अन्यस्यापीत्यादि। यथैव हि गृहपतिर्यजमानो गार्हपत्ये कार्यं करोति, तथा

## नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्या- नाम्यसमसमितसम्मितेषु ॥ ९१ ॥

नावादिभ्योऽष्टभ्यः शब्देभ्योऽष्टस्वेव तार्यादिष्वर्थेषु यथासंख्यं यत्प्रत्ययो भवति। प्रत्ययार्थद्वारेण तृतीया समर्थविभक्तिर्लभ्यते। नावा तार्यं नाव्यमुदकम्। नाव्या नदी। शक्यार्थे कृत्यः।

वयसा तुल्यो वयस्यः सखा। संज्ञाधिकारोऽभिधेयनियमार्थः, तेन वयसा तुल्ये शत्रौ न भवति।

पदमञ्जरी

स्यैवाग्निहोत्रेऽपि गार्हपत्ये अग्नये गृहपतये प्रजापतये, पत्नीसंयाजेषु च तत्रै-वेज्यते इति, तत्रापि गृहपतिरग्निर्गृह्यते न यजमान इत्यत्र संज्ञाधिकार एव शरणम् ॥

*नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मि-तेषु* ॥ तत्र नावादीनां प्रथममूलान्तानां पञ्चानां द्वितीयमूलादीनां च त्रयाणां पूर्वं पृथक्पृथक् द्वन्द्वं कृत्वा ततो द्वयोरपरो द्वन्द्वः कृतः, न त्वष्टानां युगपत्सह-विवक्षा; किं सिद्धं भवति? न मूलयोः सारूप्यादेकशेषो भवति। का पुनरत्र समर्थविभक्तिः? इत्यत आह—*प्रत्ययार्थद्वारेणेति*। द्वारम् = मुखम्, उपायः। इह तार्यादयः प्रत्ययार्थाः, तत्सम्बन्धे करणे कर्तरि हेतौ तुल्यार्थयोगे च यथा-सम्भवं तृतीयैव भवति। *नाव्यमिति*। अत्र तावत्तरणक्रियायां करणत्वम्।

*वयसा तुल्य इति*। तत्र हेतुमाह—यो येन वयस्तुल्यः स तं प्रति वयस्यः। *शत्रौ न भवतीति*। किं तु मित्त्र एव भवति।

न्यासः

दक्षिणान्नावाहवनीये च। तस्मादन्यस्यापि दक्षिणादेर्गृहपतिना संयोगोऽस्ति। यद्येवम्, अतिप्रसङ्गोऽन्यत्र प्राप्नोति? इत्याह—तत्र संज्ञाधिकारादित्यादि। अभिधेयनियमार्थं संज्ञाग्रहणमनुवर्तते, तेनेह न भवत्यतिप्रसङ्गः ॥

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमित-सम्मितेषु ॥ कथं पुनरिहापि समर्थविभक्तिर्लभ्यते, यावता नेहोपात्ता, नाप्यनुवर्तते? इत्याह—प्रत्ययार्थद्वारेणेत्यादि। द्वारम् = उपायः, कारकमित्यर्थः। इह तार्यादयः प्रत्ययार्थाः। तत्सम्बन्धे कर्तरि करणे हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति। ततः समर्थविभक्तिर्लभ्यते। नाव्यमिति। 'वान्तो यि प्रत्यये' इत्यवादेशः अत्र नावस्तरणक्रियायां कर्तृत्वं करणत्वञ्च विवक्षावशाद् भवतीति करणे, कर्तरि वा तृतीया। एवमन्यत्रापि यथायोगं वेदितव्यम्।

धर्मेण प्राप्यं धर्म्यम्। ननु च 'धर्मादनपेते' इति वक्ष्यमाणेनैव सिद्धम् ? नैतदस्ति; धर्मं यदनुवर्त्तते तद्धर्मादनपेतमित्युच्यते, फलं तु धर्मादपेत्यैव; कार्यविरोधित्वाद्धर्मस्य।

विषेण वध्यो विष्यः। विषेण वधमर्हतीत्यर्थः।

मूलेनानाम्यं मूल्यम्। आनाम्यम् = अभिभवनीयम्। पटादीनामुत्पत्तिकारणं मूलम्, तेन तदभिभूयते शेषीक्रियते। मूलं हि सगुणं मूल्यं करोति। 'पोरदुपधात्' इति यति प्राप्ते आनाम्यमिति निपातनाद् ण्यत्। मूलेन समो मूल्यः पटः। उपादानेन समानफल इत्यर्थः।

पदमञ्जरी

*ननु चेति*। धर्मेण प्राप्यं सुखादि, फलमपि धर्मादनपेतमेव; कार्यस्य कारणाविनाभावादिति प्रश्नः। *धर्मं यदनुवर्तत इति*। अनादिः शिष्टसमाचारस्तज्जन्यो वाऽऽत्मगुणो धर्मः, यदनुष्ठानमनुवर्तते तद्धर्मादनपेतम्, फलं तु धर्मादपैत्येवेति कुतः ? इत्याह—*कार्यविरोधित्वादिति*। धर्मस्य कार्यं सुखानुभवः, कार्यं विरोधि नाशकं यस्य स कार्यविरोधी, तस्य भावः कार्यविरोधित्वं तस्मादित्यर्थः। उत्पन्ने हि फले धर्मो नश्यति, अन्यथा सकृद्धर्मे कृते स्वर्गमनुभवतः प्रभवो न स्यात्।

*वधमर्हतीत्यर्थ इति*। वध्यशब्दस्य 'दण्डादिभ्यो यः' इत्यत्रार्थे व्युत्पादितत्वात्।

*आनाम्यमभिभवनीयमिति*। अनेकार्थत्वाद्धातूनामापूर्वो नमिरभिभवे वर्तते।

*पटादीनामुत्पत्तिकारणमिति*। पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं यद्वस्तु तन्मूलशब्दवाच्यमित्यर्थः। *तेनेति*। मूलेन। *तदिति*। मूल्यम्। *शेषीक्रियत इति*। शेषीकरणमेवात्राभिभव इत्यर्थः। गुणभावमापद्यते कथमित्याह—*मूलं हि सगुणं मूल्यं करोतीति*। मूल्यमिह कर्तृ, मूलं कर्म, पटादिषु विक्रीय-

न्यासः

धर्मेण प्राप्यं धर्म्यमिति। तत् पुनर्धर्मस्य फलं स्वर्गाद्युच्यते। ननु चेत्यादि। ननु च धर्मेण यत्प्राप्यं तद्धर्मादनपेतं भवतीति भावः।

विष्य इति। विषेण वधमर्हतीत्यर्थः। वध्यशब्दस्य 'दण्डादिभ्यो यः' इत्यर्हार्थे व्युत्पादितत्वात्।

आनाम्यमभिभवनीयमिति। अनेकार्थत्वाद् धातूनामत्र नमिरभिभवे वर्तते। पटादीनामुत्पत्तिकारणं मूलमिति। दत्तेन हिरण्येन पटादीनामुत्पत्तिर्भवति। तेनेति। मूलेन। तदिति। मूल्यम्। शेषीक्रियत इति। अनेनाभिभूयत इत्यस्यार्थमाचष्टे।

सीतया समितं सीत्यं क्षेत्रम् । समितम् = सङ्गतमित्यर्थः ॥

'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरपीष्यते । परमसीत्यम् उत्तमसीत्यम् । द्विसीत्यम् । त्रिसीत्यम् ।

तुलया सम्मितं तुल्यम् । सम्मितम् = समानम्, सदृशमित्यर्थः ।

पदमञ्जरी

माणेषु यन्मूलातिरिक्तं वस्तु लाभो नाम तन्मूल्यम्, गुणो भागः, स पुनरिह मूल्यमेव, तेन सह वर्तते सगुणः, हिशब्दो हेतौ । एतदुक्तं भवति—यस्मान्मूल्यमात्मनैव भागभूतेन सभागं मूलं करोति तस्मान्मूले मूल्यमभिभूयते शेषीक्रियते, मूल्ये सति तेन गुणेन सगुणं मूलं भवति; इयमेव चावनतिः, अयमेवाभिभवः, इदमेव शेषीकरणम् । लोके तु यावता द्रव्येण पटादिको विक्रीयते तत्र समुदाये मूल्यशब्दः प्रसिद्धः, न मूलातिरिक्ते भागे, स च मूल्यसम्भवादौपचारिकः । एवं च यत्रापि मूल्यं नास्ति दायप्रतिग्रहादिलब्धे क्षेत्रे क्रीयमाणे, तत्रापि क्रयद्रव्ये मूल्यशब्दप्रयोगः सिद्धो भवति ।

सीता = हलाग्रम्, सम्पूर्वादिणः क्तः, समितम् = सङ्गतम्, निम्नोन्नतादिरहितं कृतमित्यर्थः, समीकृतमिति यावत् । *द्विसीत्यमिति* । द्वाभ्यां सीताभ्यां समीकृतमिति तद्धितार्थे समासः, ततः प्रत्ययः ।

*तुलया सम्मितं तुल्यमिति* । अत्र तुल्यार्थयोगे तृतीया । यद्यपि तद्योगे

न्यासः

शेषीक्रियते = गुणभावमापाद्यते, अप्रधानीक्रियत इत्यर्थः । अप्रधानीकरणमेव = अभिभवः । कथं पुनस्तेन तच्छेषीक्रियते ? इत्याह-मूल्यं हीत्यादि । हिशब्दो हेतौ । मूल्यमिह कर्तृ, मूलं कर्म । तत्प्रणयेन हिरण्येन पटादयो विक्रीयन्ते । तत्र यन्मूलातिरिक्तं हिरण्यं लाभः, तन्मूल्यं गुणो भागः । सह तेन वर्तत इति सगुणः । गुणः पुनरिह तदेव मूल्यं वेदितव्यम् । तदेतदुक्तं भवति—यस्मान् मूल्यभागेनैव भागभूतेन सभागं मूलं करोति न न्यूनं तन्मूल्यमभिधीयत इति । मूल्ये सति तत् तत्र द्विगुणं करोतीत्युच्यते । का पुनरियं युक्तिः, यदि नाम सगुणं मूलं करोतीत्येच्यते तत् कथं मूल्यमभिभूयते ? यथेयं युक्तिस्तदाख्यायते—इह हि शास्त्रे यत् सिद्धमुपकारि तदङ्गमप्रधानम्, यच्चोपकारसाध्यमनुपकारकं तदङ्गि प्रधानमित्येषा व्यवस्था । तथा चोक्तम्—

शास्त्रे द्वयमेवेह स्यादङ्गमथवा भवेदङ्गि तत्र ।
उपकारि सिद्धमङ्गं साध्यानुपकारकमङ्गीति ॥ इति ।

एवञ्च मूल्येन मूलं सगुणं क्रियमाणमुपकार्यत्वात् प्रधानं सम्पद्यते, मूल्यं त्वनुपकार्यत्वादप्रधानं सम्पद्यते । तन्मूलेन मूल्यमभिभूयते, तदपेक्षया तस्याः प्रधानभावापत्तेः । तुलया सम्मितं तुल्यमिति । अत्र तुल्यार्थयोगे तृतीया । यद्यपि तुल्यार्थयोगे

यथा – तुला परिच्छिनत्ति परम्, एवं तदपीति ॥

धर्मपथ्यर्थन्यायादनपेते ॥ ९२ ॥

निर्देशादेव पञ्चमी समर्थविभक्तिः । धर्मादिभ्यः पञ्चमीसमर्थेभ्यः- 'अनपेतः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् ।

संज्ञाधिकारादभिधेयनियमः ॥

छन्दसो निर्मिते ॥ ९३ ॥

प्रत्ययार्थसामर्थ्यलभ्या समर्थविभक्तिः । छन्दःशब्दात् तृतीयासम-

पदमञ्जरी

षष्ठ्यपि भवति, तथापि नावादिभिस्साहचर्यात्तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययः । अत एव पूर्वमुक्तम्—'तृतीयासमर्थविभक्तिर्लभ्यते' इति । षष्ठ्यन्तादपि न कश्चिद्दोषः, न्यायस्तु कथितः । कथं पुनस्तुल्यस्य तुलया सदृशत्वमत आह—*यथेति* । *एवं तदपीति* । तदपि तुल्यं प्रतियोगिनं सादृश्येन परिच्छिनत्ति, एतद् व्युत्पाद्यत्वेन प्रदर्शितम् । सदृशपर्यायस्तुल्यशब्दः, नावयवार्थः कश्चित्, अत एव 'तुल्यास्यप्रयत्नं सवर्णम्' इत्यत्रोक्तम्–'तुल्यशब्दः सदृशपर्यायः' इति ॥

*धर्मपथ्यर्थन्यायादनपेते* ॥ *निर्देशादेवेति* । सत्यर्थसम्भवेऽर्थान्तरस्य वा सम्भवे सति निर्देशादिति द्रष्टव्यम्, 'धुरो यड्ढकौ' इत्यत्रातिप्रसङ्गो नोद्भावनीयः । *संज्ञाधिकारादभिधेयस्य नियत इति* । शास्त्रीयात् पथो यदनपेतं तत् पथ्यम्, न तु तस्मादनपेतश्चोरः ॥

छन्दसो *निर्मिते* ॥ *प्रत्ययार्थसामर्थ्यं लभ्यते इति* । निर्माणे छन्दसः करण-

न्यासः

षष्ठ्यपि विधीयते, तथापि नौप्रभृतिभ्यस्तृतीयासमर्थेभ्यः प्रत्ययविधानात् तुलाशब्दाद् तृतीयासमर्थादेव प्रत्ययो विज्ञायते । यथेत्यादिना तुलया सादृश्यं दर्शयति । ननु च 'तुल्यास्यप्रयत्नम्' इति निपातनादेव तुल्यशब्दस्य साधुत्वं भविष्यति, स च सदृश एव लोके प्रसिद्ध इति नार्थस्तुलाशब्दात् सम्मिते प्रत्ययविधानेन ? स्वरार्थं तु प्रत्ययविधानम् । 'यतोऽनावः' इत्याद्युदात्तत्वं यथा स्यात् । न हि निपातने सत्याद्युदात्तत्वं तुल्यशब्दस्य शक्यते विज्ञातुम् ॥

धर्मपथ्यर्थन्यायादनपेते ॥ निर्देशादेव पञ्चमी समर्थविभक्तिरिति । यद्येवम्, 'धुरो यड्ढकौ' इत्येवमादावपि निर्देशादेव समर्थविभक्तिर्विज्ञेया ? नैष दोषः; तत्र हि द्वितीया समर्थविभक्तिः । एवं ज्ञानं स्याद्—द्वितीयानुवृत्तिरूपार्थिका स्यात् । इह तु न काचिद् विभक्तिरनुवर्तते, पञ्चमी च सूत्रे श्रूयते । तस्मात् सैव समर्थविभक्तिरनुकल्पयितुं युक्ता ॥

र्थात् 'निर्मिते' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । निर्मितः=उत्पादितः । छन्दसा निर्मितश्छन्दस्यः । इच्छया कृत इत्यर्थः ।

इच्छापर्यायश्छन्दः शब्द इह गृह्यते ॥

उरसोऽण् च ॥ ९४ ॥

उरःशब्दात्तृतीयासमर्थात् 'निर्मिते' इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति, चकाराद्यच्च । उरसा निर्मित औरसः पुत्रः, उरस्यः पुत्रः ।

संज्ञाधिकारादभिधेयनियमः ॥

हृदयस्य प्रियः ॥ ९५ ॥

निर्देशादेव समर्थविभक्तिः । हृदयशब्दात्षष्ठीसमर्थात् 'प्रियः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । हृदयस्य प्रियो हृद्यो देशः । हृद्यं वनम् ।

संज्ञाधिकारादभिधेयनियमः । इह न भवति — हृदयस्य प्रियः पुत्र इति ॥

पदमञ्जरी

त्वात् । इच्छापर्यायश्छन्दःशब्दो गृह्यते इति न वेदवचनः, नापि त्रिष्टुबादिवचनः । एतच्च संज्ञाधिकाराल्लभ्यते । यद्यपि स्वच्छन्दतो हि वचसां प्रवृत्तिः, 'छन्दानुवृत्तिदुस्साध्या' इत्यादावकारान्तश्छन्दशब्द इच्छापर्यायः, तथापि तस्यैव धातोरसुन्नन्तस्येच्छावाचित्वमविरुद्धं चेति मन्यते ॥

उरसोऽण् च ॥ *औरसः पुत्र इति* । आत्मनोत्पादित इत्यर्थः । *संज्ञाधिकाराभिधेयनियम इति* । उरसा निर्मितं सुखमित्यादौ न भवति ॥

*हृदयस्य प्रियः* ॥ हृदयम् = अन्तःकरणम्, प्रियम् = प्रीतिकरम् । *हृद्यमिति* । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः ॥

न्यासः

छन्दसो निर्मिते ॥ प्रत्ययार्थसामर्थ्यलभ्येति । निर्मिते इति प्रत्ययार्थः । तत्र छन्दसः करणत्वमिति सामर्थ्यात् तृतीया समर्थविभक्तिर्लभ्यते । छन्दःशब्दोऽयं वेदे त्रिष्टुबादौ, इच्छार्थाश्च वर्तते; इह त्विच्छायां वर्तमानो गृह्यते, अत एवाह—इच्छया कृत इति । इच्छावृत्तिस्तु संज्ञाग्रहणस्याभिधेयनियमार्थस्यानुवृत्तेर्लभ्यते ॥

उरसोऽण् च ॥ संज्ञाधिकारादभिधेयनियम इति । तेनोरसा निर्मितं सुखमित्यादौ न भवतीति भावः ॥

हृदयस्य प्रियः ॥ हृद्य इति । 'हृदयस्य हृल्लेख' इत्यादिना हृद्भावः ॥

## बन्धने चर्षौ ॥ ९६ ॥

'हृदयस्य' इत्येव। 'बन्धने' इति प्रत्ययार्थः। तद्विशेषणमृषिग्रहणम्। बद्धयते येन तद्बन्धनम्। हृदयशब्दात्षष्ठीसमर्थाद्बन्धने ऋषावभिधेये यत् प्रत्ययो भवति। ऋषिः = वेदो गृह्यते। हृदयस्य बन्धनमृषिः हृद्यः। परहृदयं येन बद्धयते वशीक्रियते स वशीकरणमन्त्रः = हृद्य इत्युच्यते॥

## मतजनहलात् करणजल्पकर्षेषु ॥ ९७ ॥

मतादिभ्यस्त्रिभ्यः शब्देभ्यस्त्रिष्वेव करणादिष्वर्थेषु यथासंख्यं यत्प्रत्ययो भवति। प्रत्ययार्थसामर्थ्याल्लब्धा षष्ठी समर्थविभक्तिः। मतम् = ज्ञानम्, तस्य करणं मत्यम्, भावसाधनं वा। जनस्य जल्पो जन्यः। हलस्य कर्षो हल्यः। द्विहल्यः। त्रिहल्यः। कर्षणं कर्षः, भावसाधनं वा॥

### पदमञ्जरी

*बन्धने चर्षौ* ॥ *षष्ठीसमर्थादिति*। बन्धनयोगे कृद्योगलक्षणा कर्मणि षष्ठी। *ऋषिर्वेदो गृह्यते इति*। 'तदुक्तमृषिणा' इत्यादौ दर्शनात्। यस्त्वाध्यानसम्पन्ने वसिष्ठादावृषिशब्दः, तस्य ग्रहणं न भवति; संज्ञाधिकारात्॥

*मतजनहलात्करणजल्पकर्षेषु* ॥ *प्रत्ययार्थसामर्थ्यलब्धेति*। करणादयः प्रत्ययार्थाः, तद्वचनाः करणादयः शब्दाः कृदन्ताः, तद्योगे यथायथम् 'कर्तृकर्मणोः कृति' इति षष्ठी भवति। संज्ञाधिकाराद्धलसम्बन्धाच्च कर्षशब्दोऽपि क्रियावचनो गृह्यते, न परिमाणशब्दः। *मतस्य करणमिति* कर्मणि षष्ठी। *जनस्य जल्प इति* कर्त्तरि। जल्पशब्दो भावसाधनः, अत एवात्र भावः साधनं वेति नोक्तम्। *हलस्य कर्ष इति* कर्मणि षष्ठी, करणस्य वा कर्तृत्वविवक्षायां कर्तरि। *द्विहल्य इति*। 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः॥

### न्यासः

बन्धने चर्षौ ॥ ऋषिशब्दोऽयमस्त्येव गुणवति पुरुषविशेषे, अस्ति च वेदे; इह संज्ञाधिकारादेव न मनुष्यग्रहणमिति दर्शयति। ऋषिर्वेदो गृह्यते॥

मतजनहलात् करणजल्पकर्षेषु ॥ प्रत्ययार्थसामर्थ्यलभ्येति। करणादयः प्रत्ययार्थाः। तत्र करणादयः शब्दा भावे करणे च व्युत्पाद्यन्त इति सामर्थ्यादेवोपलभ्यमाना षष्ठीविभक्तिर्विज्ञायते। यद्यपि कर्षशब्दः परिमाणवचनोऽप्यस्ति, तथापि करणादीनां साहचर्यात् क्रियाशब्द एव गृह्यते। करणशब्दो भावसाधनः। यदा तु करणसाधनः, तदा क्रियतेऽनेनेति करणम्, 'रथसीताहलेभ्यो यद्विधौ' इति तदन्त-

## तत्र साधुः ॥ ९८ ॥

'तत्र' इति सप्तमीसमर्थात् 'साधुः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। सामसु साधुः सामन्यः। वेमन्यः। कर्मण्यः। शरण्यः।

साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकारकः; तत्र हि परत्वात् 'तस्मै हितम्' इत्यनेन विधिना भवितव्यम् ॥

## प्रतिजनादिभ्यः खञ् ॥ ९९ ॥

प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति, 'तत्र साधुः' इत्येतस्मिन्नर्थे। यतोऽपवादः। प्रतिजने साधुः प्रातिजनीनः। जनेजने साधुरित्यर्थः। ऐदंयुगीनः। सांयुगीनः।

प्रतिजन। इदंयुग। संयुग। समयुग। परयुग। परकुल। परस्यकुल। अमुष्यकुल। सर्वजन। विश्वजन। पञ्चजन। महाजन। प्रतिजनादिः ॥

### पदमञ्जरी

*तत्र साधुः* ॥ *सामन्य इति*। 'ये चाभावकर्मणोः' इति प्रकृतिभावः। *प्रवीणः* = निपुणः, *योग्यः* = समर्थः। *तत्र हि परत्वादिति*। 'तस्मै हितम्' इत्यनेन चतुर्थीसमर्थात्प्रत्ययो विधीयते, अनेन तु सप्तमीसमर्थात्तेन नात्र 'विप्रतिषेधे परम्' इत्येतत्परत्वापरत्वं विवक्षितम्, किं तर्हि ? इष्टवाची परशब्दः, उपकारलक्षणे साधौ प्राक्क्रीतीयानामेवेष्टत्वात् 'तस्मै हितम्' इत्यनेन विधिना भवितव्यमित्यर्थः। एतच्च संज्ञाधिकाराल्लभ्यते ॥

*प्रतिजनादिभ्यः खञ्* ॥ जनं जनं प्रति प्रतिजनमिति 'यथार्थे यदव्ययम्' इति वीप्सायामव्ययीभावः। *प्रतिजने साधुरिति*। 'तृतीयासप्तम्योर्बहुलम्'। *परस्यकुलम्*, *अमुष्यकुलमिति*। षष्ठीसमासेऽस्मादेव निपातनात् षष्ठ्या अलुक्।

### न्यासः

विधिरत्रेष्यते। तस्योदाहरणम्—'द्विहल्यः' इति दर्शयति। भावसाधनश्चेति। अत्रापि पूर्ववद् विभागो वेदितव्यः ॥

तत्र साधुः ॥ सामन्य इति। 'ये चाभावकर्मणोः' इति प्रकृतिभावः। साधुरिह निपुणः, योग्यं इति भावः ॥

प्रतिजनादिभ्यः खञ् ॥ जनं जनं प्रति प्रतिजनम्, 'यथार्थेऽव्ययम्' इत्यव्ययीभावः। परस्यकुलम्, अमुष्यकुलमिति। निपातनादलुक्। 'षष्ठ्या आक्रोशे' इति वा यदा परकुलत्वेनाक्रुश्यते।

यत्र हितार्थं एव साध्वर्थः, तत्र वचनात्प्राक्क्रीतीया बाध्यन्ते ॥

भक्ताण्णः ॥ १०० ॥

भक्तशब्दाद् णः प्रत्ययो भवति, 'तत्र साधुः' इत्येतस्मिन्विषये। यतोऽपवादः। भक्ते साधुः भाक्तः शालिः। भाक्तास्तण्डुलाः ॥

परिषदो ण्यः ॥ १०१ ॥

परिषद्-शब्दाद् ण्यः प्रत्ययो भवति, 'तत्र साधुः' इत्येतस्मिन् विषये। यतोऽपवादः। परिषदि साधुः पारिषद्यः।

णप्रत्ययोऽप्यत्रेष्यते। तदर्थं योगविभागः क्रियते – 'परिषदः', णो भवति। परिषदि साधुः पारिषदः, ततः 'ण्यः', परिषद इत्येव ॥

कथादिभ्यष्ठक् ॥ १०२ ॥

कथादिभ्यः शब्देभ्यष्ठक् प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये। यतोऽपवादः। कथायां साधुः काथिकः। वैकथिकः।

कथा। विकथा। वितण्डा। कुष्टचित्। जनवाद। जनेवाद। वृत्ति। सद्गृह। गुण। गण। आयुर्वेद। कथादिः ॥

पदमञ्जरी

पूर्वसूत्र उक्तम्–'साधुः प्रवीणो योग्यो वा गृह्यते, नोपकारकः,' तत्र प्राक्क्रीतीयानामेवेष्टत्वादिति, इह तु न तथेत्याह—*यत्रेति*। *प्राक्क्रीतीया बाध्यन्ते इति*। अप्राप्तिरत्र बाधः; न हि चतुर्थ्यन्ताद्विधीयमानानां सप्तम्यन्तेभ्यः प्राप्तिरस्ति। तत्र प्राक्क्रीतीया न भवन्तीति वक्तव्ये बाध्यत इत्युक्तम्–'चतुर्थ्यन्तेभ्योऽप्यनभिधानात्प्राक्क्रीतीया न भवन्ति' इति दर्शयितुम् ॥

*भक्ताण्णः ॥ भक्तास्तण्डुला इति*। भक्तयोग्याः, त्रिफलीकृतत्वात् ॥

*परिषदो ण्यः ॥ णप्रत्ययोऽप्यत्रेष्यते इति*। 'पारिषदा कृतिरेषा तत्रभवताम्', 'सर्ववेदपारिषदं हीदं शास्त्रम्' इति च *भाष्यकार*प्रयोगात् ॥

न्यासः

यत्रेत्यादि। 'प्रतिजन', 'सर्वजन'—इत्येवमादिषु केषुचिद्धितार्थ एव प्रतीयते, न तु प्रवीणो योग्यशब्दस्यार्थः। तेन तत्र वचनसामर्थ्यात् परेऽपि प्राक्क्रीतीयाः प्रत्यया बाध्यन्ते; अन्यथा हि वचनमनर्थकं स्यात् ॥

---

१. अत्र मुद्रितपुस्तके 'भक्तादणन्यतरस्याम्' इति सूत्रप्रतीकमुपात्तम्, तत्तु प्रामादिकमेव ध्येयम्।

## गुडादिभ्यष्ठञ् ॥ १०३ ॥

गुडादिभ्यः शब्देभ्यष्ठञ् प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये । यतोऽपवादः । गुडे साधुः गौडिक इक्षुः । कौल्माषिको मुद्गः । साक्तुको यवः ।

गुड । कुल्माष । सक्तु । अपूप । मांसौदन । इक्षु । वेणु । संग्राम । सङ्घात । प्रवास । निवास । उपवास । गुडादिः ॥

## पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥

पथ्यादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये । यतोऽपवादः । पथि साधु पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ॥

## सभाया यः ॥ १०५ ॥

सभाशब्दाद्यः प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये । यतोऽपवादः । स्वरे विशेषः । सभायां साधुः सभ्यः ॥

## ढश्छन्दसि ॥ १०६ ॥

सभाशब्दाड्ढः प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये छन्दसि । यस्यापवादः । सभेयोऽस्य युवा यजमानस्य वीरो जायताम् ॥

## समानतीर्थे वासी ॥ १०७ ॥

### पदमञ्जरी

*पथ्यतिथिवसतिस्वपतेर्ढञ्* ॥ पतन्त्यनेनेति पन्थाः, 'गमेरिनिः' 'पतेस्थ च'; अतति सततं गच्छतीत्यतिथिः, न विद्यते तिथिर्यस्य सोऽप्यतिथिः, एकमपि दिनमत्रास्थित इत्यर्थः । वसनं वसतिः, 'वसेश्च' इत्यतिप्रत्ययः, तत्र योग्या वासतेयी रात्रिः । स्वपतिराद्यः, स्वपतेर्योग्यं स्वापतेयं धनम् ॥

*समानतीर्थे वासी* ॥ वसतीति वासी, निपातनाण्णिनिः, ग्रह्यादेराकृतिगण-

### न्यासः

भक्ताण्णः ॥ परिषदो ण्यः ॥ कथादिभ्यष्ठक् ॥ गुडादिभ्यष्ठञ् ॥ पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ सभाया यः ॥ स्वरे विशेष इति । यति सति 'यतोऽनावः' इत्याद्युदात्तत्वं स्यात्, ये तु सति प्रत्ययस्वरेणान्तोदात्तत्वं स्यात् ॥

ढश्छन्दसि ॥ समानतीर्थे वासी ॥ वसतीति वासी । निपातनादेव णिनिः,

'साधुः' इति निवृत्तम्। 'वासी' इति प्रत्ययार्थः। समानतीर्थ-शब्दात्तत्रेति सप्तमीसमर्थाद् 'वासी' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। समाने तीर्थे वासीति सतीर्थ्यः। समानोपाध्याय इत्यर्थः। तीर्थशब्दे-नेह[1] गुरुरुच्यते। समानस्य सभावः, तीर्थे यः[1]॥

**समानोदरे शयित ओ चोदात्तः॥ १०८॥**

समानोदरशब्दात्सप्तमीसमर्थात् 'शयितः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति, ओकारश्चोदात्तः। शयितः=स्थित इत्यर्थः। समानोदरे शयितः समानोदर्यो भ्राता॥

**सोदराद्यः॥ १०९॥**

पदमञ्जरी

त्वाद्वा साधुरिति। *निवृत्तमिति*। तेन किं सिद्धं भवति? इत्याह—*वासीति प्रत्ययार्थ इति*। साधुरित्यस्यानुवृत्तौ तु तस्यैव विशेषणं वासिग्रहणं स्यात्। *तीर्थशब्देनेह गुरुरुच्यत इति*। प्रयागादितीर्थसाधर्म्यात्। तरन्त्यनेनेति तीर्थम्, तरतेः क्थन्। मुख्यस्य तीर्थस्य ग्रहणं न भवति; संज्ञाधिकारात्॥

*समानोदरे शयित ओ चोदात्तः॥ ओकारश्चोदात्त इति*। तित्स्वरितस्या-पवादः। *शयितः स्थित इति*। शेतेः स्थितावपि वृत्तेः, आमाशयः, जलाशय इति यथा। *समानोदर्य इति*। उदीर्यत इत्युदरम्, उदि दृणातेरलचौ पूर्वपदान्त-लोपश्चेत्यलचोरन्यतरः। समानं च तदुदरं च समानोदरम्, 'पूर्वापरप्रथम' इत्यादिना समासः, ततः प्रत्ययः॥

न्यासः

ग्रहादिलक्षणो वा। अथ वा—वसनं वासः, सोऽस्यास्तीति वासी, मत्वर्थीय इनिः। अथ तत्रेति वर्तमाने पुनः 'समानतीर्थे' इति सप्तम्युपादानं किमर्थम्? प्रकृतित्वेनेष्टात् सप्तम्यन्ताद् यथा स्यात्, अनिष्टान् मा भूत्। एतेन गुरुवचनो यस्तीर्थशब्दस्तदन्तात् सप्तमीसमर्थात् प्रत्ययो भवति, न तु यः प्रयोगादिवचनस्तदन्तात्। अमुमेवार्थं चेतसि कृत्वाऽऽह—तीर्थशब्देन गुरुरुच्यत इति॥

समानोदरे शयित ओ चोदात्तः॥ औकारश्चोदात्त इति। यतः स्वरे प्राप्त ओकारस्योदात्तत्वं विधीयते। शयितः स्थित इत्यर्थः। अनेकार्थत्वात् तस्य स्थितावपि वृत्तेः, तथा हि—आमाशयः, जलाशय इति। समानोदर्य इति। समानञ्च तदुदरञ्चेति समानाधिकरणसमासं कृत्वा ततः प्रत्ययः॥

---

१–१. पाठोऽयं क्वचिन्नास्ति।

सोदरशब्दात्सप्तमीसमर्थात् 'शयितः' इत्येतस्मिन्नर्थे यः प्रत्ययो भवति । 'विभाषोदरे' इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः । समानोदरे शयितः सोदर्यो भ्राता । 'ओ चोदात्तः' इति नानुवर्तते । यकारे स्वरः ॥

भवे छन्दसि ॥ ११० ॥

'तत्र' इत्येव । सप्तमीसमर्थाद् 'भवे' इत्येतस्मिन्नर्थे छन्दसि विषये यत्प्रत्ययो भवति । अणादीनां घादीनां चापवादः । सति दर्शने तेऽपि भवन्ति; सर्वविधीनां छन्दसि व्यभिचारात् । मेध्याय च विद्युत्याय च नमः ।

आपादपरिसमाप्तेश्छन्दोऽधिकारः । भवाधिकारश्च 'समुद्राभ्राद्घः' इति यावत् ॥

पदमञ्जरी

*सोदराद्यत्* ॥ *यकारादौ प्रत्यये विवक्षित इति* । 'विभाषोदरे' इत्यत्र 'तीर्थे यः' इत्यतो य इत्यनुवर्तते, तत्र य इत्येषा विषयसप्तमीति दर्शयति । ओ चोदात्त इति तु नानुवर्तत इति । यविधानसामर्थ्यात् ॥

*भवेच्छन्दसि* ॥ *अणादीनां घादीनां चापवाद इति* । 'तत्र भवः' इति प्राप्तानाम् । *सति दर्शने तेऽपि भवन्तीति* । तद्यथा—मुञ्जवान्नाम पर्वतस्तत्र भवो मौञ्जवतस्तस्येति भक्षः । *मेध्यायेति* । अत्र 'यतोऽनावः' इत्याद्युदात्तत्वं प्राप्नोति, अन्तस्वरितं चाधीयत इति ॥

न्यासः

सोदराद् यः ॥ एकदेशविकृतस्यानन्यत्वात् सोदर्यशब्दादपि पूर्वेण यत्येव प्राप्ते यो विधीयते । 'विभाषोदरे' इति विषयसप्तमीति मत्वाऽऽह—यकारादौ प्रत्यय इत्यादि । ओ चोदात्त इति नानुवर्तत इति । प्रत्ययविधानसामर्थ्याद् य उदात्तः ॥

भवे च्छन्दसि ॥ अणादीनां घादीनाञ्चापवाद इति । 'तत्र भवः' इति प्राप्तानाम् । यद्येवम्, यता बाधितत्वाच्छन्दसि तेषामभावः स्यात्, ततश्च मुञ्जावत्यं[1] मौञ्जावतं[1] वेत्येवमादि न सिध्यति ? इत्याह—सति दर्शन इत्यादि । कथं पुनरेवं लभ्यते ? इत्याह—सर्वविधीनामित्यादि । सर्वविधिव्यभिचारस्तु 'बहुलं छन्दसि' इति बहुलग्रहणाल्लभ्यते । मुञ्जावान्[2] नाम पर्वतः, तत्र भवोऽसौ मौञ्जावतः[2] ॥

---

१–१. क्वचित् 'मुञ्जीरात्यं मौञ्जीरातम्'–इति पाठः ।

२–२. मुञ्जीरातो नाम······मौञ्जीरातः'–इति पाठा० ।

## पाथोनदीभ्यां ड्यण् ॥ १११ ॥

पाथशब्दान्नदीशब्दाच्च ड्यण् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्नर्थे। यतोऽपवादः। पाथसि भवः पाथ्यो वृषा। नाद्यं गिरो मे प्रयच्छति। पाथोऽन्तरिक्षम् ॥

## वेशन्तहिमवद्भ्यामण् ॥ ११२ ॥

वेशन्तशब्दाद्धिमवच्छब्दाच्चाण् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये। यतोऽपवादः। वैशन्तीभ्यः स्वाहा। हैमवन्तीभ्यः स्वाहा।

## स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११३ ॥

स्रोतश्शब्दाद्विभाषा 'ड्यत्', 'ड्य' – इत्यतौ प्रत्ययौ भवतः 'तत्र भवः' इत्येतस्मिन्विषये। यतोऽपवादः। पक्षे सोऽपि भवति। स्रोतसि भवः स्रोत्यः। स्रोतस्यः। ड्यड्ड्ययोः स्वरे विशेषः ॥

## सगर्भसयूथसनुताद्यन् ॥ ११४ ॥

'सगर्भ', 'सयूथ', 'सनुत'–शब्देभ्यो यन् प्रत्ययो भवति 'तत्र भवः'

पदमञ्जरी

*पाथोनदीभ्यां ड्यण्* ॥ *पाथोऽन्तरिक्षमिति*। पाति भूताद्यवकाशदानेनेति कृत्वा। यद्यपि 'पातेर्बलेजुट्', 'उदके थुट्', 'अन्ने च' इति अन्नोदकयोः पाथः-शब्दोऽसुनि व्युत्पाद्यते, तथापि बाहुलकादन्तरिक्षेऽपि भवति ॥

*वेशन्तहिमवद्भ्यामण्* ॥ वेशन्तः = पल्वलम्, 'विशेर्झ च', तत्र भवा आपः वैशान्त्यः ॥

*स्रोतसो विभाषा ड्यड्ड्यौ* ॥ 'स्रुरीभ्यां तुट् च' इत्यसुन्। स्रोतः = नदीप्रवाहः ॥

*सगर्भसयूथसनुताद्यन्* ॥ 'अर्त्तिगृभ्यां भन्', गिरति गीर्यते वा गर्भः। युता

न्यासः

पाथोनदीभ्यां ड्यण् ॥ वेशन्तहिमवद्भ्यामण् ॥ स्रोतसो विभाषा ड्यड्ड्यौ ॥ ड्यड्ड्ययोः स्वरे विशेषः। ड्यति हि सति 'तित् स्वरितम्' इत्यन्तस्वरितः स्याद्, ड्ये तु प्रत्ययस्वरेणान्तोदात्तत्वं भवति ॥

सगर्भसयूथसनुताद् यन्। समानो गर्भः, समानो यूथ इति कर्मधारयः। 'णु

इत्येतस्मिन्विषये । यतोऽपवादः । स्वरे विशेषः । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः । सर्वत्र 'समानस्य छन्दसि' इति सभावः ॥

तुग्राद् घन् ॥ ११५ ॥

तुग्रशब्दाद्घन् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । त्वमग्ने वृषभस्तुग्रियाणाम् ।

अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्दः ॥

अग्राद्यत् ॥ ११६ ॥

अग्रशब्दाद्यत् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अग्रे भवमग्रयम् । किमर्थमिदम्, यावता सामान्येन यद्विहित एव ? 'घच्छौ च' इति वक्ष्यति, ताभ्यां बाधा मा भूदिति पुनर्विधीयते ॥

पदमञ्जरी

भवन्त्यस्मिन्यूथम्', 'तिथपृष्ठगूथयूथप्रोथाः' इति क्थन्प्रत्ययान्तो निपातितः । नुतिर्नुतम्, 'नपुंसके भावे क्तः' । सगर्भादयस्त्रयोऽपि कर्मधारयाः ॥

तुग्राद् घन् ॥ 'तुरुस्तुशम्यमः सार्वधातुके' इत्यत औणादिको रन् गुडागमः ॥

अग्राद्यत् ॥ 'ऋज्रेन्द्राग्र' इत्यग्रशब्दो निपातितः । *सामान्येनेति* । 'भवे छन्दसि' इति । *ताभ्यां बाधा मा भूदिति पुनर्विधीयत इति* । एवमपि यद्ग्रहण-मनर्थकम्, अग्रादित्येवास्तु, प्राकरणिको यद्भविष्यति; अथ वा 'अग्राद् घच्छौ च' इति चकाराद्भविष्यति, 'अग्रपश्चाड्डिमच्' इत्यस्य समुच्चयो न शक्यः, विदेश-स्थत्वात् ? एवमप्यनन्तरस्य घनः समुच्चयो विज्ञायेत । योगविभागे पुनरनन्तरो घनेव स्यात्, योगविभागसामर्थ्यान्न भविष्यति । अथ कथम् 'ताश्च एव चाग्र्यजननः,' 'एतच्छिवे विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्' इति भाषायां प्रयोगः ? छन्दोवदृषयः कुर्वन्ति ॥

न्यासः

स्तुतौ', भावे क्तः, समानं नुतमस्येति बहुव्रीहिः । समानश्च तन्नुतश्चेति कर्मधारयो वा । स्वरे विशेष-इति । यति सति 'तित् स्वरितम्' इत्यन्तस्वरितत्वं स्यात्, यनि सति नित्स्वरेणाद्युदात्तत्वं स्यात् । सर्वत्र समानस्य छन्दसीति । 'समानस्य छन्दस्य-मूर्धप्रभृत्युदर्केषु' इत्यस्योपलक्षणपर एकदेश उपात्तः ॥

तुग्राद् घन् ॥ अग्राद् यत् ॥ सामान्येन यद्विहित इति । 'भवे छन्दसि' इत्यनेन । अथ यद्ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत ? नैवं शक्यम्; 'अग्र-

## घच्छौ च ॥ ११७ ॥

अग्रशब्दाद्यत्; घच्छौ प्रत्ययौ भवन्ति, 'तत्र भवः' इत्येतस्मिन्विषये । अग्र्यम्, अग्रियम्, अग्रीयम् ।

चकारः 'तुग्राद्घन्' इत्यस्यानुकर्षणार्थः । अग्रियम् । स्वरे विशेषः ॥

## समुद्राभ्राद् घः ॥ ११८ ॥

समुद्रशब्दाद, अभ्रशब्दाच्च घः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्नर्थे । यतोऽपवादः । समुद्रियाणां नदीनाम् । अभ्रियस्येव घोषः ।

अभ्रशब्दस्यापूर्वनिपातः; तस्य लक्षणस्य व्यभिचारित्वात् ॥

## बर्हिषि दत्तम् ॥ ११९ ॥

'भवः' इति निवृत्तम् । बर्हिः-शब्दात्सप्तमीसमर्थात् 'दत्तम्' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । बर्हिष्येषु निधिषु प्रियेषु ॥

## दूतस्य भागकर्मणी ॥ १२० ॥

### पदमञ्जरी

घच्छौ च ॥ *चकारस्तुग्राद्घनित्यस्यानुकर्षणार्थं इति* । पूर्वमेव विहितस्य यतोऽनुकर्षणे प्रयोजनाभावात् ॥

*समुद्राभ्राद् घः* ॥ समुनत्तीति समुद्रः, उन्देः 'स्फायितञ्चि' इति रक्प्रत्ययः । अपो बिभर्त्तीत्यभ्रम्, मूलविभुजादित्वात्कः । *तस्य लक्षणस्येति* । तस्य पूर्वनिपातस्य यल्लक्षणं तस्येत्यर्थः । *व्यभिचारित्वादिति* । व्यभिचारस्य चायमेव निर्देशो लिङ्गम् ॥

*बर्हिषि दत्तम्* ॥ 'बृहेर्नलोपश्च' इतीसिप्रत्ययः, बर्हिः ॥

*दूतस्य भागकर्मणी* ॥ दूताद्भागे 'तस्येदम्' इत्यणि प्राप्ते वचनम्, कर्मणि

### न्यासः

पश्चाड्डिमच्' इत्येवाग्रशब्दाड् डिमजप्युक्तः, तत्र यथाविहिते प्रत्यय उच्यमाने डिमजपि स्यात् । तस्माद् यद्ग्रहणं कर्तव्यम् ॥

घच्छौ च ॥ स्वरे विशेष इति । घे विहितेऽन्तोदात्तत्वं स्यात्, घनि तु प्रत्याद्युदात्तत्वं भवति ॥

समुद्राभ्राद् घः ॥ ननु च 'अजाद्यदन्तम्, 'अल्पाच्तरम्' इत्यभ्रशब्दस्य पूर्वनिपातेन भवितव्यम्; तत् कथमपूर्वनिपातः ? इत्याह—अभ्रशब्दस्येत्यादि ॥

बर्हिषि दत्तम् ॥ दूतस्य भागकर्मणी ॥ भावे 'तस्येदम्' इत्यणि प्राप्ते 'गुणवचन-

निर्देशादेव समर्थविभक्तिः । दूतशब्दात् षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययो भवति । भागः = अंशः । कर्म = क्रिया । यत्ते अग्ने दूत्यम् । दूतभागः, दूतकर्म वा ॥

रक्षोयातूनां हननी ॥ १२१ ॥

निर्देशादेव समर्थविभक्तिः । रक्षःशब्दाद्यातुशब्दाच्च षष्ठीसमर्थात् 'हननी' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । हन्यतेऽनयेति हननी । या ते अग्ने रक्षस्या तनूः । रक्षसां हननी । यातव्या । यातूनां हननी ।

बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थम् । बहूनां रक्षसां हननेन तनूः स्तूयते ॥

रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२२ ॥

पदमञ्जरी

तु दूतवणिग्भ्यां चेत्यौपसंख्यानिके ये ॥

*रक्षोयातूनां हननी* ॥ रक्षेरसुनि रक्षः 'कमिमनिजनि' इत्यादिना । यातेस्तौ यातुः । यातुशब्दो रक्षःपर्यायः । 'विरूपाणामपि समानार्थानाम्' इत्येकशेषस्तु न भवति; बह्वर्थाभिधायिस्वरूपपरत्वेन सूत्रे भिन्नार्थयोर्निर्देशात् । *निर्देशादेव समर्थविभक्तिरिति* । सा पुनः 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । *बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थमिति* । तद्धि बहुवचनात्प्रत्ययविध्यर्थम, अन्यथा द्वित्वाद् द्विवचनमेव न्याय्यं स्यात् । कथं पुनर्बहुवचनेन स्तुतिवैशिष्ट्यं ज्ञाप्यते ? तत्राह—*बहूनामिति* । बहुवचनान्तात्प्रत्यये बहूनां रक्षसां हनने सामर्थ्यमुद्भाव्यते मन्त्रे । तथा च स्तुतिविशिष्टा सम्पूर्णा भवति । योगश्चायं शैषिकयोरण्छयोरपवादः ॥

न्यासः

ब्राह्मणादिभ्यः' इति ष्यञि यतो विधानम् । येषाम् 'सख्युर्यः' इत्यत्र 'दूतवणिग्भ्याञ्च' इत्युपसंख्यायते, तेषां कर्मणि ये प्राप्ते ॥

रक्षोयातूनां हननी ॥ निर्देशादेव समर्थविभक्तिः । सा पुनः षष्ठी 'कर्तृकर्मणोः कृति' इति कर्मणि द्रष्टव्या । योग्यतामात्रे विवक्षिते हन्यतेऽनयेति हननी, करणे ल्युट्, 'टिड्ढाणञ्' इति ङीप् । ननु च रक्षोयातुशब्दयोर्द्वित्वाद् द्विवचनेन भवितव्यम्, तत् कथमिदमुक्तम् ? वचनसामर्थ्यात् सम्भावनमेव स्तुतिरिति दर्शयितुमाह—बहुवचनमित्यादि । योगश्चायम् 'तस्येदम्' इत्यणि प्राप्ते वेदितव्यः ॥

रेवत्यादिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत्प्रत्ययो भवति। प्रशंसनं प्रशस्यम्, भावे क्यप् प्रत्ययो भवति। यद्वो रेवती रेवत्यम्। यद्वो जगतो जगत्यम्। यद्वो हविष्या हविष्यम्। हविषे हिता हविष्याः, तासां प्रशंसनं हविष्यम्। यस्येति लोपे कृते 'हलो यमां यमि' इति लोपः॥

## असुरस्य स्वम्॥ १२३॥

असुरशब्दात्षष्ठीसमर्थात् 'स्वम्' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। अणोऽपवादः। असुर्यं वा एतत्पात्रम्, यच्चक्रधृतं कुलालकृतम्॥

## मायायामण्॥ १२४॥

असुरशब्दात्षष्ठीसमर्थात् 'मायायाम्' स्वविशेषेऽण्प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। आसुरी माया स्वधया कृतासि॥

पदमञ्जरी

*रेवतीजगतीहविष्याभ्यः प्रशस्ये*॥ रयिरस्यास्तीति *रेवती*, 'रयेर्मतौ बहुलम्' इति बहुलवचनात्सम्प्रसारणम्। उगित्त्वान्ङीप्, नक्षत्रे तु गौरादित्वान्ङीष्। जगच्छब्दाच्छतृवद्भावान्ङीप्। *षष्ठीसमर्थेभ्य इति*। 'शंसु स्तुतौ' इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति भावे क्यप्, तद्योगे कर्मणि षष्ठी भवति, हविषे हिता हविष्या, 'उगवादिभ्यो यत्'॥

*असुरस्य स्वम्*॥ न सुरोऽसुरः = सुरप्रतिपक्षः। अथ वा 'असेरुरन्', अस्यत्यस्यते वेत्यसुरः॥

*मायायामण्*॥ मीयतेऽनयेति माया = असदर्थप्रकाशनशक्तिः। माङ औणादिको यः। नेति वक्तव्येऽण्ग्रहणं लाघवे विशेषाभावात्॥

न्यासः

रेवतीजगतीहविष्याभ्यः प्रशस्ये॥ षष्ठीसमर्थेभ्य इति। सामर्थ्याद्धि षष्ठ्येव समर्थविभक्तिर्विज्ञायते। यथा हि—'शंसु स्तुतौ' इत्यतोऽस्मादेव निपातनाद् भावे क्यप्प्रत्ययः; 'कृत्यल्युटो बहुलम्' इति बहुलवचनात्। तत्रावश्यं कृद्योगलक्षणया षष्ठ्या भवितव्यम्। अयमपि योगः पूर्ववदणि प्राप्ते वेदितव्यः॥

असुरस्य स्वम्॥ षष्ठीसमर्थादिति। 'असुरस्य' इति निर्देशादेव षष्ठी समर्थविभक्तिर्लभ्यते। स्वमिति। आत्मीयमित्यर्थः। अणोऽपवाद इति। 'तस्येदम्' इति प्राप्तस्य॥

मायायामण्॥ मायायां नेति वक्तव्येऽण्ग्रहणं विस्पष्टार्थम्॥

## तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ १२५ ॥

'तद्वान्' इति निर्देशादेव समर्थविभक्तिः । मतुबन्तात्प्रातिपदिकात् प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्प्रत्ययो भवति, यत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति । यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति । 'लुक्च मतोः' इति प्रकृतिनिर्ह्रासः । इतिकरणस्ततश्चेद्विवक्षा । 'तद्वान्' इत्यवयवेन समुदायो निर्दिश्यते । वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान् । उपधीयते येन स उपधानः । चयनवचन इत्यर्थः । वर्चस्वानुपधानमन्त्र आसामिष्टकानामिति विगृह्य यति विहिते मतोर्लुकि कृते – वर्चस्या उपदधाति, तेजस्या उपदधाति । पयस्याः । रेतस्याः ।

पदमञ्जरी

*तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः* ॥ मतुनिर्ह्रासः = मतोरपचयः । *तद्वानित्यवयवेन समुदायो निर्दिश्यत इति* । स विवक्षितो वर्चःशब्दादिरवयवोऽस्मिन्मन्त्रलक्षणे समुदायेऽस्तीत्येवमेकदेशार्थाभिधायिनः सर्वनाम्नः समुदाये मतुबयं विहित इत्यर्थः । *वर्चःशब्दो यस्मिन्मन्त्रेऽस्तीति* । स पुनः कुम्भेष्टकोपधानमन्त्रः—'भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवः' इत्यादिकः । *वर्चस्या उपदधातीति* । यथा वर्चस्या भवन्ति तथोपदधातीत्यर्थः । तेजस्वान्मन्त्रः–'वसु च स्थ वाम च स्थ देवस्य वः सवितुः' इत्यादिकः । वयस्वन्तो मन्त्राः—'त्र्यविर्वयस्त्रिष्टुब्' इत्यादिकाः, ऋतुमन्तो मन्त्राः—'मधुश्च माधवश्च'

न्यासः

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ स विवक्षितोऽवयवोऽस्मिन्निति तद्वान् । कः पुनरसौ ? समुदायः । अत एवाह—तद्वानित्यवयवेन समुदायो निर्दिश्यत इति । एतेनैकदेशादिदं प्रत्ययविधानमित्युक्तं भवति । वर्चःशब्दोऽस्मिन् मन्त्रेऽस्तीत्यादिना तत्समुदायं प्रदर्शयति । चयनवचन इति । चिनोतेरेव करणे ल्युट् । तेजस्या इति । तेजःशब्दोऽस्य मन्त्रस्यास्तीति तेजस्वानुपधानमन्त्रः । शेषं विग्रहवाक्यादि पूर्ववत् । मन्त्रादेव, समुदायान्मा भूत् । यद्यपि समुदायः प्रातिपदिकं न भवति, तथापि वचनसामर्थ्यादपि स्यात् । किं हि वचनान्न लभ्यत इत्यभिप्रायः ।

तद्वानिति किम्? मन्त्रसमुदायादेव मा भूत्। उपधान इति किम्? वर्चस्वानुपस्थानमन्त्र आसामित्यत्र मा भूत्। मन्त्र इति किम्? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत्। इष्टकास्विति किम्? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत्।

इतिकरणो नियमार्थः। अनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते, न सर्वेण॥

पदमञ्जरी

इत्यादिकः। *मन्त्रसमुदायादेव मा भूदिति*। ननु तद्वानित्यस्मिन्नसति 'सम इत्यादिकाः'। प्रथमाद्वा' इति वचनादासामिति प्रथमं निर्दिष्टत्वात् षष्ठ्यन्तादिष्टकावाचिन उपधाने मन्त्रे प्रत्ययविधिः प्रसञ्जनीयः? सत्यम्; आसामिति प्रथमं न करिष्यत इति मत्वा प्रश्नप्रतिवचने, ततश्च तद्वानित्यस्याभावे 'त्र्यविर्वयस्त्रिष्टुप्छन्दः' इत्ययमुपधानमन्त्र आसामिष्टकानामिति वाक्यं स्यात्, ततश्चेतिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोति। *वर्चस्वानुपस्थानमन्त्र इत्यादि*। उपस्थानं मन्त्रेणाभिमन्त्रणं विवक्षितम्, 'शिवेन मा चक्षुषा' इत्यादिकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः। *अङ्गुलिमानित्यादि*। यद्यपि सर्वासामिष्टकानामङ्गुलिमान्हस्त उपधानः, तथापि यास्तूष्णीमुपधेया इष्टकास्तासु मन्त्रव्यावृत्त्यर्थतया विशेषणमर्थवत्—एषां कपालानामित्यत्र मा भूदिति। स्त्रीलिङ्गनिर्देशादत्राप्रसङ्ग इति चेत्? एवमपि शर्करासु प्रसङ्गः।

*अनेकपदसम्भवेऽपीति*। असति त्वितिकरणे मन्त्रे बहूनां सम्भवायेन केनचित्पदेन तद्वान्मन्त्रो गृह्यं त तथा पदैकदेशेन वर्णसमुदायेन, इतिकरणात्त्वयमतिप्रसङ्गो न भवति।

मतुब्ग्रहणमुत्तरार्थम् - अश्विमानित्यत्र मतुप एव लुग्यथा स्यात्, इनेर्मा भूदिति। इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुग्भविष्यति। वर्चःशब्दादावसुप्रभृतेरप्रसङ्गः, उणादीनामव्युत्पन्नत्वात्। इह 'प्राणभृत उपदधाति' इत्यादावभेदोपचारात्प्रत्ययाभावः॥

न्यासः

इतिकरणो नियमार्थ इति। असतीहेतिकरणे मन्त्रे बहूनां पदानां सम्भवे सर्वेण पदेन तद्वान् मन्त्रो गृह्यते। अस्मिंस्तु सति तेन नियमार्थेन येनैव पदेन तद्वता मन्त्रेणेष्टकोपलभ्यते, तेनैव सर्वो मन्त्रो गृह्यत इत्येतदुपपन्नं भवति।

अथ मतुब्ग्रहणं किमर्थम्, यावता मतुबन्तादयं विधीयते, तत्र प्रत्ययस्य लुग् विज्ञायमानो विधानसामर्थ्याच्च मतुप एव भविष्यतीत्यपार्थकं मतुब्ग्रहणम्? नैवम्;

अश्विमानण् ॥ १२६ ॥

अश्विशब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान् । अश्विमच्छब्दादण् प्रत्ययो भवति । पूर्वस्य यतोऽपवादः । अश्विमानुपधानो मन्त्र आसामिष्टकानामिति विगृह्याण्विधीयते, तत्र मतुपो लुकि कृते 'इनण्यनपत्ये' इति प्रकृतिभावः । आश्विनीरुपदधाति ॥

वयस्यासु मूर्ध्नो मतुप् ॥ १२७ ॥

वयस्वानुपधानो मन्त्रो यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप् प्रत्ययो भवति । पूर्वस्य यतोऽपवादः । यस्मिन्मन्त्रे वयःशब्दो मूर्धन्शब्दश्च विद्यते, स वयस्वानपि भवति, मूर्द्धन्वानपि; यथा – मूर्द्धा वयः प्रजापतिश्छन्द इति । तत्र वयस्वच्छब्दादिव मूर्द्धन्वच्छब्दादपि

पदमञ्जरी

*अश्विमानण्* ॥ *सोऽश्विमानिति* । यद्यपि बह्वोऽश्विमन्तो मन्त्राः 'ध्रुवक्षितिः' इत्यादिकाः, तथापि सामान्यापेक्षमेकवचनम् ॥

*वयस्यासु मूर्ध्नो मतुप्* ॥ *वयस्यास्विति* । छन्दसि या वयस्या इष्टका उच्यन्ते तास्वित्यर्थः । ताश्च बह्व्यः, तास्वन्तश्चतस्रो मूर्धन्वत्यः, 'विष्टम्भो वयः' इत्यादिवयस्वद्भिर्मन्त्रैरुपधेयाः, तत्र च यद्यपि मूर्द्धा वयः प्रजापतिश्छन्द इत्यन्तिम एकस्मिन्नेव मन्त्रे मूर्द्धशब्दोऽस्ति, तथापि साहचर्याद् 'विष्टम्भो वयः' इत्याद्याश्चत्वारो मूर्धन्वन्त उच्यन्ते, यथा— छत्रिणो यान्तीति, तेन मूर्द्धन्वतीरुपदधातीति बहुवचनम् । *मूर्द्धन्वानपि भवतीति* । ननु 'अनो नुट्' इति छन्दसि ... विधीयते ? सत्यम्; यथा सूत्रकारेण छान्दसमेव पदं प्रयुक्तम्—'वयसस्यासु' इति, तथेदमपि वृत्तिकारेण, मूर्धन्वानपि भवति छन्दसीत्यर्थः । 'वयस्याश्च ताः मूर्धन्वत्याश्च' इति 'उभयथापि छन्दस्यभिधीयते' इत्युक्तं भवति ।

न्यासः

उत्तरत्र 'अश्विमानण्' इत्यत्र ह्युपधानमात्रावयवे द्वौ मत्वर्थीयौ—इनिमतुपौ, तत्रासति मतुब्ग्रहणे द्वयोरपि लुक् स्यात्; अस्मिन् सति मतुप एव भवति ॥

अश्विमानण् ॥ आश्विनीरिति । 'टिड्ढाणञ्' इति ङीप् ॥

वयस्यासु मूर्ध्नो मतुप् ॥ मूर्धन्वतीरिति । 'उगितश्च' इति ङीप् । वयस्यास्त्र मूर्धन्वत्यश्चेति वयस्वानुपधानो मन्त्रः, तासामिति वयस्याः । मूर्धन्वानुपधानो मन्त्रः, तासामिति मूर्धन्वत्यः ।

यति प्राप्ते मतुब् विधायते – मूर्द्धन्वतीरुपदधाति, वयस्या एव मूर्द्धन्वत्यः।

वयस्यास्विति किम्? यत्र मूर्द्धन्शब्द एव केवलो न वयःशब्दः, तत्र मा भूत्।

२ 'मूर्द्धन्वतः' इति वक्तव्ये 'मूर्ध्नः' इत्युक्तम् – मतुपो लुकं भाविनं चित्ते कृत्वा॥

## मत्वर्थे मासतन्वोः॥ १२८॥

यस्मिन्नर्थे मतुब्विहितस्तस्मिश्छन्दसि विषये यत्प्रत्ययो न॰ मासतन्वोः प्रत्ययार्थविशेषणयोः। प्रथमासमर्थादस्त्युपाधिकात्षष्ठ्यर्थे सप्तम्यर्थे च यत्प्रत्ययो भवति। मत्वर्थीयानामपवादः। नभांसि विद्य॰

पदमञ्जरी

*यत्र मूर्द्धन्शब्द एव केवल इति*। यथा—'अग्ने यशस्विन्यशसे समर्पय' इत्यादिके मन्त्रे। *ततो मा भूदिति*। तदभिधायिनो मूर्द्धन्शब्दादित्यर्थः। *मूर्द्धन्वत इति वक्तव्यमिति*। 'तद्वान्' इति च 'लुक् च मतोः' इति चानुवर्तते, ततश्च मूर्द्धन्वत इति युक्तं वक्तुमिति भावः। इह तु गायत्रीः पुरस्तादुपदधाति, 'तेजो वै गायत्री तेज एव मुखतो धत्ते मूर्द्धन्वती भवति' इति मुख्यो गायत्रीषु मूर्धन्वतीशब्दः प्रथमं मतुबन्तः प्रयुक्तः, किं कारणम्? तदुपधानमन्त्रेषु 'अग्निर्मूर्धा भुवः' इत्यादिषु वयःशब्दस्याभावात्॥

*मत्वर्थे मासतन्वोः*॥ मत्वर्थग्रहणाल्लब्धमर्थं दर्शयति—*प्रथमासमर्थादित्यादि*। *मासतन्वोरिति* 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यूकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः, न तु 'भृमृशीङ्तृचरित्सरितनिमिमस्जिभ्य उः' इत्युका-

न्यासः

यत्रेत्यादि। न ह्येवंविधो यागाधुपधानो मन्त्रस्ततो वयस्यास्विति वचनात्। अत्र मूर्धशब्द एवास्ति, न वयःशब्दः, ततो न भवति— र्धन्वत्य इति।

वक्तव्य इति। तद्वानित्यधिकाराद् मतुबन्ताद् मूर्धशब्दाद् प्रत्ययेन भवितव्यम्। अतः 'मूर्धन्वतः' इति युक्तं वक्तुम्, तन्मतुपो भाविनं लुकं चेतसि कृत्वा। एवं लघु सूत्रं भवति॥

मत्वर्थे मासतन्वोः॥ मत्वर्थे मासतन्वोरिति प्रत्ययार्थविशेषणम्। मत्वर्थग्रहणादेव प्रथमा समर्थविभक्तिरस्त्युपाधिका लभ्यते? इत्याह—प्रथमासमर्थादस्त्युपाधिकादिति।

यस्मिन्मासे नभस्यो मासः। सहस्यः। तपस्यः। मधव्यः। नभःशब्दोऽभ्रेषु वर्त्तते। तन्वां खल्वपि – ओजोऽस्यां विद्यते ओजस्या तनूः, रक्षस्या।

मासतन्वोरिति किम् ? मधुमता पात्रेण चरति।

मासतन्वोरनन्तरार्थे वा। मध्वस्मिन्नस्ति, मध्वस्मिन्ननन्तरमिति वा मधव्यो मासः।

* लुगकारेकाररेफाश्च वक्तव्याः *। लुक्तावत् – तपश्च तपस्यश्च। नभश्च नभस्यश्च। सहश्च सहस्यश्च। नपुंसकलिङ्गं छान्दसम्। अकारः – इषो मासः। ऊर्जो मासः। इकारः – शुचिर्मासः। – शुक्रो मासः।

पदमञ्जरी

रान्तः; 'द्वन्द्वे घि' इति पूर्वनिपातप्रसङ्गात्। *अनन्तरार्थे चेति*। न केवलं मत्वर्थमात्र इति चशब्दस्यार्थः।

*लुगकारेकाररेफाश्चेत्यादि*। 'रादिफः' इत्यत्र वर्णादिति न सम्बध्यते, तेन समुदायनिर्देशेऽपि इफः कृतः। अन्ये तु *रशब्दा* इति पठन्ति, प्रत्यय इत्यधिकारोऽकारादिभिः सम्बध्यते, न तु लुका। तपनं तपः, सहनं सहः, भावोऽसुन्, 'तदस्मिन्नस्ति' इति सूत्रेण विहितस्य यतो लुक्। कथं पुनरत्र नपुंसकत्वम्, यावता तद्धितलुकि सत्यभिधेयवल्लिङ्गेन भवितव्यम्? अत आह—*नपुंसकलिङ्गं छान्दसत्वादिति*। इट् = अन्नम्, इष्यमाणत्वात्। ऊर्क् = बलम्, 'ऊर्ज बलप्राणनयोः', ताभ्यामकारः प्रत्ययः—इषः, ऊर्जः। शोचनं शुक्, पूर्ववत्क्विप्, आतपातिरेकेण शरीरादेः शोषः, तद्वान्मासः शुचिः। एवं शुक्रः।

न्यासः

अनन्तरार्थे चेति। न केवलं मत्वर्थ एव प्रत्ययो वक्तव्यः।

ननु च तपःप्रभृतीनां प्रत्ययार्थमासादिवचनानामभिधेयलिङ्गवचनानि भवन्तीति पुंल्लिङ्गता प्राप्नोति, तस्याञ्च सत्याम् 'अत्वसन्तस्य चाधातोः' इति दीर्घेण भवितव्यम्, तत् कथं तपश्च सहश्च नभश्चेति प्रयोगः? इत्यत आह-नपुंसकलिङ्गं छान्दसत्वादिति। तत्रेति पुंल्लिङ्गेऽभिधेये नपुंसकलिङ्गमुपपद्यते। 'व्यत्ययो बहुलम्' इति लिङ्गव्यत्ययस्य च्छन्दसि विधानात्। अयं हि च्छान्दसः प्रयोगः। इडस्मिन् मासेऽस्तीति इषः। ऊर्गस्मिन् मासेऽस्तीति ऊर्जः। शुगस्मिन् मासेऽस्तीति शुचिः। शुग् वास्मिन् मासेऽस्तीति शुक्रः, 'चोः कुः' इति कुत्वम्।

अर्थग्रहणं किमर्थम्, यावता 'मतौ छः सूक्तसाम्नोः' इत्यत्र यथा 'मतौ' इत्युच्य-

## मघोर्ञ च ॥ १२९ ॥

मधुशब्दान्मत्वर्थे ञः प्रत्ययो भवति, चकाराद्यच्च। उपसंख्यानाल्लुक्च। माधवः, मधव्यः, मधुः। तन्वां खल्वपि — माधवा, मधव्या, मधुः तनूः ॥

## ओजसोऽहनि यत्खौ ॥ १३० ॥

'मत्वर्थे' इत्येव। ओजःशब्दान्मत्वर्थे यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये। ओजस्यमहः। ओजसीनमहः ॥

### पदमञ्जरी

अत्र छान्दसत्वादेवायस्मयादित्वद्भत्वाज्जश्त्वाभावः, तदेव छन्दोऽधि… लुगादीनां विधानाद्भाषायां शुचिशुकादीनामन्याय्यः प्रयोगः स्यात्, व्युत्प… न्तरेण वा, अव्युत्पन्ना वा नभस्यादयः शब्दा मासेषु वर्तन्ते। इषोर्जशब्दावशि-आद्यच्प्रत्ययान्तौ, मत्वर्थीये रप्रत्यये पृषोदरादित्वाज्जश्त्वाभावे शुक्र इति भवति, शोचतेरन्तर्भावितण्यर्थादौणादिके किप्रत्ययये कृते शुचिरिति भवति, शोचयति संतापयति प्राणिन इति कृत्वा। अभेदोपचारान्नभःप्रभृतीनां मासेषु वृत्तिः, नभस्यप्रभृतयस्तु 'तत्र साधुः' इति यदन्ताः, 'मतौ छः सूक्तसाम्नोः' इत्यत्र यथान्तरेणाप्यर्थग्रहणं मत्वर्थे प्रत्ययो लभ्यते, तथेहापि लप्स्यते; नार्थोऽर्थग्रहणेन ॥

*मघोर्ञ च* ॥ अत्रापि भाषायां मधुयोगान्मासो मधुः, तस्य प्रज्ञादिषु पाठादाद्युदात्तत्वम् ॥

*ओजसोऽहनि यत्खौ* ॥ यद्ग्रहणमनर्थकम्, 'खश्च' इत्येव वक्तव्यम्, चकारात्प्राकरणिको यद्भविष्यति? नैवं शक्यम्; 'खश्च' इत्युच्यमानेऽनन्तर-सूत्रविहितस्य ञस्य समुच्चयो विज्ञायेत, तस्माद्यद्ग्रहणम् ॥

### न्यासः

माने मत्वर्थे प्रत्यय उच्यते, तथेहापि लभ्यते, तस्मात् 'मतौ' इत्येवं कस्मान्नोक्तम्? सत्यमेतत्; विस्पष्टार्थमर्थग्रहणम् ॥

मघोर्ञ च ॥ ओजसोऽहनि यत्खौ ॥ असन्तत्वाद् 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्यये प्राप्ते मतुपोऽपवादैः सह समावेशात् मतुपि यत्खौ विधीयेते। अथ यद्ग्रहणं किमर्थम्, ननु 'ओजसोऽहनि ख च' इत्येवोच्येत, चकारेण यथाविहिते प्रत्यये विज्ञायमाने यदिति च भविष्यति? नैवं शक्यम्; चकारेण हि सन्देहः स्यात्— किमनेनानन्तरसूत्रविहितो ञोऽनुकृष्यते? अथ प्रकृतो यदिति? तस्मादसन्देहार्थं यद्ग्रहणं कर्तव्यम् ॥

## वेशोयशआदेर्भगाद्यल् ॥ १३१ ॥

'मत्वर्थे' इत्येव । वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद् वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे यल् प्रत्ययो भवति । लकारः स्वरार्थः । वेशोभगो विद्यते यस्य स वेशोभग्यः । यशोभग्यः ।

वेशः=इति बलमुच्यते । श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः । वेशश्चासौ भगश्च श्रीप्रभृतिर्वेशोभगः, सोऽस्यास्तीति वेशोभग्यः ॥

## ख च ॥ १३२ ॥

वेशोयशआदेर्भगान्तात्प्रातिपदिकान्मत्वर्थे खः प्रत्ययो भवति । योगविभागो यथासंख्यनिरासार्थ उत्तरार्थश्च । चकाराद्यत् । वेशोभग्यः, वेशोभगीनः । यशोभग्यः । यशोभगीनः ॥

## पूर्वैः कृतमिनयौ च ॥ १३३ ॥

'मत्वर्थे' इति निवृत्तम् । निर्देशादेव समर्थविभक्तिः । पूर्वशब्दात् तृतीयासमर्थात्कृतमित्येतस्मिन्नर्थे 'इन', 'य' – इत्येतौ प्रत्ययौ भवतः । चकारात्ख च । पथिभिः पूर्विणः । पूर्व्यः । पूर्वीणः ।

### पदमञ्जरी

ख च ॥ *योगविभाग इत्यादि* । केचित्पुनरेकमेव योगमधीयते । तथा च—'यथासंख्यमनुदेशः समानाम्' प्रत्ययविध्यर्थो बहुवचननिर्देशः, बहुवचनान्तात् प्रत्ययोत्पत्तौ यथासंख्यमिष्यत इति । *उत्तरार्थश्चेति* । उत्तरत्र खस्यैवानुवृत्तिर्यथा स्यात् , यतो मा भूदिति ॥

### न्यासः

वेशोयशआदेर्भगाद् यल् ॥ लित्करणं स्वरार्थम् ॥

ख च ॥ योगविभाग इत्यादि । यदि पूर्वसूत्र एव खग्रहणं क्रियते; द्वे प्रकृती, प्रत्ययावपि द्वावेवेति सामर्थ्याद् यथासंख्यं प्रसज्येत । तस्मात् तन्निरासार्थो योगविभागः । ननु 'यथासंख्यमनुदेशः समानाम्' इत्यत्र इह कस्मान्न भवति—'वेशोयशआदेर्भगाद् यल् ख च' इति दर्शयित्वा स्वरितेन लिङ्गेन यथासंख्यमित्युक्तम् ? तदेकयोगतामभ्युपेत्य । भवतु नामैकयोगः, तथापि यथासंख्यं न भवतीति दर्शनार्थम् , तत् कुतो यथासंख्यनिरासार्थो योगविभाग इति ? अत आह – उत्तरार्थश्चेति ॥

पूर्वैः कृतमिनयौ च ॥ पूर्वैः कृतमिनयौ चेति । ख एव यथा स्यात्, यन्मा

'पूर्वैः' इति बहुवचनान्तेन पूर्वपुरुषा उच्यन्ते । तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा ॥

अद्भिः संस्कृतम् ॥ १३४ ॥

निर्देशादेव समर्थविभक्तिः । अप्शब्दातृतीयासमर्थात् 'संस्कृतम्' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । यस्येदमप्यं हविः । अद्भिः संस्कृतमिति ॥

सहस्रेण संमितौ घः ॥ १३५ ॥

निर्देशादेव समर्थविभक्तिः । सहस्रशब्दात्तृतीयासमर्थात् 'सम्मितौ' इत्येतस्मिन्नर्थे घः प्रत्ययो भवति । सम्मितस्तुल्यः सदृशः । अयम् सहस्रियः । सहस्रतुल्य इत्यर्थः ।

केचित्तु 'समितौ' इति पठन्ति । तत्रापि समित्या सम्मित एव लक्षयितव्यः, तत्र छन्दसि प्रयोगदर्शनात् ॥

पदमञ्जरी

*पूर्वैः कृतमिनियौ च* ॥ *बहुवचनान्तेनेत्यादि* । बहुवचनान्तात्प्रत्ययविध्यर्थो बहुवचननिर्देशः । बहुवचनान्तात्प्रत्ययोत्पत्तौ यथा प्रशंसा गम्यते — पूर्वैर्बहुभिः क्रियत इति प्रतीतेः, तेन पूर्वशब्दश्च वृद्धेषु पुरुषेषु प्रवर्तत इत्यर्थः ॥

*सहस्रेण सम्मितौ घः* ॥ *निर्देशादेव समर्थविभक्तिरिति* । सा पुनस्तुल्यार्थयोगे तृतीया । *सम्मित एव लक्षयितव्य इति* । किं कारणम्? इत्याह—*तत्रेति* । छन्दसि हि तत्र सम्मिते प्रयोगो दृश्यते ॥

न्यासः

भूत् । पूर्वैरिति बहुवचनान्तेनेत्यादि । 'पथिभिः पूर्वैः' इत्येवमादिभिर्वेदवाक्यैः पूर्वपुरुषकृतत्वेन यदा प्रशंसां प्रतिपादयितुं निष्ठा साध्वेव शक्यते विज्ञातुम्, तदा पूर्वपुरुषाभिधायिनः पूर्वशब्दात् प्रत्यय उपपद्यते । तस्मात् पूर्वैरिति बहुवचनान्तेन पूर्वपुरुषा अभिधीयन्ते । छन्दसामर्थ्यपरत्वाद् बहुवचनस्य । तेन पूर्वपुरुषाणां पन्था व्यवस्थित सम्पद्यत इति दर्शयितुमाह—तत्कृताः पन्थान इति ॥

अद्भिः संस्कृतम् ॥ संस्कृतमिति प्राग्वहतीये ठकि प्राप्ते यद्विधीयते । निर्देशादेव समर्थविभक्तिरिति । तृतीया । सा पुनःसंस्करणक्रियायामपां करणत्वात् करणे वेदितव्या ॥

सहस्रेण सम्मितौ घः ॥ निर्देशादेव समर्थविभक्तिरिति । तृतीया । सा पुनस्तुल्यार्थयोगे वेदितव्या । तत्रापीति । सम्मित्या = सादृश्येन धर्मेण सम्मित एव धर्मो लक्षयितव्यः । किं कारणम्? इत्याह—तत्र सम्मित एव वैदिकप्रयोगे दृश्यते सम्मितिमात्रे ॥

## मतौ च ॥ १३६ ॥

मत्वर्थे च सहस्रशब्दाद् घः प्रत्ययो भवति। सहस्रमस्य विद्यते सहस्रियः। 'तपःसहस्राभ्यां विनीनी', 'अण् च' इत्यस्यापवादः ॥

## सोममर्हति यः ॥ १३७ ॥

निर्देशादेव समर्थविभक्तिः। सोमशब्दाद् द्वितीयासमर्थाद् 'अर्हति' इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। सोममर्हन्ति सोम्या ब्राह्मणाः। यागार्हा इत्यर्थः। यति प्रकृते यग्रहणं स्वरे विशेषः ॥

## मये च ॥ १३८ ॥

सोमग्रहणम्, यश्चानुवर्त्तते। 'मये' इति मयडर्थो लक्ष्यते। सोमशब्दान्मयडर्थे यः प्रत्ययो भवति।

आगतविकारावयवप्रकृता मयडर्थाः – 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः', 'मयट् च', 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः', 'तत्प्रकृतवचने मयट्' इति। तत्र यथायोगं समर्थविभक्तिः। सोम्यं मधु पिबन्ति। सोममयमित्यर्थः ॥

### पदमञ्जरी

*सोममर्हति यः* ॥ 'छन्दसि' इत्यधिकाराद्भाषायां सोम्यशब्दस्य साधुत्वं चिन्त्यम्—'आयुष्मान्भव सोम्येति वाच्यो विप्रोऽभिवादने' इति। केचित्सौम्येति वृद्धिं पठन्ति। सौम्यशब्दो दर्शनीयवचनः सुखादिवत् ॥

*मये च* ॥ *मय इति मयडर्थो लक्ष्यते इति*। शब्दे कार्यस्यासम्भवात्। *तत्र यथायोगं समर्थविभक्तिरिति*। आगते पञ्चमी, विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा ॥

### न्यासः

मतौ च ॥ शब्दे कार्यासम्भवान् मतुप्शब्देन मत्वर्थो लक्ष्यत इत्याह—मत्वर्थ इत्यादि। मत्वर्थे च प्रत्ययविधानात् प्रथमासमर्थादस्त्युपाधिकात् प्रत्ययो विज्ञायत इत्याह—सहस्रमस्य विद्यत इति ॥

सोममर्हति यः ॥ 'तदर्हति' इत्यर्हार्थे ठकि प्राप्ते यो विधीयते। स्वरे विशेष इति। यत्याद्युदात्तत्वं स्यात्। यप्रत्यये तु सत्यन्तोदात्तत्वं भवति ॥

मये च ॥ रूप्यमयटोऽपवादो योग इति। मय इति मयडर्थो लक्ष्यत इति। शब्दे कार्यासम्भवादिति भावः। तत्र यथायोगं समर्थविभक्तिरिति। तत्रागतार्थे पञ्चमी, विकारावयवयोः षष्ठी। प्रकृतवचने प्रथमेति यथायोगार्थः ॥

मधोः ॥ १३९ ॥

शब्दो निवृत्तः । मधुशब्दान्मयडर्थे यत्प्रत्ययो भवति । मधव्यान् स्तोकान् । मधुमयानित्यर्थः ।

वसोः समूहे च ॥ १४० ॥

वसुशब्दात्समूहे वाच्ये यत्प्रत्ययो भवति चकारान्मयडर्थे च । यथायोगं समर्थविभक्तिः । वसव्यः समूहः । मयडर्थो वा ।

* अक्षरसमूहे छन्दसः स्वार्थे उपसंख्यानम् * । ओश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः – एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञो मन्त्रे विहितः । सप्तदशाक्षराण्येव छन्दस्य एव इत्यर्थः । छन्दःशब्दादक्षरसमूहे वर्त्तमानात्स्वार्थे यत्प्रत्ययः ।

* वसुशब्दादपि यद्वक्तव्यः * । हस्तौ गृहीतस्य बहुभिर्वसव्यैः । वसुभिरित्यर्थः । अग्निरीशे वसव्यस्य । वसोरित्यर्थः ।

नक्षत्राद् घः ॥ १४१ ॥

नक्षत्रशब्दाद्घः प्रत्ययो भवति स्वार्थे । 'समूहे' इति नानुवर्त्तते । नक्षत्रियेभ्यः स्वाहा ॥

सर्वदेवात्तातिल् ॥ १४२ ॥

पदमञ्जरी

वसोः समूहे च ॥ ओश्रावयेत्यादिकस्याक्षराणि गण्यन्ते, सप्तदशात्मकश्छन्दस्योऽक्षरसमूहः । *प्रजापतिः* प्रजापतिना दृष्टः । हस्तौ पृणस्वेति पृणातिः पूरणकर्मा ॥

*नक्षत्राद् घः ॥ समूह इति नानुवर्तत इति* । तेनानिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय उत्पद्यत इति भावः ॥

न्यासः

मधोः ॥ मयडर्थ आगते प्रकृतवचने यथायोगं रूप्यमयटोः प्राप्तयोरिदं विधीयते । तत्र मयटो हि 'द्व्यचश्छन्दसि' इति प्राप्तस्य 'नोत्वद्वर्ध्रबिल्वात्' इति प्रतिषेध उच्यते ॥

वसोः समूहे च ॥ अत्रापि मयडर्थे यथायोगं रूप्यमयटोः, समूहे त्वणि ढकि च यद्विधीयते । वसुशब्दोऽप्ययमस्ति देववचनः—वसवो देवा इति, अस्ति च धनवचनः—वसु धनमिति; तत्र देवतावचनात् समूहविवक्षायामौत्सर्गिकोऽण् प्राप्नोति, धनवचनत्वा-

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति, छन्दसि विषये स्वार्थिकः। सर्वतातिः। देवतातिः॥

## शिवशमरिष्टस्य करे ॥ १४३ ॥

करोतीति करः, प्रत्ययार्थः। तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः। शिवादिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः 'करे' इत्येतस्मिन्नर्थे तातिल्प्रत्ययो भवति। शिवं करोतीति शिवतातिः। शन्तातिः। अरिष्टतातिः॥

## भावे च ॥ १४४ ॥

भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल्प्रत्ययो भवति। शिवस्य भावः शिवतातिः। शन्तातिः। अरिष्टतातिः।

यतः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययोऽधिक्रियते॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
चतुर्थाध्यायस्य चतुर्थः पादः

### पदमञ्जरी

*शिवशमरिष्टस्य करे ॥ करोतीति कर इति। पचाद्यच्। सामर्थ्यलभ्या षष्ठी* समर्थविभक्तिरिति। सा पुनः कृद्योगलक्षणा कर्मणि। भाषायां शिवतातिप्रभृतीनां साधुत्वं चिन्त्यम्।

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
चतुर्थस्याध्यायस्य चतुर्थः पादः*

### न्यासः

तल्लक्षणष्ठक्। यथायोगमित्यादीति। समूहे मयडर्थे च षष्ठ्यादिका सामर्थ्यलब्धेति॥ नक्षत्राद् घः॥ सर्वदेवात् तातिल॥ शिवशमरिष्टस्य करे॥ भावे च॥

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थाध्यायस्य चतुर्थः पादः

यत्पञ्जिकानावमिमामासाद्य सुधियः सुखम्।
तरन्ति काशिकाम्भोधिं स जिनेन्द्रो जयत्ययम्॥

❀ समाप्तोऽयं चतुर्थोऽध्यायः ❀

व्याख्याद्वयसमाश्लिष्टा काशिका विदुषां मुदे ।
काशिकस्वामि-शुक्लाभ्यां प्रणिधानेन संस्कृता ॥

